पूज्यपाद श्रीवृद्धिचन्द्रमुनिपुङ्गवपादपद्मेभ्यो नमः । आगमगच्छीयोदयधर्मगणिविरचितः

# । धर्मकल्पद्रुमः ।

पंन्यासजी श्री भक्तिविजय प्रेरणया

संशोधकः—शास्त्री जेठालाल हरिभाई.

प्रकाशिका—श्री जैन धर्म प्रसारक सभा—भावनगर.

द्वितीया आवृत्तिः विक्रम सं. १९८

आ श्री...वीरसंवत् २४५४ ग्रन्थिर
द्वारा सप्रेम भेट ता

पण्यम् रु. १–८–०



भावनगर—आनंद प्री. प्रेसमां शाह गुलाबचंद लल्लुभाईए छाप्युं.

अस्य ग्रन्थस्य मुद्रापणे पूज्य श्रीविजयधर्मसूरिपादान्तेवासिनां पन्न्यासश्री भक्तिविजयपादानां सदुपदेशेन द्रव्यसाहाय्यकारिणां धनिकानां नामानि—

२१०) श्री पोरबन्दर निवासी धार्मिकः कश्चिदधुना मुम्बापुरीवास्तव्यः ।

१००) श्रीदेवगाणा ग्रामवास्तव्य सकल श्रीसंघः

१००) श्री शीहोर ग्राम वास्तव्य शा. वनमाली कानजीत्यस्य धर्मपत्नी बाइ संतोष.

५०) प्रथम शीहोर संप्रति श्री वला वास्तव्य व्हेन अंबा. शा. गुलाबचंद जेठालालस्य धर्मपत्नी—

एवं साहाय्यमिलनेऽपि कार्येऽस्मिन् व्ययबाहुल्यात् केषांचिद्ग्रन्थानां विनामूल्येन दातव्यत्वाच्च ग्रन्थस्यास्य विक्रयो भविता ।

# ॥ प्रस्तावना ॥

ॐ अर्हं ॥ विदितमेतज्जिनशासने द्रव्यानुयोग–गणितानुयोग–चरणकरणानुयोग–धर्मकथानुयोगाभिधानुयोगचतुष्टयम् । तत्रापि सद्धर्मावाप्तौ धर्मकथानुयोग एव प्रायः सर्वभव्यजीवोपकारकः सर्वतीर्थकराणामपि देशनादौ तथाप्रवृत्तत्वात्, धर्मकथानुयोग एव च शेषानुयोगत्रिकस्यापि तत्तत्प्रसङ्गानुसारतस्तत्तत्स्थाने सरलतया प्रदर्शितत्वात् । अत एव प्रचुरतरा ग्रन्था एतद्विषयाः प्रभूततरैराचार्यवर्यैर्ग्रथिता दरीदृश्यन्ते, तेषु चायमेकतमो धर्मकल्पद्रुमनामा विरचित आगमगच्छविभूषणैः श्रीउदयधर्मगणिभिः । पूज्याश्चैते कदा कुत्र चेमं निर्मितवन्तः कांस्कांश्चान्यानित्यादि किं जन्मभूम्यादि चेति जिज्ञासव एव वयं नोपलब्धवन्त इह प्रशस्त्यभावादन्यत्र तददृष्टत्वाच्च, अल्पतरा गुरुपरंपरा च ग्रन्थान्ते तैरेव लिखितत्वाज्ज्ञायत एवेति ।

सान्वर्थस्यास्य धर्मकल्पद्रुमस्य चतस्रः शाखा अष्टौ पल्लवाश्च वर्तन्ते । तत्रादौ ग्रन्थारम्भे प्रथमपल्लवे श्रीआदिनाथ–शान्ति–नेमि–पार्श्व–वीराणामन्येषां च तीर्थकृतां गौतमगणधरस्य वाग्देव्याश्च स्मरणादिपुरस्सरं मङ्गलं कृत्वा धर्मस्य माहात्म्यं मिथ्याधर्मस्य चानुपादेयत्वं विस्तरेण दर्शितम् । दानादिधर्मस्य पुष्ट्यर्थं प्रतिपल्लवं प्रासङ्गिककथानकानि स्थाने स्थाने स्वपरसमयोक्तसुभाषितश्लोकाश्च प्रभूततरा लिखिताः प्राकृतकाव्यानि भाषाकाव्यान्यपि च । प्रतिपल्लवं चादौ संक्षिप्तमङ्गलमपि कृतमस्ति । दानादिस्वस्वशाखावर्णनप्रसङ्गे तत्तद्धर्म एकान्तहितसाधकत्वेन दृढीकृतः । तत्र दानधर्माभिधा प्रथमशाखा पल्लवत्रयेण विस्तृता । शीलधर्मनाम्नी द्वितीयशाखा चतुर्थ-

पञ्चमपल्लवाभ्यां पल्लविता । तपोधर्माख्यतृतीयशाखायां एक एव षष्ठः पल्लवः, भावनाधर्माभिधचतुर्थशाखायां च सप्तमाष्टमौ पल्लवौ रचितौ । चतुर्ष्वपि धर्मेषु चतस्रो मुख्यकथा अवान्तरप्रासङ्गिककथासहिताः कथिताः, ताश्चानुक्रमणिकातो ज्ञेयाः ।

यद्यप्यस्मिन् ग्रन्थे नास्ति कोऽपि प्रधानो रसो धर्मरसं विना, नास्ति तादृशोऽलङ्कारगणो नास्ति च तादृशो वर्णनाधिकारः काठिन्यचमत्कृतियुतस्तथापि सरलभाषया कथारसो धर्मरसश्चैव तादृशः पोषितो येन संस्कृतभाषाभ्यासिनां धर्मजिज्ञासूनां चायं ग्रन्थो महोपकारी स्यादिति निश्चयः ।

अयं ग्रन्थः पुरा विक्रमार्के १९७३ वर्षे 'गुजराती' मुद्रणालये श्रेष्ठि श्रीदेवचन्द्र लालभाई जैन पुस्तकोद्धारसंस्थया मुद्रापितः, तथापि तस्मिन् सत्साधनाभावेन स्थाने स्थाने बहवः स्खलना दृष्ट्वा श्री विजयधर्मसूरीश्वरशिष्येण पन्न्यास श्रीभक्तिविजयेन किञ्चिच्छुद्धतरं लिखितपुस्तकं मेलयित्वा तच्छुद्धिविषये शास्त्री जेठालालशर्मणा यत्नः कारितस्तथापि क्वचित् एकद्वादिका स्खलनाशुद्धिः साधनाभावादेव न जातेति मन्यामहे, मन्महे च क्वचिद्ग्रन्थकर्तृस्खलनाशङ्काम् । तथा च मुद्रणालयस्य प्रुफवाचकस्य च प्रमादादिना संभवेत् स्खलना । तत्सर्वं विद्वद्भिः सद्भिः क्षमाधनैः शोधयित्वा ज्ञापनीयं, यथा पुनरावृत्तिसमये दत्तावधाना भवेम । इति शम् ॥

संवत् १९८४ कार्तिकी पूर्णिमा.—श्री **जैनधर्मप्रसारक सभा,—भावनगर.**



# अनुक्रमणिका.

॥ श्रीवीतरागाय नमः ॥

शास्त्रविशारदजैनाचार्य्यश्रीमद्विजयधर्मसूरिगुरुभ्यो नमः

श्रीमदुदयधर्मगणिविरचितम्–

# श्रीधर्मकल्पद्रुमनाम महाकाव्यम्.

## अथ प्रथमः पल्लवः

श्रियं दिशतु वो नित्यं, श्रीनाभेयजिनेश्वरः । युगादौ प्रकटीचक्रे, धर्म्मो येन सुखावहः ॥ १ ॥ शान्तिनाथो जिनः शान्त्यै, भवताद्भवपारदः । यस्य कान्त्या जितो मेरुस्तिष्ठत्यद्यापि निश्चलः ॥ २ ॥ राज्यं प्राज्यमपि त्यक्त्वा, जित्वा यो मदनं भटम् । भेजे चारित्रसाम्राज्यं श्रीनेमिं नौमि तं मुदा ॥ ३ ॥ दुष्टरिष्टहरो लोके, मनोवाञ्छितदायकः । श्रीपार्श्वः पातु वो नित्यं, जीरापल्लिविभूषणः ॥ ४ ॥ आत्मनोऽभ्यधिकं दृष्ट्वा, सिंहो यस्य पराक्रमम् । करोत्यङ्कमिपात्सेवां, स वीरोऽस्तु वरप्रदः ॥ ५ ॥ श्रीअजितादयोऽप्यन्ये, जिना विजितमन्मथाः । मोक्षलक्ष्मीप्रदातारो, भवन्तु भविनां मुदे ॥ ६ ॥ श्रीकामधेनुकल्पद्रुचिन्तामणिसमः सदा । चिन्तितार्थप्रदो ध्येयः, श्रीगौतमगणाधिपः ॥ ७ ॥ यस्याः प्रसादतो ग्रन्थान् रचयन्ति कवीश्वराः । सा(शा)रदा वरदा सास्तु, शास्त्रसागरपारदा ॥८॥ धर्म्मः शर्मप्रदो लोके, धर्मो दुष्कर्मघातकः । धर्म्मो माता

पिता स्वामी, धर्म्मो जयति सर्वदा ॥९॥ त्रिविष्टपमयी भूमिः, पुरं श्रीजैनशासनम्। विनयक्षान्तिसद्वृत्त–पवित्रजनपूरितम् ॥ १० ॥ ज्ञानपीठं दृढस्थानं, तद्व्याख्या वेदिका वरा। सिंहासनं विचारः स्यात्, सम्यक्त्वं छत्रमुत्तमम् ॥ ११ ॥ पट्टदेवी मनःशुद्धिः, कुमारः सुकृतोदयः। विवेकश्रीमहामात्यः, सिद्धान्तः सन्धिकारकः ॥ १२ ॥ सङ्घः सैन्यं भवेद् यस्य, सोऽयं श्रीधर्म्मभूपतिः। संसेव्यतां प्रतिदिनं दत्ते रत्नत्रयीं यथा ॥ १३ ॥ चतुर्भिः कलापकम् ॥ अस्य श्रीधर्म्मभूपस्य, यो हि नाज्ञां विलङ्घयेत्। सोऽवाप्नोति परं सौख्यं, विषमेऽपि कलौ युगे ॥ १४ ॥ यतः—निर्बीजा पृथिवी गतौषधिरसा विप्रा विकर्म्मस्थिता, राजानोऽर्थपराः कुधर्मनिरता नीचा महत्वं गताः। भार्या भर्तृषु वञ्चनैकहृदयाः पुत्राः पितुर्द्वेषिणः, इत्येवं समुपागते कलियुगे धन्यः स्थितिं नो त्यजेत् ॥ १५ ॥ एवं हि विषमे काले, यो धर्म्मं नैव मुञ्चति। स संसारसमुद्रस्य, पारगामी भवत्यलम् ॥ १६ ॥ यतः श्लोकः–धर्म्माज्जन्म कुले कलङ्कविकले जातिः सुधर्म्मात्परा, धर्म्मादायुरखण्डितं गुरु वलं धर्म्माच्च नीरोगता। धर्माद्वित्तमनिन्दितं निरुपमा भोगाः सुकीर्त्तिः सुधीः, धर्मादेव च देहिनां प्रभवतः स्वर्गापवर्गावपि[1] ॥ १७ ॥ यतः–बन्धुर्वैरिजनायते गुणवती कान्ता च सर्प्पायते, मित्रं चापि खलायते गुणनिधिः पुत्रोऽप्यमित्रायते। श्रीखण्डं दहनायते श्रवणयोः सूक्तं तु शूलायते, जाते पुण्यविपर्यये तनुभृतामर्थोऽप्यनर्थायते ॥ १८ ॥ एवं लोके फलं व्यक्तं, दृश्यते पुण्यपापयोः। विचार्यैतत्ततो धीमान्, यथा लाभस्तथा चरेत् ॥ १९ ॥ यतः–कृत्याकृत्यविचारस्य, ज्ञातारः

---

१ यद्वा–धर्मो मङ्गलमुत्तमं नरसुरश्रीभुक्तिमुक्तिक्षमो, धर्मः स्निह्यति बन्धुवत्प्रतिदिनं कल्पद्रुवद्वाञ्छितम्। धर्मः सद्गुणसंक्रमे गुरुरिव स्वामीव राज्यप्रदो, धर्मः पाति पितेव वत्सलतया मातेव पुष्णाति च ॥ १ ॥

स्वयमुत्तमाः । मध्यमाश्चान्यकथनात्, कथंचिन्नाधमाः पुनः ॥२०॥ अन्यच्च–सिंहस्य सारमेयस्य, तुरङ्गस्य खरस्य च। सुवर्णस्य पित्तलस्य, करिणः कासरस्य च ॥ २१ ॥ इन्द्रनीलस्य काचस्य, मरालस्य बकस्य च । कल्पद्रोश्च करीरस्य, तेजसस्तमसोऽपि च ॥ २२ ॥ यथा दुग्धस्य तक्रस्य, दृश्यते महदन्तरम् । तथा श्रीजैनधर्मस्य, मिथ्याधर्मस्य चान्तरम् ॥ २३ ॥ ॥ त्रिभिर्विशेषकम् ॥ क्वैरावतः क्व च हुण्डः[1] ?, क्व समुद्रः क्व गोष्पदम् ? । क्व गरुत्मान् क्व मशकः ?, क्व नागेशः क्व राजिलः ? ॥२४॥ क्व पीयूषं क्व सौवीरं ? क्व मेरुः क्व च सर्षपः ? । क्व श्रीजिनोदितो धर्मः, क्व चान्यो हिंसया युतः ? ॥२५॥ काव्यम्–पृथ्वीकायाम्बुकाया जिनवरगदितास्तैजसा वायुकाया, वानस्पत्याश्च जीवास्त्रिभुवनविदिता द्वीन्द्रियाद्यास्त्रसाश्च । रक्ष्यन्ते बन्धुबुद्ध्या निजसदृशतया यत्र तु प्राणिभूता, धर्माणामेष चूडामणिरिव जयति श्रीजिनेशस्य धर्मः ॥ २६ ॥ आकृष्टिविद्या लक्ष्मीणां, वज्रं दारिद्र्यभूभृतः । कार्मणं शर्मणामेकं, धर्मः स्वर्गापवर्गदः ॥ २७ ॥ धर्मस्यैतस्य माहात्म्यमुच्यते लेशतो मया । पादप्रसारणं यस्माद्भवेत्सौख्येनुमानतः[2] ॥ २८ ॥ पूर्वं कविवरा आसन्, आप्तश्रीभारतीवराः । क्षीराब्धिसन्निभा ग्रन्था, भूरिशस्तैर्विनिर्मिताः ॥ २९ ॥ तेषां हि स्पर्धया ग्रन्थं, कुर्वन् यास्यामि हास्यताम् । इच्छन् सत्फलमूर्ध्वस्थं, ग्रहीतुमिव वामनः ॥ ३० ॥ स्पृहां कुर्वे विना नावं, तरीतुं फलकेऽम्बुधिम् । स्वल्पबुद्धिरहं किञ्चित्–धर्मव्याख्याकृतेच्छया ॥ ३१ ॥ वातोद्धायितपानीय–कणानिच्छन्ति वा यथा । ग्रहीतुं कोऽपि वा नीर–संस्थितं चन्द्रमण्डलम् ॥ ३२ ॥ तथाहं मुखरीभूय, मूर्खः स्वल्पश्रुतोऽपि च । नवीनग्रन्थकरणे, कुर्वे वाञ्छां गतत्रपः ॥३३॥ युग्मम् ॥ तथापि गुरुसान्निध्यात्, श्रीसङ्घानुमतेन च ।

१ हुडः, २ शय्यानुमा० ।

करोमि मुग्धबोधार्थं, सुगमं सुकथानकम् ॥ ३४ ॥ क्षन्तव्यं तद्बुधैः सर्वं, मया मूर्खेण यत्कृतम् । दयां विधाय दीनस्य, दोषो वाच्यो न तैः कदा ॥ ३५ ॥ सन्तः स्वभावतो विश्वे, दोषाच्छादनतत्पराः । निर्मिता जगतः कर्त्रा, महीमण्डनमौक्तिकाः ॥ ३६ ॥ यतः—पूर्वशास्त्रानुमानेन, धर्मकल्पद्रुमाभिधम् । धर्माख्यानमथो वच्मि, नवपल्लवसंयुतम् ॥ ३७ ॥ बीजं जीवदया यस्य, सद्वृत्तं कन्द उच्यते । लज्जा स्तम्भो दृढो ज्ञेयः, सद्बुद्धिस्त्वक्प्रकीर्त्तिता ॥ ३८ ॥ दानशीलतपोभावा, मुख्यशाखाचतुष्टयम् । विचाराचारविनयाः, प्रतिशाखाशतं मतम् ॥ ३९ ॥ जीवाजीवादितत्त्वानि, जिनपूजादिकं पुनः । भावना द्वादशैवं च, पत्राणि विविधान्यपि ॥४०॥ विवेकादिगुणौघोऽस्य, नवीनः किसलोच्चयः । सज्जन्मस्वर्गसौख्यानि, यस्य पुष्पाणि भूतले ॥ ४१ ॥ अक्षयं सुखमाप्नोति, नरो मोक्षस्य यत्सदा । फलं पुण्यतरोरेतत्कथितं श्रीजिनागमे ॥ ४२ ॥ मित्रपुत्रकलत्राणि, बान्धवाः स्वजना धनम् । धान्यं चेति गृहस्थानां, छाया यस्य सुशीतला ॥४३॥ मनःशुद्धिपयःपूराद्—वृद्धिं गच्छति यः सदा । दीनानाथविहङ्गानामाधारः सर्वदापि यः ॥ ४४ ॥ यत्फलास्वादनं रम्यं, जीवाः कुर्वन्त्यनेकशः । सप्तक्षेत्रमयी शुद्धा, भूमिर्दोषविवर्जिता ॥ ४५ ॥ भो भव्याः ! श्रूयतां सम्यङ्—मानसे दम्भवर्जिते । धर्मकल्पद्रुमः सोऽयं, सेवनीयः सदादरात् ॥ ४६ ॥ नवभिः कुलकम् ॥ श्रेयःसौभाग्यमर्घ्यं ललितयुवतयश्चित्रवस्त्राणि हारा, छत्रं चञ्चत्तुरङ्गा मदकलकरिणः काञ्चनं शुद्धगेहम् । सौख्यं लक्ष्मीः प्रभूता प्रवरकनकभाः शुभ्रकीर्तिश्च लोके, श्रद्धा सद्धर्ममार्गे भवति ननु फलं धर्मकल्पद्रुमस्य ॥४७॥ अथ च—सप्तविंशतिभानिन्दु—वत्सप्तविंशतिं भवान् । भ्रान्त्वा भास्वत्पदं भेजे, यः श्रीवीरः श्रियेऽस्तु वः ॥ ॥ ४८ ॥ एकदा श्रीमहावीरः, पावयन् पृथिवीतलम् । सुरसञ्चारितस्वर्ण—कमलेषु पदौ न्यसन् ॥ ४९ ॥ विहरन् वसुधापीठे,

भव्यसत्वान् प्रबोधयन् । ययौ स्वजन्मनः स्थाने, ग्रामे क्षत्रियकुण्डले ॥ ५० ॥ युग्मम् ॥ सुरासुरनरैर्युक्तः, सेवितो गौतमादिभिः । तत्रैव समवासार्षीत्, सिद्धार्थोद्यानभूमिषु ॥ ५१ ॥ देवैः समवसरणं, रचितं विधिवत्तदा । सहस्रांशुरिव स्वामी, पूर्वसिंहासनं श्रितः ॥५२॥ चतुःषष्टिः सुरेन्द्राश्च, मिलितास्तत्क्षणादपि । देवदुन्दुभिमुख्यानि, तथा वाद्यान्यवादयन् ॥५३॥ प्रभोरागमनं ज्ञात्वा, वनपालेन वेगतः । नन्दिवर्धनभूपालो, विज्ञप्तो विनयादिति ॥ ५४ ॥ स्वामिन् वर्धाप्यसेऽत्यन्तं, कल्याणं भवतात्तव । जिनेन्द्रः श्रीमहावीरो, भवद्भ्राता समागतः ॥ ५५ ॥ उल्लसद्रोमकूपोऽथ, वनपालाय भूपतिः । सार्धद्वादशलक्षाणि, सुवर्णस्य ददौ मुदा ॥ ५६ ॥ दत्तः पश्चाङ्गप्रासादः, स्वर्णजिह्वान्वितः पुनः । ससैन्यः सोत्सवं राजा, ययौ वन्दनहेतवे ॥ ५७ ॥ तस्मिन्नेव क्षणे तत्र, राजा श्रीहस्तिपालकः । अकस्मादागमद्दक्षः, पापापुर्या नरेश्वरः ॥ ५८ ॥ श्रीवीरागमनं ज्ञात्वा, भूत्वा प्रमोदमेदुरः । तदा च श्रेणिकः श्रीमान्, आगतो मगधेश्वरः ॥ ५९ ॥ तत्र त्रयोपि भूपाला, मिलिता वीरवन्दने । स्वर्णं सौगन्धिकं जातं, हर्षितो नन्दिवर्धनः ॥ ६० ॥ यतः—सद्यः प्रीतिकरो नादः, सद्यः प्रीतिकराः स्त्रियः । सद्यः शीतहरो वह्निः, सद्यः पापहरो जिनः ॥६१॥ पञ्चाभिगमपूर्वञ्च, दत्वा तिस्रः प्रदक्षिणाः । ते त्रयोऽप्यथ संभूय, वीरपादान् ववन्दिरे ॥ ६२ ॥ दर्शनाद्देवदेवस्य, ते भूपा हृष्टमानसाः । स्तुतिञ्च चक्रिरे भक्त्या, योजयित्वा करौ निजौ ॥ ६३ ॥ सुप्रभातं सुदिवसं, कल्याणं मेऽद्य मङ्गलम् । यद्वीतराग ! दृष्टोऽसि, त्वं त्रैलोक्यदिवाकरः ॥ ६४ ॥ अद्य छिन्ना मोहपाशा, अद्य रागादयो जिताः । अद्य मोक्षसुखं जात-मद्य तीर्णो भवार्णवः ॥६५॥ मनः प्रसन्नं संपन्नं, नेत्रे पीयूषपूरिते । अहं स्नातः सुधाकुण्डे, जिनेन्द्र ! तव दर्शनात् ॥ ६६ ॥ इति स्तुत्वा जगन्नाथं, कुर्वाणाः सफलं भवम् । उपविष्टा यथा-

स्थानं, यथाक्रममर्मी नृपाः ॥ ६७ ॥ सुरासुरनृसाधूनां, सभा द्वादश पूरिताः । चतुर्वक्त्रेण वीरेण, प्रारेभे धर्मदेशना ॥ ॥ ६८ ॥ काव्यं—आग्नेय्यां गणभृद्विमानवनिताः साध्व्यस्तथा नैर्ऋते, ज्योतिर्व्यन्तरभावनेशदयिता वायव्यगास्तत्प्रियाः । ईशान्यां च विमानवासिनरनार्यः संश्रिता यत्र तत्, जैनस्थानमिदं रतु(चतु)स्त्रिपरिषत्संभूषितं पातु वः ॥ ६९ ॥ भो भव्याः श्रूयतां सम्यक्, कृत्वा तु स्थिरमानसम् । दुर्लभं दशदृष्टान्तै–र्मानुष्यं चोत्तमं कुलम् ॥७०॥ दुष्प्रापं प्राप्य मानुष्यं, कार्यं तत्किश्चिदुत्तमैः । मुहूर्त्तमेकमप्यस्य, नैव याति यथा वृथा ॥ ७१ ॥ दिवा यामचतुष्केण, कार्यं किमपि तन्नरैः । निश्चिन्तहृदयैर्येन, यामिन्यां सुप्यते सुखम् ॥ ७२ ॥ तत्किञ्चिदष्टभिर्मासैः, कार्यं कर्म विवेकिना । एकत्र स्थीयते येन, वर्षाकाले यथासुखम् ॥ ७३ ॥ यौवनं प्राप्य सर्वार्थ–सारसिद्धिनिबन्धनम् । तत्कुर्यान्मतिमान् येन वार्धके सुखमश्नुते ॥ ७४ ॥ अर्जनीयं कलावद्भिस्तत्किञ्चिज्जन्मनामुना । ध्रुवमासाद्यते येन, शुद्धं जन्मान्तरं पुनः ॥७५॥ प्रतिसंवत्सरं ग्राह्यं, प्रायश्चित्तं गुरोः पुरः । शोध्यमानो भवेदात्मा, येनादर्श इवोज्ज्वलः ॥ ७६ ॥ प्रतिवर्षं सहर्षेण, निजवित्तानुमानतः । पूजनीयाः सधर्माणो, धर्माचार्याश्च धीमता ॥ ७७ ॥ यतः— सम्यक्त्वं भज मुञ्च कुत्सितमतं मन्यस्व देवं जिनम्, सत्साधून् गुरुतां नय त्यज मदं मा जन्तुनिन्दां कृथाः । मा कार्षीः परतप्तिमुत्तमगुणैः सङ्गं सुशीलात्मकै–रात्मारामतया भजस्व न शिवं दूरे तव स्थास्यति ॥ ७८ ॥ मनोवचनकायाश्च, वर्त्तन्ते यस्य निर्मलाः । संसारं स समुत्तीर्य, पारगामी भवत्यलम् ॥ ७९ ॥ यतः— मन एव मनुष्याणां, कारणं बन्धमोक्षयोः । बन्धस्य विषयासङ्गि, मुक्तेर्निर्विषयं मनः ॥ ८० ॥ दानं पूजा तपश्चैव, तीर्थसेवा श्रुतं तथा । सर्वमेव वृथा तस्य, यस्य शुद्धं न मानसम् ॥ ८१ ॥ स्वजने स्नेहसंबन्धे, रिपुवर्गेऽपकारिणि । स्यात् तुल्यं

ते यदा चित्तं, तदा ते परमं सुखम् ॥ ८२ ॥ शब्दादिविषयग्रामे, सुन्दरेऽसुन्दरेऽपि वा । एकाकारं यदा चित्तं, तदा ते परमं सुखम् ॥८३॥ गोशीर्षचन्दनालेप–वासीछेदकयोर्यदा । अभिन्नचित्तवृत्तिः स्या–त्तदा ते परमं सुखम् ॥८४॥ पीयूषमिव सुस्वादु–र्भास्वानिव विबोधकृत् । ज्ञानीव तत्त्वनिष्णातः, सतां वचनविस्तरः ॥८५॥ सूनृतं करुणाक्रान्तमविरुद्धमनाकुलम् । अग्राह्यं गौरवाश्लिष्टं, वचः सद्भिः प्रशस्यते ॥८६॥ हितं मितं प्रियं स्निग्धं, मधुरं परिणामि यत् । भोजनं वचनं चापि, भुक्तमुक्तं प्रशस्यते ॥ ८७ ॥ सर्व्वाशुचिनिधानस्य, कृतघ्नस्य विनाशिनः । वर्ण्यते तस्य कायस्य, मूढेन गुणविस्तरः ॥ ८८ ॥ शरीरं व्रणमित्याहुर्भोज्यं तत्पिण्डबन्धनम् । व्रणप्रक्षालनं स्नानं, वस्त्रं स्यात्तस्य पट्टकः ॥ ८९ ॥ कर्पूरकुंकुमागुरुमृगमदहरिचन्दनादिवस्तूनि । भव्यान्यपि संसर्गान्मलिनयन्ति कलेवरं नृणाम् ॥ ९० ॥ सुस्वादं सुसुगन्धि मोदकदधिक्षीरेक्षुशाल्योदनम्, द्राक्षापर्पटिकामृताघृतपुरस्वर्गच्युताम्रादिकम् । भुक्तं यत्सहसैव यत्र मलसात्संपद्यते सर्वतः, तं कायं सकलाऽशुचिं शुचिमहो मोहान्धता[1] मन्यते ॥ ९१ ॥ एवंविधस्य कायस्य, सारं यत्पुण्यसेवनम् । परोपकारकरणं, व्रताभिग्रहधारणम् ॥९२॥ यतः—मनोविशुद्धं पुरुषस्य तीर्थं, वाक्संयमश्चेन्द्रियनिग्रहश्च । त्रीण्येव तीर्थानि शरीरभाजां, स्वर्गं च मोक्षञ्च निदर्शयन्ति ॥ ९३ ॥ अन्यच्च—जयन्ति जितमत्सराः परहितार्थमभ्युद्यताः, पराभ्युदयसुस्थिताः परविपत्तिखेदाकुलाः । महापुरुषसंकथाश्रवणजातरोमोद्गमाः, समस्तदुरितार्णवे प्रकटसेतवः सन्नराः ॥ ९४ ॥ जनस्य सर्वस्य समीहितानि, कार्याणि कुर्वन्नुपकारकारी । स्वार्थे प्रमादी प्रगुणः परार्थे, न कस्य कस्येह स वल्लभोऽभूत् ॥ ९५ ॥ न सद्वाक्यात्परं वश्यं, न कलायाः परं धनम् ।

१ मोहान्धिता मन्वते. इति साधु.

नाहिंसायाः परो धर्मो, न संतोषात्परं सुखम् ॥ ९६ ॥ धर्मस्य विनयो मूलं, विनयेनार्ज्यते धनम्। विनीता स्त्री प्रिया पत्युस्त्रिवर्गो विनयात्मकः ॥ ९७ ॥ विवेकः स्तोकपुण्यानां, चिरं चित्ते न तिष्ठति। मन्दिरेषु दरिद्रस्य, प्रदीपो दीप्यते कियत्? ॥ ९८ ॥ दानशीलतपोभावचतुःशाखासमन्वितः। धर्मकल्पद्रुमो दत्ते, श्रेयो वित्तादिकं सुखम् ॥ ९९ ॥ तत्रादौ दानशाखायां, माहात्म्यं किञ्चिदुच्यते। दानेनेहोत्तमा भोगाः, कीर्त्तिर्दानेन निर्मला ॥ १०० ॥ त्यक्त्वा राज्यादिकं सौख्यं, पात्रदानाल्लभेच्छिवम्। यथा चन्द्रयशा भूपो, धर्मदत्तो वणिग् यथा ॥ १०१ ॥ हस्तिपालनृपः प्राह, प्रभो ! मे हृदि कौतुकम्। कोऽयं चन्द्रयशा भूपो, धर्मदत्तोऽपि को नरः ॥१०२॥ प्रभुः प्रोवाच भो राजन् !, श्रूयतां तत्कथानकम्। विस्मयस्तव चित्तस्य, श्रुते यस्मिन्भविष्यति ॥ १०३ ॥ तथाहि मध्यमो द्वीपो, जम्बूनामा प्रकीर्त्तितः। तन्मध्ये प्रथमं क्षेत्रं, पवित्रं भरताभिधम् ॥ १०४ ॥ तन्मध्येऽप्युत्तमो देशः, सा(शा)रदादेवताश्रितः। काश्मीरः कौतुकैर्युक्तो, विरक्तः पापकर्मतः ॥ १०५ ॥ चन्द्रवत्प्रोज्ज्वलं यत्र, पुरं चन्द्रपुराभिधम्। श्रीयशोधवलो यत्र, धात्रीशो धर्मवान् शुचिः ॥ १०६ ॥ सुरदेवीसमा देवी, यस्य जज्ञे यशोमती। रूपसौभाग्यशीलादिगुणमाणिक्यभूषिता ॥ १०७ ॥ तत्कुक्षिसरसीहंसो, निर्मलश्च महामतिः। शुद्धपक्षोऽभवद्राज्ञो, नाम्ना चन्द्रयशाः सुतः ॥ १०८ ॥ धात्रीभिः पाल्यमानस्तु, हस्ताद्धस्तेषु संचरन्। क्रमेण तनयः सोऽथ, सञ्जातः सप्तवार्षिकः ॥ २०९ ॥ आचार्याय ततो राज्ञा, पठनार्थं समर्पितः। प्राज्ञः पठति सोऽत्यन्तं, पूर्वाधीतमिव श्रुतम् ॥११०॥ व्याकरणं च साहित्यं, छन्दोऽलङ्करणं तथा। स्वल्पैरेव दिनैः सर्वं, शास्त्रं तेनातिशिक्षितम् ॥ १११ ॥ कृतः शकुनशास्त्रेषु, दृढः परिचयस्ततः। निपुणः सर्वशब्देषु, बभूव पशुपक्षिणाम् ॥ ११२ ॥ लिखितं पठितं गीतं, नृत्यं वादित्र-

संस्कृते । इत्याद्याः शिक्षिता येन, सर्वा द्वासप्ततिः कलाः ॥ ११३ ॥ सिंहो वकः कुर्कुटश्च, काकश्वानौ खरस्तथा । विंशतिर्ये गुणा एषां, तस्य देहे वसन्ति ते ॥ ११४ ॥ उक्तञ्च–प्रभूतकार्यमल्पं वा, यो नरः कर्तुमिच्छति । सर्व्वारम्भेण तत्कार्यं, सिंहादेकं पदं यथा ॥११५॥ इन्द्रियाणि च संयम्य, वकवत्पण्डितो नरः । देशकालोपपन्नानि, सर्वकार्याणि साधयेत् ॥११६॥ प्रागुत्थानञ्च युद्धञ्च, संविभागं च बन्धुषु । स्त्रियमाक्रम्य भुञ्जीत, शिक्षेच्चत्वारि कुक्कुटात् ॥ ११७ ॥ गूढमैथुनधारिष्ठ्यं[1], काले चालयसंग्रहम् । अप्रमत्तमविश्वासं, पञ्च शिक्षेत वायसात् ॥ ११८ ॥ वह्वाशी चाल्पसन्तुष्टः, सुनिद्रो लघुचेतनः । स्वामिभक्तश्च शूरश्च, पडेते श्वानतो गुणाः ॥११९॥ आरूढश्च(ढं च) वहेद् भारं, शीतोष्णं न च विन्दति । सन्तुष्टश्च चरेन्नित्यं, त्रीणि शिक्षेत रासभात् ॥ १२० ॥ यस्य पुंसो गुणा एते, कथ्यते सुगुणः स हि । द्वात्रिंशदिति कथ्यन्ते, लक्षणानि नरस्य च ॥ १२१ ॥ तथाच–कुलीनः पण्डितो[2] वाग्ग्मी[3], गुणग्राही[4] सदोत्तमः । सत्पात्रसंग्रही[6] त्यागी[7], गम्भीरो[8] विनयी[9] नंयी[10] ॥ १२२ ॥ शृङ्गारी[11] श्लाघया युक्तः[12], सत्यवाक्[13] शुद्धमानसः[14] । गीतज्ञो[15] रसिको[16] वादी[17], गुणार्थः[18] दानसुप्रियः[19] ॥ १२३ ॥ मन्त्रवादी[20] कलायुक्तः[21], सद्धनी[22] च विचक्षणः[23] । धूर्तो[24] मिष्टान्नभोजी[25] च, तेजोवान्[26] धार्म्मिकस्तथा[27] ॥ १२४ ॥ कपटी[28] लेखकः[29] क्षान्तः[30], परचित्तोपलक्षकः[31] । ज्ञातार्थः सर्वग्रन्थेषु[32] लक्षणानि नरोत्तमे ॥ १२५ ॥ वाह्यानि लक्षणान्येतान्येतान्यभ्यन्तराण्यपि । सामुद्रिके तथोक्तानि, रेखाभिः करपादयोः ॥ १२६ ॥ आसादपर्वतशुकाङ्कुशसुप्रतिष्ठ–पद्माभिषेकयवदर्प्पणचामराणि[10] । कुम्भोऽ[11]द्रुम[12]मत्स्य[13]मकर[14]द्विप[15]सत्पताका[16], सदामनी[17]वसुमती[18]रथ[19]तोरणानि ॥ १२७ ॥ छत्रं[21] ध्वजः[22] स्वस्तिक[23]यूप[24]वापी[25]–कमण्डलु[26]स्तूप[27]म-

१ धाष्टर्यम्.

र्यैर्कूर्म्मौः । अष्टापदस्थौल[1]समुद्र[2]सिंहा, द्वात्रिंशदेवं नरलक्षणानि ॥ १२८ ॥ इत्थं शरीरचिह्नानि, दृश्यन्ते यस्य हि स्फुटम् । स भोगी सत्त्ववान् दाता, भूपतिश्च प्रजायते ॥ १२९ ॥ चन्द्रयशाः स बालत्वे, देहलक्षणलक्षितः। विज्ञानवेशभाषासु, बभूव चतुरो नरः ॥ १३० ॥ अष्टादशलिपीनाञ्च, धूर्त्तवादेन्द्रजालयोः । सर्वपारसिकानाञ्च, ज्ञाताऽभूत्स महामतिः ॥ १३१ ॥ स क्रमात्प्राप तारुण्यं, युवतीजनमोहनम् । युवराजपदे न्यस्तः पित्राऽथ गुणरञ्जनात् ॥ १३२ ॥ विचाराचारसन्तोष–ज्ञानधर्म्मतपःक्षमाः । सौजन्यौदार्यमुख्याश्च, गुणास्तेनार्जिता भृशम् ॥ १३३ ॥ इत्थं तं गुणिनं ज्ञात्वा, प्रजारागमपि स्फुटम् । राज्यदानाय तस्याथ, भूपोऽभूदुत्सुकः पुनः ॥ १३४ ॥ नेत्राम्बुपूरितः पुत्रः, प्रोवाच पितरं प्रति। निश्चिन्तोऽहं सुखी चास्मि, त्वत्पादाम्बुजसेवनात् ॥१३५॥ यतः—क्व पर्व्वपीयूषकरः ? क्व तारकाः ?, क्व च स्वयम्भूरमणः ? क्व गोष्पदम् ?। क्व सन्मणिः ? क्वेह च कर्कराश्च ?, क्व शं प्रभूपासनजं ? क्व राज्यम् ? ॥१३६॥ स्मित्वा धात्रीधवः प्राह, शृणु वत्स ! सुसात्त्विक ! । पुरापि श्रूयते ह्येवं, सुखं नास्त्येव सेवया ॥१३७॥ काव्यम्–सोच्छ्वासं मरणं निरग्नि दहनं निःशृङ्खलं बन्धनम्, निष्पङ्कं मलिनं विनैव नरकं तीव्रा महावेदना। सेवासंजनितं नरस्य सुधियो यत्पारवश्यं नृणाम्, पञ्चानां सविशेषमेतदपरं षष्ठं महापातकम् ॥१३८॥ जीवन्तोऽपि मृताः पञ्च, श्रूयन्ते किल भारते । दरिद्री व्याधितो मूर्खः, प्रवासी नित्यसेवकः ॥ १३९ ॥ वृद्धौ च मातापितरौ, साध्वी भार्या शिशुः सुतः । अप्यकार्यशतं कृत्वा, भर्त्तव्यान्मुनि(न्मनु)रब्रवीत् ॥ १४० ॥ मातृपित्रोरभरकः, क्रियामुद्दिश्य याचकः । मृतस्यांशप्रतिग्राही, न भूयः पुरुषो भवेत्* ॥ १४१ ॥ धृत्वाञ्जलिं सुतोऽप्यूचे, ईदृशं तात ! मा वद ।

---

१ ' देश. ' पाठान्तरम्. २ नेदृक्चिह्नाङ्कितं प्रत्यन्तरे.

यस्य भाग्यं भवत्युग्रं, मातापित्रोः स सेवकः ॥ १४२ ॥ राज्यार्थे निश्चयं ज्ञात्वा, भूधरो हर्षपूरितः । सुताय प्रददौ कोशं, समग्रं शुभलक्षिणे ॥ १४३ ॥ स्वाङ्गरक्षाकृते तस्य, प्रसादं कृतवान्नृपः । समग्रविषये चाधिकारी संस्थापितः पुनः ॥१४४॥ पुत्रपित्रोस्तयोः प्रीत्या, कालो याति सुखान्वितः । दिनैः संपद्यते सर्व्वं, पुण्यैः किं नाम दुष्करम् ? ॥ १४५ ॥ वशीभवन्ति विश्वानि, विलीयन्ते विपत्तयः । संपदश्च हि सिध्यन्ति, पश्य धर्म्मानुभावतः ॥ १४६ ॥ अन्यदाऽसौ चन्द्रयशाः, सुखं सुप्तो निशाभरे । सप्तभूमियुते सौधे, रत्नैर्ध्वस्ततमोव्रजे ॥ १४७ ॥ पुष्पप्रकरसङ्कीर्णे, पल्यङ्के कोमलान्विते । शृणोति स्म शिवा-शब्दं, सुश्रु( श्र )व्यं सकारणम् ॥ १४८ ॥ युग्मम् ॥ किञ्चिन्निद्रो जजागार, कुमारश्चेत्यचिन्तयत् । अहो एष शिवाशब्दो मम लाभं हि शंसति ॥ १४९ ॥ 'वामस्वरा शिवा श्रेष्ठा, पिङ्गला दक्षिणस्वरा । प्रदक्षिणा च वामा च, कोकिला सिद्धिदा-यिनी ॥ १५० ॥ यथाहं वेद्मि शब्दार्थं, कोऽपि वेत्ति तथाऽपरः । स गृह्णाति तदा भव्यं, ममाग्रेऽस्ति धनं बहु ॥ १५१ ॥ पुनः शिवां रटन्तीं तां, श्रुत्वा सत्पुरुषाग्रणीः । को न वेत्ति शिवाप्रोक्तमिति निर्णीतवान् हृदि ॥ १५२ ॥ समुत्थाय स पल्यङ्कात्, वीरकच्छां विधाय च । खड्गधारा(षट्क्रोडन) धरो भूत्वा, धृत्वा धैर्यं च मानसे ॥ १५३ ॥ शिवाशब्दानुसारेण, व्रजन्मार्गे पुराऽन्तरे । चतुष्पथमतिक्रम्य, दुर्गं चोल्लङ्घ्य वेगतः ॥ १५४ ॥ क्षणात्प्राप महोद्याने, स्मशानं सर्वभीभृतम् । रौरवं घोरतमसा, बीभत्सं बहिरन्तरा ॥ १५५ ॥ क्वचित्करालकङ्काल-वेतालव्यालसंकुलम् । क्वचिद्रौद्रतरराव-वराहव्या-घ्रभीषणम् ॥ १५६ ॥ घूकघूत्कारसंव्याप्तं, संकीर्णं सिंहशंबरैः । तत्र शब्दानुसारेणाग्रेऽग्रे धीरो जगाम च ॥ १५७ ॥ पञ्चभिः कुलकम् ॥ ददर्शाग्रे स उद्योतं, ज्वलन्तं चाग्निकुण्डकम् । झात्कारकान्तिमान्स्वर्ण-पुरुषस्तत्र वीक्षितः ॥ १५८ ॥

देदीप्यमानमत्यन्तं, दृष्ट्वा तं स्वर्णपौरुषम् । आसिक्त्वा(च्य) शीतलीचक्रे, समीपस्थितवारिणा ॥ १५९ ॥ ततस्तं बहिराकृष्य, खनित्वा भूमिमन्यतः । निक्षिप्य विधिवत्तत्र, वलितोऽसौ सुविस्मयः ॥१६०॥ समागत्य स्वसंस्थाने, स सुप्तः शेषशर्वरीम् । निद्रात्यागे च प्रत्यूषे, प्रातःकृत्यानि चाकरोत् ॥ १६१ ॥ देवध्यानं गुरुध्यानं, कृत्वा स्मृत्वा नमस्क्रियाम् । माङ्गल्यतूर्यपूर्वश्च, ययौ राजसभां सुधीः ॥ १६२ ॥ प्रणिपत्य पितुः पादानुपविष्टो यथासने । पित्रा पृष्टं सुखी वत्स !, सोऽप्याह त्वत्प्रसादतः ॥ १६३ ॥ यतः—ते पुत्रा ये पितुर्भक्ताः, स पिता यस्तु पोषकः । तन्मित्रं यत्र विश्वासः, सा भार्या यत्र निर्वृतिः ॥१६४॥ सभां संपूर्य राजाऽसौ, विशिष्टैः सेवकैर्वृतः । सिंहासने स्थितस्तुङ्गे, यथा पूर्वाचले रविः ॥ १६५ ॥ तदा च वरनारीभि-र्वीज्यते चामरद्वयम् । पूतं श्वेतातपत्रं च, ध्रियते मस्तकोपरि ॥ १६६ ॥ गन्धर्वैश्च गुणग्रामोऽभिरामो गीयते कलम् । जय नन्देतिनिर्घोषैः, पठ्यते बन्दिभिर्भृशम् ॥ १६७ ॥ पुरो नृत्यन्ति पात्राणि, राजाऽसौ पूर्वपुण्यतः । मन्त्रिसामन्तमध्यस्थः, सुरेन्द्र इव शोभते ॥ १६८ ॥ काव्यम्—राज्यं प्राज्यं मदजलकणान् स्यन्दमाना गजाली, तुङ्गाभोगाः पवनजविनो वाजिनः स्यन्दनाश्च । दर्पाध्माताः सुभटनिकराः कोशलक्ष्मीः समग्रा, सर्वं चैतद्भवति नियतं देहिनां धर्मयोगात् ॥ १६९ ॥ अथाऽस्मिन्समये तत्र, वेत्रिणेति निवेदितम् । स्वामिन् ! कोऽपि पुमान् राज-द्वारे पूत्कुरुते भृशम् ॥ १७० ॥ मस्तके क्षिप्तधूलिश्च, प्रतोलीस्तम्भमाश्रितः । दीनाननो हीनवस्त्रस्तेजोभाग्यविवर्जितः ॥ १७१ ॥ मुषितो मुषितोऽस्मीति, स च वक्ति मुहुर्मुहुः । देव ! तस्य वराकस्य, ददाम्यथ किमुत्तरम् ? ॥ १७२ ॥ युग्मम् ॥ प्रतीहारवचः श्रुत्वा, कृत्वा तु स्थिरमानसम् । इति स्मृतिवचःसारं, सस्मार पृथिवीपतिः ॥ १७३ ॥ यतः—दुर्बलानामनाथानां, बालवृद्धतपस्विनाम् । अन्यायपरिभूतानां,

सर्वेषां पार्थिवो गतिः ॥ ७४ ॥ विचिन्त्यैवं नृपः प्रोचे, स मध्ये मुच्यतां पुमान् । आगतो वेत्रिमुक्तोऽसौ, पूत्कुर्वन् नृपसंसदि ॥ ७५ ॥ शुभवाक्यैः कृतः स्वस्थः, आश्वास्य चोपवेशितः । राज्ञोचे वद भो भद्र !, किं ते दुःखस्य कारणम् ? ॥ ७६ ॥ केन त्वं मुषितश्चात्र, ? पराभूतोऽसि केन वा ? । किं त्वदीयं हृतं केन, ? कथय त्वमशङ्कितः ॥ ७७ ॥ तेनोक्तं शृणु राजन्मे, सुवर्णपुरुषो गतः । किं कुर्वेऽहं ? क्व गच्छामि ?, कस्याग्रे पूत्करोम्यहम् ? ॥ ७८ ॥ यतः–पञ्चमो लोकपालस्त्वं, कृपालुः पृथिवीपतिः । दैवेनाहं पराभूत, आगतः शरणं तव ॥ ७९ ॥ कुवस्त्रं मलिनं दीनं, दुर्बलाङ्गञ्च तं नरम् । दृष्ट्वा प्रोवाच भूपालः, किमयुक्तं ब्रवीष्यदः ? ॥ ८० ॥ दरिद्रसदृशं रूपं, दुरवस्था तवेदृशी । स्ववपुश्चेष्टया भद्र, ! विमृश्यैव तदुच्यते ॥ १८१ ॥ यतः—कुचेलिनं दन्तमलावधारिणं, बह्वाशनं निष्ठुरवाक्यभाषिणम् । सूर्योदये चास्तमने च शायिनं, विमुञ्चति श्रीर्यदि चक्रपाणिनम् ॥ ८२ ॥ सुजीर्णमन्नं सुविचक्षणः सुतः, सुराधिता श्रीर्नृपतिः सुसेवितः । सुचिन्त्य चोक्तं सुविचार्य यत्कृतं, तद्दीर्घकालेऽपि न याति विक्रियाम् ॥ ८३ ॥ भवादृशां गृहे स्वर्णपुरुषो यदि विद्यते । तदाश्चर्यमिदं लोके, दृश्यते विपुलं किल ॥ ८४ ॥ स नरः प्राह हे स्वामिन् !, शोभनं शृणु मे वचः । ये श्रियाऽलङ्कृताः सन्ति, शोभन्ते ते दिवानिशम् ॥ ८५ ॥ श्रीरहिता नरा ये च, दारिद्र्यालङ्कृताश्च ये । तेषामेव दशा देहे, दुर्वाच्या भवतीदृशी ॥ ८६ ॥ उक्तश्च–दारिद्र्याधिगमे जीव–देहस्थाः पञ्च देवताः । सद्यो निर्गत्य गच्छन्ति, श्रीह्रीधीकान्तिकीर्त्तयः ॥ ८७ ॥ अन्यच्च–शीलं शातयति श्रुतं शमयति प्रज्ञां निहन्त्यादरात्, दैन्यं दीपयति क्षमां क्षपयति व्रीडामपि व्यस्यति । तेजो जर्जरयत्यपास्यति धृतिं विस्तारयत्यर्थितांम्, पुंसः क्षीणधनस्य किं न कुरुते वैरी कुटुम्बं गृहे ? ॥ ८८ ॥ यस्यास्ति वित्तं स नरः

कुलीनः, स पण्डितः स श्रुतवान्गुणज्ञः । स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ८९ ॥ स्वामिन्मेऽपहृतं द्रव्यं, तेनाहं धनवर्जितः । अवस्थामीदृशीं प्राप्तः, पूर्वदुष्कृतकर्मतः ॥ ९० ॥ अकारणं सत्त्वमकारणं तपो, जगत्त्रयव्यापि यशोऽप्यकारणम् । अकारणं रूपमकारणं गुणाः, पुराणमेकं नृषु कर्म कारणम् ॥ १९१ ॥ प्रभो प्रसादमाधाय, चित्ते कृत्वा कृपां यदि । वालयिष्यसि मे द्रव्यं, दारिद्र्यं तर्हि यास्यति ॥ १९२ ॥ पुनः पृथ्वीपतिः प्राह, सत्यं कथय किं गतम् ? । किञ्चिदन्यद्धृतं मन्ये, कथं ते हेमजो नरः ? ॥ ९३ ॥ आहुः सभ्यास्तदा देव ! यदसौ वक्ति तत्तथा । उष्ट्रस्य कण्टका भक्ष्यं, युक्तं द्राक्षा तु नोचिता ॥ ९४ ॥ यतः—करहा कण्टउ चारकीय, एवही भलीय परिक्ख । कमलवणइ हंसा वसइ, ठाम दिउं जोइ मुक्ख ॥ ९५ ॥ पुनः प्रोवाच भूपालः, कृपालुस्तं नरं प्रति । कथमुत्पादितः स्वर्णनरो ब्रूहि नरोत्तम ? ॥ ९६ ॥ तेनोक्तं शृणु राजेन्द्र !, सुवर्णपुरुषस्य ते । उत्पत्तिं मत्कथापूर्वं, कथयामि यथातथम् ॥ ९७ ॥ अस्मिन्नेव पुरे स्वामिन् !, श्रेष्ठी श्रीपतिरित्यभूत् । षण्णवतिर्गृहे यस्य बभूवुर्धनकोटयः ॥ ९८ ॥ सद्भार्या श्रीमती तस्य, शीलसौभाग्यभूषणा । दक्षा सर्वेषु कार्येषु, बभूव गुणशालिनी ॥ ९९ ॥ काव्यम्—दासी कर्मणि नर्मणि प्रियसखी मन्त्री च मन्त्रक्रमे, शृङ्गाराऽमृतकूपिका मधुरवाक् दुःखे सुखे तन्मयी । लज्जालुः कुलवृद्धिकल्पलतिका सर्वस्य विश्वासभूः, पत्नी प्रेमपवित्रिता यदि परं पुण्यैः समासाद्यते ॥ २०० ॥ तया सार्धं महासौख्यं, विलसत्यधिकाधिकम् । करोति धर्मकार्यञ्च, कालं यान्तं न वेत्ति सः ॥ २०१ ॥ सान्यदा सुखगोष्ठ्यर्थं, गताऽभूत्स्वसखीगृहे । लालयन्ती स्वडिम्भानि, तया दृष्टा तदा सखी ॥ २ ॥ एकं स्कन्धेऽपरं कट्यामेकं द्वे च गृहाङ्गणे । तद्बालकानि वीक्ष्येति, सा दध्यौ श्रीमती हृदि ॥ ३ ॥

एषा पुत्रवती धन्या, हा हा धिग्मम जीवितम् । वन्ध्यादोषान्मया यस्मात्, कुलं पैत्र्यं कलङ्कितम् ॥ ४ ॥ यतः—गन्धहीनं यथा पुष्पं, तटाकमिव निर्जलम् । कलेवरमिवाजीवं, धिङ्नारीजन्म निःसुतम् ॥ ५ ॥ स्फारभूषणभाराऽपि, न भाति स्त्री सुतं विना । उदारतरताराऽपि, निशेव शशिवर्जिता ॥ ६ ॥ पतिवंशप्रवाहस्य, कृतश्छेदोऽधुना पुनः । किं करोमि ? क्व गच्छामि ?, दर्शयामि कथं मुखम् ? ॥ ७ ॥ सातिदुःखातुरा जाता, वलिता च गृहे गता । सुतार्त्तिपीडितात्यन्तं, सुप्ता चावासकूणके ॥ ८ ॥ भोजनावसरे श्रेष्ठी, स्वसद्मनि समागतः । नैव दृष्टा यदा पत्नी, तदा चेतस्यचिन्तयत् ॥ ९ ॥ कथं न दृश्यते भार्या ?, या ममागमनक्षणे । प्रतिपत्तिं सदा चक्रे, रे रे क्वाद्य गताऽस्ति सा ? ॥ १० ॥ मध्ये दृष्ट्वा तथाऽवस्थां, पृष्टं केनासि दूमिता ? । सुप्ता शोकगृहे कस्मात् ?, वद दुःखस्य कारणम् ॥ २११ ॥ शय्यातः सोत्थिता साध्वी, दुःखाश्रुक्लिन्नलोचना । म्लानानना महाशोकात्, हिमदग्धेव पद्मिनी ॥ १२ ॥ ईदृशीं वीक्ष्य स श्रेष्ठी, पप्रच्छ प्रेयसीं पुनः । कथमुद्वेजिताऽद्य त्वं, दृश्यसे कमलानने ? ॥ १३ ॥ गद्गदाक्षरशब्देन, पत्नी प्रोवाच वल्लभम् । भवत्प्रसादतो नाथ !, मां दूनयति कोऽपि न ॥ १४ ॥ परं दुःखकरं कर्म, यत्केनापि न लुप्यते । अधुना भोजनं तावत्, कुरुत्सूरं च मा कुरु ॥ १५ ॥ भोजनानन्तरं सर्व्वं, कथयिष्यामि कारणम् । अग्रेदत्ता इदं प्राहुः, प्रथमं भोजनं फलम् ॥ १६ ॥ एवं संतोष्य सद्वाण्या, श्रेष्ठिनं हेतुयुक्तया । कारयामास सा दत्ता, स्नानाद्यां भोजनक्रियाम् ॥ १७ ॥ भोजनान्ते क्षणं सुप्तः, प्रबुद्धः स्वयमेव सः । ततः पप्रच्छ सत्प्रीत्या, भार्यां दुःखस्य कारणम् ॥ १८ ॥ जजल्प चित्तसङ्कल्पं, प्रियं प्रति प्रिया ततः । स्वामिन्मे बाधते चित्तमनपत्यत्वमेव च ॥ १९ ॥ वन्ध्याकदर्थना ह्यत्र, परत्र सुगतिर्नहि ।

श्रूयते भारते श्लोकस्तदर्थमवधारय ॥ २० ॥ यतः—अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च । तस्मात्पुत्रमुखं दृष्ट्वा, पश्चाद्धर्म्मं समाचरेत् ॥ २२१ ॥ सख्या गृहे सुतान्वीक्ष्यापत्यचिन्ता ममाप्यभूत् । तच्छ्रुत्वाऽचिन्तयच्छ्रेष्ठी, पुत्रचिन्ताप्रवर्त्तितः ॥ २२ ॥ गन्धेनेव प्रसूनानि, विवेकेन गुणा इव । तनयेन विना पुंसां, न विभान्ति विभूतयः ॥ २३ ॥ शैत्यमुत्पादयन्नङ्गे, सुधारस इवोच्चकैः । रमते तनुजन्माङ्के, धन्यानामेव योषिताम् ॥ २४ ॥ उत्पतान्निपतन् रिंखन्, हसन् लालावलीर्वमन् । कस्याश्चिदेव धन्यायाः, क्रोडमायाति नन्दनः ॥ २५ ॥ विना स्तम्भं यथा गेहं, यथा देहं विनात्मना । तरुर्यथा विना मूलं, तथा पुत्रं विना कुलम् ॥ २६ ॥ किं करोमि ? क्व गच्छामि ?, निर्भाग्योऽहं हहा मम । सर्वेषामेव सौख्यानां, स्थाने नैकोऽप्यभूत्सुतः ॥ २७ ॥ किं कुर्वे बान्धवैश्वर्यैः, ? किं कुर्वे हट्टसद्मभिः ? । सर्वः परिग्रहोऽप्येवमेकं पुत्रं विना वृथा ॥ २८ ॥ यतः—पियमहिलामुहकमलं, बालमुहं धूलिधूसरच्छायम् । सामिमुहं सुपसन्नं, तिन्निवि पुन्नेहिँ पावन्ति ॥ २९ ॥ इत्यादि चिन्तयित्वासौ, प्रोवाचैवं प्रियां प्रति । खेदं मा कुरु पुत्रार्थे, मयोपायः करिष्यते ॥ ३० ॥ ततश्च श्रेष्ठिनारब्धं, मन्त्रयन्त्रादिपूर्वकम् । देवताराधनं देव्याः, पूजनं होमशान्तिकम् ॥ २३१ ॥ मिथ्यात्वेऽभून्मनस्तस्य, कृतं पाखण्डिनां व्रतम् । सम्यक्त्वं मलिनश्चक्रे, जिनधर्म्मविरोधतः ॥ ३२ ॥ अथ तत्र पुरे धर्मधनो नाम्ना पवित्रधीः । मित्रं तस्यास्ति सोऽन्येद्युरुवाच श्रेष्ठिनं प्रति ॥ ३३ ॥ भो मित्र ! श्रीपतिश्रेष्ठिन् ! मिथ्यात्वं मूढ मा कुरु । मिथ्यात्वतो भवेत्सिद्धिस्तदा कोऽप्यसुखी नहि ॥ ३४ ॥ मित्र ! मिथ्यात्वशब्दार्थं, विचारय निजे हृदि । यत्किञ्चित्क्रियते मिथ्या, मिथ्यात्वं हि तदुच्यते ॥ ३५ ॥ उक्तश्च—विषाहिरुग्वह्निरिपुव्रजेभ्यो, मिथ्यात्वमत्यन्तदुरन्तदोषम् । एकत्र जन्मन्यहितं

मिथ्यात्वं परमो वैरी, मिथ्यात्वं परमं तमः। मिथ्यात्वं भवकूपान्ते,
विपाद्यं, मिथ्यात्वमाहन्ति नृणामनन्तम् ॥ ३६ ॥ मिथ्यात्वं परमो वैरी, सच्चीर्थयात्रा प्रवरा दया च। सुश्रावकत्वं
पातयत्यनिशं खलु ॥ ३७ ॥ अन्यच्च—शीलानि दानानि तपांसि पूजा, सम्यक्त्वमेकमखिलं सहसा भिनत्ति।
व्रतपालनञ्च, सम्यक्त्वपूर्वाणि महाफलानि ॥ ३८ ॥ पापं यदर्ज्जितमनन्तभवैर्दुरन्तैः, सम्यक्त्वमेकमखिलं सहसा भिनत्ति।
भस्मीकरोति सहसा तृणकाष्ठराशिं, किं नोर्जितोज्ज्वलशिखो ज्वलनः प्रसिद्धः ? ॥ ३९ ॥ अतस्त्रिधा सद्गुरुदेवधर्म्म-
भेदात्सुसम्यक्त्वमिदं प्रपाल्यम्। श्रीसंप्रतिश्रेणिकवज्रकर्ण—श्रीरामकृष्णादिकवत् सुभावात् ॥ ४० ॥ सम्मत्तं उच्छिन्दिय,
मिच्छत्तारोवणं कुणइ नियकुलस्स। तेण सयलो विं वंसो, दुग्गइमुहसंमुहो नीओ ॥ २४१ ॥ यतः—दंसणभट्ठो भट्ठो,
दंसणभट्ठस्स नत्थि निव्वाणं। सिज्झन्ति चरणरहिया, दंसणरहिया न सिज्झंति ॥ ४२ ॥ दंसणभट्ठा भट्ठा, नहु भट्ठो
होइ चरणप०भट्ठो। दंसणमणुपत्तस्सवि, परिअडणं नत्थि संसारे ॥ ४३ ॥ मिच्छत्तं उच्छिन्दिय, सम्मत्तारोवणं कुणइ
नियकुलस्स। तेण सयलोवि वंसो, सिद्धिपुरीसंमुहो नीओ ॥ ४४ ॥ अतः कृतेऽपि मिथ्यात्वे, कदाचिन्नन्दनो भवेत्।
तथापि न वरो ज्ञेयः, सोऽपि ब्राह्मणपुत्रवत् ॥ ४५ ॥ शृणु श्रेष्ठिन्पुरा कोऽपि, देवशर्म्मेति वाडवः। पुत्रार्थं पद्रदेव्यग्रे,
जगादेति सुभक्तितः ॥ ४६ ॥ यदि मे त्वत्प्रसादेन, पुत्रो भवति निश्चितम्। तदा देवकुलं रम्यं, कारयामि नवं तव ॥ ४७ ॥
प्रतिवर्षं पुनश्छागमेकैकं पुरतस्तव। हनिष्यामि ततो देवि !, वाञ्छां पूरय पूरय ॥ ४८ ॥ अथ तस्याऽभवत् पुत्रः,
कर्म्मणा कालयोगतः। देवदत्तेति नाम्नासौ, निर्म्ममे देवशर्म्मणा ॥ ४९ ॥ देवताभवनं तेन, नवीनं कारितं ततः।
परितो वाटिका चक्रे, खानितं च सरोवरम् ॥ ५० ॥ हतश्छागोऽथ देव्यग्रे, महोत्सवपुरस्सरम्। अजमेकं च मिथ्यात्वी,

प्रतिवर्षं जघान सः ॥ २५१ ॥ क्रमेण देवदत्तोऽसौ, संप्राप्तवरयौवनः । परिणीतोऽथ तत्तातो महार्त्तध्यानतो मृतः ॥ ५२ ॥
यतः–राज्योपभोगशयनासनवाहनेषु, स्त्रीगन्धमाल्यमणिरत्नविभूषणेषु । इच्छाभिलापमतिमात्रमुपैति मोहाद्ध्यानं तदार्त्त-
मिति तत्प्रवदन्ति सन्तः ॥ ५३ ॥ अजो जातः पुरे तत्र, स्थूलरोमा रुषान्वितः । पुष्टदेहो बलिष्ठश्च, करालः कपिलच्छविः
॥ ५४ ॥ वर्षान्ते देवदत्तेन, स क्रीतो द्रव्यदानतः । सस्मार पूर्वजातिश्च, च्छागो दृष्ट्वा निजं गृहम् ॥ ५५ ॥ स्वरूपं
सकलं ज्ञात्वा, च्छागो भीतो व्यचिन्तयत् । देव्यग्रेऽहं वधार्थं हा, समानीतोऽत्र वेश्मनि ॥ ५६ ॥ यात्रादिने स्वपुत्रेण,
महोत्सवशतैर्युतः । चाल्यमानो न चलति, तदा लोकैः स ताडितः ॥ ५७ ॥ बलेन नीयमानेऽस्मिन्, ज्ञानी मार्गेऽमि-
लन्मुनिः । छागस्य कथितं तेन, पूर्वकृत्यं स्मराधुना ॥ ५८ ॥ यतः–सयमेव रुक्ख रोविया, अप्पणिया वोयंड्डि कारिया ।
ओवायलुब्धपयते, किं छगला विब्बिचि वाससे ? ॥ ५९ ॥ साधुवाक्यमिति श्रुत्वा, धृत्वा सत्त्वं निजे हृदि । चचाल
वेगतो मेषः, सर्वलोकैर्निरीक्षितः ॥ ६० ॥ तदाश्चर्यं जना दृष्ट्वा, चिन्तयन्ति स्वमानसे । कुट्टितोऽप्येष नाचालीन्मुनिना
चालितः कथम् ? ॥ २६१ ॥ देवदत्तोऽब्रवीत्साधो !, कृपां कृत्वा ममोपरि । छागचालनमन्त्रोऽयं, दीयतां मह्यमुत्तमः
॥ ६२ ॥ मुनिनोक्तश्च रे मूर्ख, त्वत्पिताऽयं न वेत्सि किम् ? । कृत्वा मिथ्यात्वमार्त्तेन, मृत्वाऽसौ च्छगलोऽभवत् ॥ ६३ ॥
अट्टेण य तिरियगई, रुद्दज्झाणेण पावए नरयं । धम्मेण देवलोओ, सिद्धिगई सुक्कझाणेणं ॥ ६४ ॥ तवास्ति यदि
सन्देहस्तदामुं नय मन्दिरे । मुत्कलं मुञ्चयित्वा तु, पतित्वा पादयोस्ततः ॥ ६५ ॥ कथितव्यं त्वया तात !, संप्राप्तं मरणं

यदा । तदा मया न किं पृष्टं, दुःखपीडितचेतसा ? ॥ ६६ ॥ युग्मम् ॥ देवदत्ताभिधस्सूनुस्तवाहं कथ्यतां ततः । निधानमस्ति यत्किञ्चित्प्रसद्य मम दीयताम् ॥ ६७ ॥ एवं कृतेऽथ भेषेण, सौधकूणे निजाङ्घ्रिणा । दर्शितं निधिसंस्थानं, स प्राप खनिते धनम् ॥ ६८ ॥ काव्यम्—संप्राप्तसंकेत ऋषेर्वचोभिः, सुश्रावकत्वं हि तदा स भेजे । मिथ्यात्वमुन्मूल्य सुशुद्धधर्मं चकार नित्यं द्विजदेवदत्तः ॥ ६९ ॥ अतस्त्वं श्रीपतिश्रेष्ठिन्, महादुर्गतिकारणम् । मिथ्यात्वं सर्वथा मुञ्च, वच्मि मित्र तवाहितम् ॥ ७० ॥ यतः—पापान्निवारयाति योजयते हिताय, गुह्यं निगूहति गुणान् प्रकटीकरोति । आपद्गतञ्च न जहाति ददाति काले, सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ७१ ॥ न मातरि न सोदर्ये, न दारेषु न बन्धुषु । विश्रम्भस्तादृशः पुंसां यादृग् मित्रे निरन्तरम् ॥ ७२ ॥ पुनर्धर्म्मधनः प्राह, श्रीपतिं प्रति सत्यवाक् । देवोऽपि भाविनीं रेखां, को नु मार्जयितुं क्षमः ? ॥ ७३ ॥ भवितव्यनियोगेन, भाव्यं भवति नान्यथा । नालिकेरफलाम्भोवद्, गजभुक्तकपित्थवत् ॥ ७४ ॥ कर्मायत्तं फलं पुंसां, बुद्धिः कर्म्मानुसारिणी । तथापि सुधियः कार्यं, सुविचार्यैव कुर्वते ॥ ७५ ॥ विधिना विहिते मार्गे, यद्भवेद्दैवनिर्म्मितम् । न शक्यमन्यथाकर्तुं, सशक्रैस्त्रिदशैरपि ॥ ७६ ॥ कथयामि पुनस्तेऽहं, भवितव्योपरि स्फुटम् । सोत्कर्णं श्रूयतां चैतत्, कथाचूडकथानकम् ॥ ७७ ॥ तथाहि—जम्बूद्वीपेऽत्र भरते, नाम्नास्ति मिथिलापुरी । रणसारो रसानाथस्तत्राभूदिन्द्रसन्निभः ॥ ७८ ॥ सती शीलवती तस्य, प्रिया प्रेमगुणान्विता । कान्तानुगामिनी नित्यं, सुरूपाऽऽनन्ददायिनी ॥ ७९ ॥ यतः—पत्यौ रता सुशीला च, रतलक्षणविचक्षणा । प्रियंवदाऽतिरूपा च, पुण्यैः संप्राप्यते प्रिया ॥२८०॥ तयोर्दिवानिशं प्रीत्या, दम्पत्यो रममाणयोः । अन्येद्युः शुभयोगेन, जातः पुत्रो महाद्युतिः ॥८१॥

पित्रा चक्रे कथाचूडो, नाम तस्य महोत्सवात् । क्रमात्तेनाऽखिलं शास्त्रं, कलाभिः सह शिक्षितम् ॥ ८२ ॥ क्रमात्स यौवनं प्राप, युवतीजनमोहनम् । स्वेच्छया रमते नित्यं, कथाचूडकुमारकः ॥ ८३ ॥ इतश्च मगधे देशे, कुशाग्रपुरपत्तने । समकेशरी राजाऽभूच्छत्रुकुञ्जरकेशरी ॥ ८४ ॥ तस्य पुत्री सुनन्दाऽभूत्संप्राप्तवरयौवना । स्त्रीरत्नमतिनिष्पन्ना, विद्याविज्ञानभारती ॥ ८५ ॥ कथाचूडवरस्यार्थे, राज्ञा प्रैषि पुरोहितः । तेनापि मिथिलां गत्वा, विज्ञप्तो रणसारराट् ॥ ८६ ॥ स्वामिन्मगधनाथस्य, सुनन्दास्ति सुता वरा । तव पुत्रस्य दानाय, भूपेन प्रेपितोऽस्म्यहम् ॥ ८७ ॥ ततः पुरोधसा सार्धं, प्रेषितः सैन्यसंयुतः । मार्गे लक्ष्मीपुरे गत्वा, पटकुट्यां स संस्थितः ॥ ८८ ॥ पुरेऽत्र कुरुते राज्यं, सुरकेतुर्नराधिपः । वेत्रिणा कथितं तस्य, कुमारागमनं तदा ॥ ८९ ॥ सुरकेतुगृहेऽप्यग्रेऽस्त्येको नैमित्तिको महान् । स राज्ञा कौतुकात् पृष्टो, विवाहोऽसौ भवेन्न वा ॥ २९० ॥ स जगाद विवाहो हि, भविष्यत्यनयोर्द्वयोः । त्रिदशैश्चाल्यमानेऽपि, तद्दिनं न चालिष्याति ॥ ९१ ॥ राज्ञोक्तं शृणु भो विज्ञ !, कदाहं ( पि ) चालयामि तत् ॥ किं तदा भवतः कुर्वे ?, कथय प्रकटाक्षरम् ॥ ९२ ॥ विप्रो जगाद यदि चेत्, कदा केनापि चाल्यते । तदा मे रसनाच्छेदः, कार्यः किं कथ्यते घनम् ? ॥ ९३ ॥ इति विप्रपणं श्रुत्वा, भूपोऽप्येवमचिन्तयत् । केन कूटप्रपञ्चेनास्य ज्ञानं क्रियते वृथा ॥ ९४ ॥ पूर्वप्रसाधितो राज्ञा, चेटकः संस्मृतस्तदा । प्रत्यक्षीभूय सोऽवादीत्, कार्यं मे कथ्यतां प्रभो ! ॥ ९५ ॥ राज्ञोक्तं देव ! सर्प्पस्त्वं, भूत्वा दश कुमारकम् । कूटो भवेद्यथा विप्रः, सत्यं च स्यान्मयोदितम् ॥ ९६ ॥ कालरात्रिसमं रूपं, कृत्वा सर्प्पस्य दारुणम् । कथाचूडान्तिके गत्वा, पादे

१ त्रविद्या० पाठान्तरम्.

दष्टः सुरेण सः ॥ ९७ ॥ विषेण घोरितो यावत्, जातश्चेतनवर्जितः । अर्धरात्रे महाहाहाकारश्चोच्छालितस्तदा ॥ ९८ ॥ सैन्या आकुलिताः सर्व्वे, भ्रान्तचित्ता दिशोदिशम् । अभ्रमन् भयभीताश्च, केऽपि गारुडिकं न्यधुः ॥ ९९ ॥ मणिमन्त्रौषधगदैर्गुणः कोऽपि बभूव न । चेटकोऽसौ नृपादेशात्पुंरूपं चाकरोत्पुनः ॥ ३०० ॥ सदौषधिभृतं स्कन्धे, घटिकं न्यस्य तत्र सः । आह गारुडिकोऽत्राहं, परदेशात्समागतः ॥ ३०१ ॥ दृष्ट्वा चेष्टां कुमारस्य, फणीन्द्रविषवारिणीम् । प्रतिक्रियां चकारासौ, गुणो नैवाभवत्परम् ॥ २ ॥ निर्विषीकरणोपाया, एवं दम्भात्कृता घनाः । जातः कोपि विशेषो न, तदा देवोऽवदत्पुनः ॥ ३ ॥ अहो कालगृहीतोऽयमावेष्ट्य निम्बपल्लवैः । अब्धौ प्रवाहितव्योऽथ, किं शवेन विधीयते ? ॥ ४ ॥ हाहाकारं ततो मुक्त्वा, क्षिप्त्वा तं च महोदधौ । सशोकाः सैन्यकास्तस्थुस्तत्र राजसुतं विना ॥ ५ ॥ पुरोहितोऽपि दीनास्यो, महादुःखादचिन्तयत् । अन्यथा चिन्तितं कार्यं, कृतं दैवेन चान्यथा ॥ ६ ॥ गतं लग्नदिनं तावत्, हर्षितो नृपतिस्ततः । विवाहकारणं राज्ञा, पुनः पृष्टो निमित्तवित् ॥ ७ ॥ विप्रोऽप्याह महाराज, विवाहो जात एतयोः । यदि चित्ते प्रतीतिर्न, तदा तं पृच्छ चेटकम् ॥ ८ ॥ स्मृतोऽयं चेटको राज्ञा, समागाद्रचिताञ्जलिः । पुनः पृष्टं नरेन्द्रेण, किङ्कार्यं विहितं त्वया ? ॥ ९ ॥ चेटकः प्राह भो भूप, त्वदादेशः कृतो मया । सर्प्परूपेण दष्टोऽसौ, कुमारो वाहितोऽम्बुधौ ॥ ३१० ॥ श्रुत्वैवं नृपतिः प्राह, नरं नैमित्तिकं प्रति । अरे अलीकं मा जल्प, कूटभाषी सदासि किम् ? ॥ ११ ॥ लोकोक्तिरीदृशी सत्या, कृतैवं वदता त्वया । प्रत्यक्षं पतिता कूपे, वधूः पितृगृहेऽस्ति यत् ॥ १२ ॥ विप्रो जगाद दूरेऽस्ति, किंमङ्गस्य कच्छटा

१ किं गच्छस्य. पाठान्तरम्.

। स्वामिन् ! यद्यस्ति ते शक्तिस्तत्स्वरूपं विलोकय ॥ १३ ॥ चेटकाय ददौ वाक्यमरे ! तं द्रुतमानय । भूपादेशं च संप्राप्य, चेटको वेगतो गतः ॥ १४ ॥ तत्क्षणाद्देवशक्त्या स, आनीतस्सप्रियस्ततः । कुमारो भूभुजा दृष्टः, परिणीतो वधूयुतः ॥ १५ ॥ विस्मितो मानसे भूपस्तं पप्रच्छ नृपाङ्गजम् । युवयोः पाणिग्रहणं, सञ्जातं केन हेतुना ? ॥ १६ ॥ कुमारः स्माह हे राजन् !, शृणु त्वमावयोः कथाम् । यदाहमहिना दष्टः, प्रक्षिप्तश्च महोदधौ ॥ १७ ॥ तदा कन्याप्यसौ साध्वी, सोत्साहा शुभलोचना । गवाक्षस्था च केनाप्यपहृता पापकर्मणा ॥ १८ ॥ मुक्ता द्वीपान्तरे कुत्र, स्थिता सा तत्र दुःखिता । इतश्चाहं निम्बपत्रैर्वेष्टितो जीवितोऽपि सन् ॥ १९ ॥ अम्भोधिलोलकल्लोलैः, प्रेर्यमाणः सुकर्म्मतः । तं द्वीपं प्राप चाकृष्य, तया सज्जीकृतो द्रुतम् ॥ ३२० ॥ युग्मम् ॥ विवाहोऽप्यावयोर्लग्ने, कृतो विद्याधरैस्तदा । अत्रानीतोऽपि केनापि, मुक्तश्चाहं तवान्तिके ॥ २१ ॥ साश्चर्योऽथ नृपो दध्यौ, अहो विलसितं विधेः । यन्नो मिलेन्मिलत्येव, तत्क्षणादपि दैवतः ॥ २२ ॥ उक्तश्च—न सदलैर्न बलैर्न तु मन्त्रणैर्न च धनैः स्वजनैर्न तु बन्धुभिः । सुरवरैर्न नरैरपि वार्यते, विधिरहो बलवानिति मे मतिः ॥ २३ ॥ विद्वान्मूर्खो भटो भीरुः, श्वपाकः पाकशासनः । राजा रङ्कस्तथान्येऽपि, शासने को न दुर्विधेः ? ॥ २४ ॥ ततो राजा निमित्तज्ञं, सन्तोष्य बहुदानतः । क्षामयित्वापराधं स्वं, कुमारश्चातिहर्षितः ॥ २५ ॥ सौभाग्यमञ्जरीपुत्रीमुद्वाह्य स कुमारराट् । राज्ञा स्वसैन्ययुक्तोऽथ, प्रेषितो मिथलापुरीम् ॥ २६ ॥ युग्मम् ॥ हर्षेण रणसारेण, प्रवेशो विस्तरात्कृतः । कुशाग्रपत्तने विप्रः, प्रेषितः क्षेमहेतवे ॥ २७ ॥ राज्ञा पुरोहितः पश्चात्प्रेषितो मिथिलापुरे । सुतायुक्तस्य जामातुरामन्त्रणकृते पुनः ॥ २८ ॥ कथाचूडः ससैन्योऽथ, गतस्तत्र प्रियायुतः । समकेसरिणा तस्य, विवाहो विस्तरात्कृतः

॥ २९ ॥ गजाश्वहेमरत्नौघदेशदानेन भूभुजा । करमोचनवेलायां, जामाता बहु मानितः ॥ ३३० ॥ मुत्कलाप्याखिलं लोकमनुज्ञाप्य नरेश्वरम् । स चचाल प्रियायुक्तः, स्वपुरं प्रति सत्वरम् ॥ ३१ ॥ शिक्षा दत्तेति भूपेन, स्वसुताया विवेकतः । हे वत्से ! त्वं सुखे दुःखे, भूयाः पत्यनुगामिनी ॥ ३२ ॥ प्रहृष्टवदना नित्यं, स्थानमानविचक्षणा । भर्तुः प्रीतिकरा या तु, सा भार्या त्वितरा जरा ॥ ३३ ॥ एवमुत्तमशिक्षां स, दत्त्वाऽथ वलितो नृपः । चलितौ दंपती तौ तु, प्रापतुर्मिथिलापुरीम् ॥ ३४ ॥ देववत्स सदा भोगानन्वभूत् प्रियया सह । अतो भाव्यं भवत्येव, कथाचूडविवाहवत् ३५ ॥ धर्म्मं श्रुत्वा गुरोः पार्श्वे, गृहीतं श्रावकव्रतम् । तच्छुद्धं दम्भमुक्तेन, तेन भावेन पालितम् ॥ ३६ ॥ ततो द्वादशभेदेन, तपस्तेपे स दुष्करम् । सम्यक्त्वं निरतीचारं, पालितं पापनाशनम् ॥ ३७ ॥ कुर्वतोऽस्य क्रियामुग्रां, गृहस्थस्यापि केवलम् । उत्पन्नं चागतः शक्रः, केवलोत्सवहेतवे ॥ ३८ ॥

तदा शासनदेव्यापि, यतिवेषः समर्पितः । सहस्रपत्रपद्मं च, सौवर्णं रचितं सुरैः ॥ ३९ ॥ सद्देशना देवसभासमक्षं, तदा कृता केवलिना सुधाभा । एवं कथाचूडमुनिश्चिरं स, व्रतं प्रपाल्याथ जगाम मोक्षम् ॥ ४० ॥

इति श्रीवीरदेशनायां श्रीधर्मकल्पद्रुमे मुख्यचतुःशाखिके प्रथमदानशाखायां धर्मदत्तकथासंयुक्ते श्रीचन्द्रयशोनृपाख्याने प्रथमः पल्लवः ॥

# अथ द्वितीयः पल्लवः

नरेषु चक्री त्रिदशेषु वज्री, मृगेषु सिंहः प्रशमो व्रतेषु । मतो महीभृत्सु सुवर्णशैलो, भवेषु मानुष्यभवः प्रधानः ॥ १ ॥ महाकुलप्रसूतोऽपि, धर्मोपार्जनवर्जितः । भवेद्भवान्तरेष्वेव, परोच्छिष्टान्नभोजकः ॥ २ ॥ अतः श्रीपतिमित्र ! त्वं, मिथ्यात्वं खलु वर्जय । पुण्यमर्जय तत् किन्तु, यथा स्यात्सुत उत्तमः ॥ ३ ॥ यात्यधोऽधो व्रजत्यूर्ध्वं, नरः स्वैरेव कर्म्मभिः । खनितेव हि कूपस्य, प्रासादस्येव कारकः ॥ ४ ॥ संसारे भ्रमणं नूनं, भवेन्मिथ्यात्वभावतः । दुष्कर्मोपार्जनेनाधोगतिं त्वञ्च गमिष्यसि ॥ ५ ॥ धनश्च कथ्यते तेन, येन सङ्गतिरावयोः । सत्संगत्या सुधर्मत्वं, कुसङ्गात्पापमाचरेत् ॥ ६ ॥ उक्तञ्च—संगवसेणं जायइ, धम्मं पावं च णत्थि सन्देहो । कुरुराय नेहबद्धो, गोहरणं कुणइ गंगेओ ॥ ७ ॥ सतां प्रभावातिशयान्मज्जकोऽपि हि तारकः । जलविन्यस्तशैलेन्द्रैः, सैन्यं रामस्य तारितम् ॥ ८ ॥ अवस्त्वपि हि वस्तु स्यादाश्रयेण महात्मनाम् । स्युः सिद्धरससंविद्धाः, सुवर्णं लोहधातवः ॥ ९ ॥ गुणज्ञत्वं कृतज्ञत्वममात्सर्यमदीनता । दया सत्यं गुरोर्भक्तिरिति सत्पुरुषव्रतम् ॥ १० ॥ इत्थं धर्म्मधनस्याथ, मित्रस्य वचनक्रमम् । श्रुत्वा श्रीपतिरत्यन्तं, मुदितः प्राह तं प्रति ॥ ११ ॥ धर्म्ममित्र ! ममाथ त्वं, सत्यं वद करोमि किम् ? । तेनोक्तं मुञ्च मिथ्यात्वं, सम्यक्त्वं धेहि सर्वथा ॥ १२ ॥ या देवे देवताबुद्धिर्गुरौ च गुरुतामतिः । धर्म्मे च धर्म्मधीः शुद्धा, सम्यक्त्वमिदमुच्यते ॥ १३ ॥ अदेवे देवबुद्धिर्या, गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च, मिथ्यात्वं तद्विपर्ययात् ॥ १४ ॥ सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च, देवोऽर्हन्परमेश्वरः ॥ १५ ॥ महाव्रतधरा धीरा, भैक्ष्यमात्रोपजीविनः । सामायिकस्था धर्मोपदेशका गुरवो मताः ॥ १६ ॥

दुर्गतिप्रपतत्प्राणिधारणाद्धर्म उच्यते । संयमादिर्दशविधः, सर्व्वज्ञोक्तो विमुक्तये ॥ १७ ॥ धर्मस्य तस्य लिङ्गानि, दमः क्षान्तिरहिंसता । तपो दानञ्च शीलञ्च, योगो वैराग्यमेव च ॥ १८ ॥ ये स्त्रीशस्त्राक्षसूत्रादिरागाद्यङ्ककलङ्किताः । निग्रहानुग्रहपरास्ते देवाः स्युर्न मुक्तये ॥ १९ ॥ सर्वाभिलाषिणः सर्वभोजिनः सपरिग्रहाः । अब्रह्मचारिणो मिथ्योपदेशा गुरवो न तु ॥ २० ॥ मिथ्यादृष्टिभिराम्नातो, हिंसाद्यैः कलुषीकृतः । स धर्म्म इति वित्तोऽपि, भवभ्रमणकारणम् ॥ २१ ॥ गोमेधनरमेधाश्वमेधाद्यध्वरकारिणाम् । याज्ञिकानां कुतो धर्म्मः, प्राणिघातविधायिनाम् ? ॥ २२ ॥ यतः—वाजिवारण-लोहानां, काष्ठपाषाणवाससाम् । यथा नारीनृतोयानां, धर्माणाञ्च तथान्तरम् ॥ २३ ॥ उक्तञ्च–साम्राज्यं सुकृतेन शीतरुचिना ज्योत्स्ना दिनं भानुना, जीमूतेन सुकालता सुगुरुणा धर्म्मो नयेनेन्दिरा । सद्विद्या विनयेन मङ्गलततिर्धर्मेण साम्ना सुखम्, नैरोग्यं सुधयाऽर्हता भगवता मुक्तिर्भवेद्भाविनाम् ॥ २४ ॥ अतुलसुखनिधानं सर्वकल्याणबीजम्, जननजलधिपोतं भव्यसत्त्वैकचिह्नम् । दुरिततरुकुठारं पुण्यतीर्थप्रधानं, पिबत जितविपक्षं दर्शनाख्यं सुधाम्बु ॥ २५ ॥ एवं मित्रस्य वचसा, मुक्त्वा मिथ्यात्वकारणम् । आराधयत्सदा श्रेष्ठी, जिनधर्मं कृपामयम् ॥ २६ ॥ जपति स नमस्कारं, त्रिसन्ध्यं देवपूजनम् । आवश्यकं द्विसन्ध्यञ्च, करोति स्म सुभावतः ॥ २७ ॥ वन्दते स्म गुरून्नित्यं, दानं दत्ते स्म साधवे । आराधयंश्च पर्वाणि चकार विविधं तपः ॥ २८ ॥ अमारिं तीर्थयात्राञ्च, दीनोद्धारं तथाऽकरोत् । सप्तक्षेत्रेषु वित्तं स व्ययति स्म महामतिः ॥ २९ ॥ इत्थञ्चाखण्डितं पुण्यं, कुर्वतः प्रियया सह । श्रेष्ठिनः तस्य षण्मासा, व्यतिक्रान्ता महासुखम् ॥ ३० ॥ पाश्चात्यनिशि सोऽन्येद्युर्गतनिद्रो व्यचिन्तयत् । गता धर्मेण षण्मासाः, किं फलं मे भविष्यति ? ॥ ३१ ॥ जैने मते कृते किन्तु,

फलसिद्धिर्न दृश्यते । किमेष निष्फलो धर्मः ? इति ध्यायत्यसौ यदा ॥ ३२ ॥ प्रत्यक्षीभूय तं प्राह, तदा शासनदेवता । रे मूढ ! जितं फलकं, मा मुधा हारयाधुना ॥ ३३ ॥ यथाऽब्धौ भग्नपोतोऽपि, संप्राप्ते फलके सति । तटासन्नं गतः कश्चि-द्वायुनाऽन्यत्र नीयते ॥ ३४ ॥ तथान्तरायकर्माब्धेर्यावत्त्वं पारमागतः । तावच्छङ्काकुवातेन, पुनः पश्चात्प्रपात्यसे ॥ ३५ ॥ शङ्कया रहितो धर्म्मः, कृतो भूरिफलप्रदः । संशयेन कृतं सर्वं, जलरेखेव तद्वृथा ॥ ३६ ॥ स्थले जलं जले रेखा, बुभु-क्षितमुखे फलम् । शङ्कया सहितं पुण्यं, स्थिरत्वं नैव जायते ॥ ३७ ॥ गाहा-आरंभे नत्थि दया, महिलासङ्गेण नासए बंभं । सङ्काए सम्मत्तं, पव्वज्जा अत्थगहणेणं ॥ ३८ ॥ शङ्कया दुष्यते सम्यग्दर्शनं मुक्तिदायकम् । चित्रं लुठितमप्येव, स्वैरिण्येव महाकुलम् ॥ ३९ ॥ यथा निर्गमितं जन्म, धनपालेन शङ्कया । सम्यक्त्वधर्मं कार्यञ्च, तथा गच्छति शून्यताम् ॥ ४० ॥ तद्यथा-पुरे क्षितिप्रतिष्ठाख्ये धनो नाम धनी वणिक् । धनश्रीः प्रेयसी तस्य, धनपालसुतस्तयोः ॥ ४१ ॥ अमुक्तबालभावेऽस्मिन्, सञ्जज्ञे जननीमृतिः । महद्दुःखनिदानं हि, बालानां जननीमृतिः ॥४२॥ यतः-शिशूनां जननीनाशो, भार्यानाशस्तु यौवने । वृद्धस्यात्मजनाशश्च, दुःखमेभ्यः परं नहि ॥ ४३ ॥ धनपालममुं बालं, धनो वीक्ष्य व्यचिन्तयत् । पूतरः कुञ्जरीकर्तुं, कथं शक्यः स्त्रियं विना ॥ ४४ ॥ विमृश्येति धनः श्रेष्ठी, धनदानाद्धनश्रियम् । उपायंस्त प्रशस्ताङ्गीं, गृहिणी गृहमीरितम् ॥ ४५ ॥ यतः—न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥४६॥ ततः सूनुमसूतैषा, विषयारम्भिकं फलम् । सपत्नीसंभवं पुत्रं, निजपुत्रमिवैक्षत ॥ ४७ ॥ पठितुं ज्ञानशालायामिमौ यातौ

१ कोहमोहेणं, इति वा पाठः

महामुदा । पयस्समरिचं पुष्टेः (पुष्ट्यै), प्रगे साऽपाययत्तराम् ॥ ४८ ॥ तत्पुत्रो धनदेवस्तु, निश्शङ्कं पिबति प्रगे । पयःपानं विना पाठः, कथं शक्येत बालकैः ? ॥४९॥ पयः समरिचं दृष्ट्वा, समाक्षिकविरेकया । धनपालः पपौ दुग्धं, विमात्राशङ्कया सदा ॥ ५० ॥ विमातेयं कथं मे स्यात्, सर्वथा हितकारिणी । एवं दुश्चिन्तनादेष, क्षीयते स्म दिने दिने ॥ ५१ ॥ तस्यास्ताडनभीतोऽसौ धनपालः पयोऽपिबत् । अभूद्वल्गुलवातोऽथ, जीवितव्यविघातकः ॥ ५२ ॥ वैद्यानां दर्शितः सोऽथ, धनेन धनदायिना । नासावुवाच दुर्ध्यातं, मतिः कर्मानुसारिणी ॥ ५३ ॥ चताङ्गः प्राप पञ्चत्वमेष वल्गुलवायुना । शङ्कयातङ्कया किं न, भवेद्भवभृतां किल ? ॥ ५४ ॥ निःशङ्कं धनदेवोऽथ, पिबन् दुग्धमनारतम् । अधीती क्रमशो गेहाधिपती राजति स्म सः ॥ ५५ ॥ इहलोकसुखादेष, शङ्कया निरमुच्यत । निर्वृतेर्जनकात्तद्वत्, सम्यक्त्वात्तत्त्वसेवधेः ॥ ५६ ॥ यतः—धनेन हीनोऽपि धनी मनुष्यो, यस्यास्ति सम्यक्त्वधनं प्रधानम् । धनं भवेदेकभवे सुखार्थं, भवे भवेऽनन्तसुखा सुदृष्टिः ॥ ५७ ॥

## इति धनपालकथा ॥

श्रीपते ! शृणु मद्वाक्यं, संशयेन त्वया खलु । दूषितो जिनधर्मोऽथ, तत्फलं तव कथ्यते ॥ ५८ ॥ यथा जात्यं महारत्नं, वरं मुक्ताफलं पुनः । रेखया लाञ्छितं हीनं, स्वल्पमूल्यं भवेत्किल ॥ ५९ ॥ जिनधर्मप्रभावेन, तथा भावी सुतस्तव । परं त्वं सुतसौख्यादि, लप्स्यसे नैव शङ्कया ॥ ६० ॥ तदा श्रीपतिना प्रोक्तमस्ति लोकोक्तिरीदृशी । बुभुक्षातो हि रब्बाया, अपि पानं भवेद्वरम् ॥६१॥ अवर्षणं विनाश्वत्थबिन्दुपातोऽपि तापहृत् । असन्ततेरपीदृक्षः, सुतो मेऽस्तु सुरीश्वरि ! ॥ ६२ ॥ वन्ध्योऽयमिति लोकेऽत्र, मम मा भूत्कदर्थना । इत्युक्ता श्रेष्ठिना देवी, वरं दत्त्वा तिरोदधे ॥ ६३ ॥ प्रत्यूषे स प्रियां प्राह,

रजन्यामद्य सुन्दरि ! । प्रोक्तं शासनदेव्या मे, तव पुत्रो भविष्यति ॥ ६४ ॥ श्रुत्वैवमवदत्कान्ता, स्वामिन् ! स्वप्ने मयापि च । पूर्णकुम्भः फलोपेतो, दृष्टो मन्दिरमध्यगः ॥ ६५ ॥ भविष्यति सुतो नूनं, एतत्स्वप्नानुभावतः । इति प्रमुदितौ तौ द्वौ, विचारं चक्रतुर्मिथः ॥ ६६ ॥ तद्दिनात्स्वर्गतश्च्युत्वा, पुण्यात्मा कोऽपि निर्जरः । उत्पन्नः श्रीमतीकुक्षौ, जाताश्च शुभदोहदाः ॥ ६७ ॥ नवमासेषु पूर्णेषु, सार्धाष्टदिवसेषु च । श्रेष्ठिनी सुषुवे सूनुं, मार्तण्डमिव पूर्वदिग् ॥ ६८ ॥ तदा वर्धापितः श्रेष्ठी, स्वजनैरतिहर्षितैः । सोत्साह उत्सवं चक्रे, चक्रे चामारिघोषणम् ॥ ६९ ॥ सकलं बलिकर्मादि, तथा चन्द्रार्कदर्शनम् । षष्ठीजागरणं चापि, सर्वमेतत्कृतं तदा ॥ ७० ॥ धर्म्मदत्तेति तन्नाम, कृतं धर्मो ददौ यतः । पित्रोर्मनोरथैः सार्धं, ववृधे स दिने दिने ॥ ७१ ॥ कदोत्सङ्गे कदा स्कन्धे, हस्ताद्धस्तेषु सञ्चरन् । पोषितो लालितश्चापि, जातः षड्वार्षिकः सुतः ॥ ७२ ॥ सञ्जाते सप्तमे वर्षे, स महोत्सवपूर्वकम् । पठितुं लेखशालायां, मुक्तः पित्रा महामतिः ॥ ७३ ॥ यतः—विना विद्यां सुरूपोऽपि, नार्थ्यते कुत्रचिन्नरः । यथा चातुलिपुष्पाणि, नार्थ्यन्ते रूपवन्त्यपि ॥ ७४ ॥ किं कुलेन विशालेन, विद्याहीनस्य जन्मना । सविद्यः पूज्यते लोके, निर्विद्यः परिभूयते ॥ ७५ ॥ अजातमृतमूर्खेभ्यो, मृताजातौ सुतौ वरौ । यतस्तौ स्वल्पदुःखाय, यावज्जीवं जडो दहेत् ॥ ७६ ॥ विद्या यशस्करी पुंसां, विद्या श्रेयस्करी मता । सम्यगाराधिता विद्या, देववत्कामदायिनी ॥ ७७ ॥ विद्वत्त्वं च नृपत्वञ्च, नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा, विद्वान्सर्व्वत्र पूज्यते ॥ ७८ ॥ अनभ्यासे विषं शास्त्रं, अजीर्णे भोजनं विषम् । दरिद्रस्य विषं गोष्ठी, वृद्धस्य तरुणी विषम् ॥ ७९ ॥ गतेऽपि

(१) आवल इति देशीयाभिधानम्

वयसि ग्राह्या, विद्या सर्वात्मना बुधैः। यदीह स्यान्न फलदा, सुलभा चान्यजन्मनि ॥ ८० ॥ देवताराधने दाने, विद्याभ्यासे सदौषधे । क्षमायां परमो यत्नः, कर्त्तव्यो विजिगीषुणा ॥ ८१ ॥ धनहीनो न हीनस्तु न धनं कस्य निश्चलम् । विद्याहीनस्तु यः कश्चित्, स हीनः सर्ववस्तुषु ॥ ८२ ॥ विद्या यद्यस्ति का चिन्ता, वराकोदरपूरणे । शुकोऽपि कूरमश्नाति, चत्वरे रामसुच्चरन् ॥ ८३ ॥ यत्र विद्यागमो नास्ति, यत्र नास्ति धनागमः । यत्र आत्मसुखं नास्ति, न तत्र दिवसं वसेत् ॥ ८४ ॥ जलबिन्दुनिपातेन, क्रमशः पूर्यते घटः । स हेतुः सर्वविद्यानां, धर्मस्य च धनस्य च ॥ ८५ ॥ पाण्डित्ये गणिते शिल्पे, तथा सर्वकलासु च । धर्मार्थकाममोक्षेषु, पुरुषः कुशलो भवेत् ॥ ८६ ॥ पण्डितेषु गुणाः सर्वे, मूर्खे दोषास्तु केवलाः । तस्मान्मूर्खसहस्रेण, प्राज्ञ एको न लभ्यते ॥ ८७ ॥ वरं पर्वतदुर्गेषु, भ्रान्तं वनचरैः सह । मा मूर्खजनसंपर्कः, सुरेन्द्रभवनेष्वपि ॥ ८८ ॥ मूर्खस्तु परिहर्त्तव्यः, प्रत्यक्षो द्विपदः पशुः । विध्यते वाक्यशल्येन, अदृष्टः कण्टको यथा ॥ ८९ ॥ मूर्खशिष्योपदेशेन, दुष्टस्त्रीभरणेन च । द्विषतां संप्रयोगेन, पण्डितोऽप्यवसीदति ॥ ९० ॥ मूर्खाणां पण्डिता द्वेष्या, अधनानां महाधनाः । पण्याङ्गनाः कुलस्त्रीणां, सुभगानाञ्च दुर्भगाः ॥ ९१ ॥ धनधान्यप्रयोगेषु, विद्यासंग्रहणेषु च । आहारे व्यवहारे च, सोद्यमश्च सदा भवेत् ॥ ९२ ॥ यतः—अलसस्य कुतो विद्या,? अविद्यस्य कुतो धनम् ?। अधनस्य कुतो मित्रममित्रस्य कुतो बलम् ? ॥ ९३ ॥ अबलस्य कुतो मानो, ? ह्यमानस्य कुतो यशः ?। यशोरहितदेहस्य, जीवितान्मरणं वरम् ॥ ९४ ॥ अत एव वरा विद्या, सेविता सर्वकार्यकृत् । यस्याः प्रसादतो विश्वे, गुरुशुक्रसमो भवेत् ॥ ९५ ॥ किङ्गर्जितेन वृषभेण पराजितेन ? किङ्कोकिलेन च रुतेन गते वसन्ते ?। किङ्कातरेण बहुशस्त्रपरिग्रहेण ? किञ्जीवितेन पुरुषेण निर-

त्तरेण १ ॥ ९६ ॥ गुरुशुश्रूषया विद्या, पुष्कलेन धनेन वा । अथवा विद्यया विद्या, चतुर्थी नोपलभ्यते ॥ ९७ ॥ हेतुयुक्तश्च तथ्यश्च, सत्यं साधु जनप्रियम् । मूर्खो वक्तुं न जानाति, स जिह्वां किं न रक्षति ? ॥ ९८ ॥ विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमा विद्या, स्त्रीरत्नं दुष्कुलादपि ॥ ९९ ॥ सन्तोषस्त्रिषु कर्त्तव्यः, स्वदारे भोजने धने । त्रिषु चैव न कर्त्तव्यो, दाने चाध्ययने तपे ॥ १०० ॥ चतुर्दशीकुहूराकाष्टमीषु न पठेन्नरः । सूतके च तथा राहुग्रहणे चन्द्रसूर्ययोः ॥ १०१ ॥ अथाल्पकालतः सर्वं, पूर्वाधीतमिव श्रुतम् । पठितं धर्मदत्तेन, कलाः शेषाश्च शिक्षिताः ॥ १०२ ॥ स पश्चात्पुण्यशालायां, पठनार्थं निवेशितः । संप्राप्ता साधुपार्श्वे च, तेन धर्मस्य सत्कला ॥ १०३ ॥ गाहा—बावत्तरिकलाकुसला, पण्डियपुरिसा अपण्डिया चेव । सव्वकलाण य पवरं, धम्मकलं जे ण जाणन्ति ॥ ४ ॥ आवश्यकं द्विवेलं च, त्रिकालं जिनपूजनम् । चक्रे धर्म्मी धर्मदत्तो, विशेषाज्जनकादपि ॥ ५ ॥ प्रत्याख्यानं करोति स्म, प्रासुकञ्च जलं पपौ । बालकोऽपि गृहस्थोऽपि, यतिवत्स क्रियां व्यधात् ॥ ६ ॥ क्रमेण प्राप तारुण्यं, वनिताजनमोहनम् । सुता तेन महेभ्यस्य, परिणीता महोत्सवात् ॥ ७ ॥ परं शास्त्ररसे मग्नो, नामुचत् पुस्तिकां करात् । बालत्वे यः कृतोऽभ्यासस्तत्रैव रमते जनः ॥ ८ ॥ यथा कस्मिन्पुरे श्राद्धो, जिनदत्ताभिधोऽभवत् । अश्वादिकपशूनास्ति, न करोति कदापि सः ॥ ९ ॥ एकदा तत्पुरेशस्य, नवोऽश्वः केन ढौकितः । जात्याश्वं लक्षणोपेतं, राजा तं वीक्ष्य हर्षितः ॥ १० ॥ अन्यस्य कस्य विश्वासो, भूपतेनैव जायते । तेनासौ जिनदत्तस्य, हयो रक्षार्थमर्पितः ॥ ११ ॥ दत्वाश्वरक्षणे शिक्षां, घनां राज्ञा स मानितः । हयं

१ मनः इति वा.

लात्वा गतो गेहे, श्रावकोऽसौ व्यचिन्तयत् ॥ १२ ॥ हा कोऽयं मम सन्तापः पतितः केन कर्मणा ? । पशुपालनजं दुःखं, नृणां भवति दुस्सहम् ॥ १३ ॥ मित्रपुत्रकलत्रादेः, विश्वसामि न कस्यचित् । यत्नेन रक्षणीयोऽयं, राजकार्यं हि दुष्करम् ॥ १४ ॥ ध्यात्वेति हृदि तेनाथ, गुप्तस्थाने धृतो हयः । परिचर्यां स्वयं कुर्याज्जलपाने स्वयं व्रजेत् ॥ १५ ॥ जैनप्रासाद एकोऽस्ति, सरोमार्ग्गे च तत्र सः । तिस्रः प्रदक्षिणा दत्वा, जिनं नत्वाऽग्रतोऽगमत् ॥ १६ ॥ अश्वं सरसि पाययित्वा, वलित्वा तज्जिनालये । पुनः प्रदक्षिणां दत्वा, जिनं नत्वाऽगमद् गृहे ॥ १७ ॥ जलपानक्षणे नित्यमेवं कुर्वत्युपासके । सुरालयं सरश्चैव, स जानाति तुरङ्गमः ॥ १८ ॥ अन्यमार्ग्गे न यात्येव, प्रेरितोऽपि हयोत्तमः । राज्ञा तस्य प्रभावेन, जिता अन्ये नृपा घनाः ॥ १९ ॥ सप्रभावो हयो ज्ञातस्ततः केनापि वैरिणा । प्रेषितः कपटी कोऽपि, हयापहारहेतवे ॥ २० ॥ स दम्भश्रावकीभूय, गतोऽश्वस्थितिमन्दिरे । साधर्मिकतया तस्य, श्राद्धेनावर्जना कृता ॥ २१ ॥ तस्यापि बाह्यरङ्गेण, विश्वस्तं श्रेष्ठिनो मनः । श्राद्धेन सर्ववार्ताऽपि, तदग्रे प्रीतितः कृता ॥ २२ ॥ तेन मायाविना वार्ता, कृता पुण्यस्य भूरिशः । श्राद्धेन भद्रकत्वात्तु, तच्चित्तं नोपलक्षितम् ॥ २३ ॥ यतः—विद्यादम्भः क्षणस्थायी, दानदम्भो दिनत्रयम् । रसदम्भस्तु षण्मासान्, धर्मदम्भस्तु दुस्तरः ॥ २४ ॥ सज्जनेनापि किं तेन, यः शङ्खसमलक्षणः ? । धवलो बहिरत्यन्तमन्तस्तु कुटिलस्थितिः ॥ २५ ॥ काव्यं—कोऽर्थान्प्राप्य न गर्वितो ? विषयिणः कस्यापदोऽस्तङ्गताः ? । स्त्रीभिः कस्य न खण्डितं भुवि मनः ? को नाम राज्ञां प्रियः ? । कः कालस्य न गोचरान्तरगतः ? कोऽर्थी गतो गौरवम् ?, को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ? ॥ २६ ॥ अन्यदा तस्य दक्षस्य, श्राद्धस्याह्वानहेतवे । विवाहावसरे मित्रं, परग्रामात्समाययौ ॥ २७ ॥ तं धर्मबान्धवं ज्ञात्वा, कपट-

श्रावकं तदा । रक्षार्थं तस्य दत्त्वाश्वं, गतो ग्रामे स मित्रयुक् ॥ २८ ॥ मार्जारस्य यथा दुग्धं, रक्षणार्थं समर्प्यते । तथा मायाविनस्तस्य, तुरगोऽसौ समर्पितः ॥ २९ ॥ गृहे पुत्रकलत्रादेर्दत्ता शिक्षा न कस्यचित् । ततः स एव मायावी, चकार हयपालनम् ॥ ३० ॥ रात्रौ घोरान्धकारे स, पापात्मा कपटी नरः । अश्वमारुह्य वेगेन, निर्गतो मन्दिराद्बहिः ॥ ३१ ॥ श्राद्धेन शिक्षितो वाजी, मार्गेऽन्यस्मिन्न गच्छति । चैत्ये सरोवरे याति, पश्चादायाति मन्दिरे ॥ ३२ ॥ ताडितोऽपि कशाघातैरन्यमार्गे न गच्छति । क्रियमाणे गतायाते, विभाता सर्वशर्वरी ॥ ३३ ॥ अश्वं मुक्त्वा स मायावी, प्रणष्टो दिवसोदये। आगतः श्रावको ग्रामात्, वाजीन्द्ररक्षणोत्सुकः ॥ ३४ ॥ व्यलोकयद्यदा सोऽश्वं, ददर्श पीडितं तदा । ज्ञात्वा मायाविवृत्तान्तं, भूपतेस्तं न्यवेदयत् ॥ ३५ ॥ यथैकमार्गवर्त्यैव, स बभूव तुरङ्गमः । तथाऽसौ धर्मदत्तोऽपि, शास्त्रैकरसिकोऽभवत् ॥३६॥ अन्येद्युः श्रेष्ठिनी प्राह, भर्तारं श्रीपतिं प्रति । सुतोऽयं सर्वशास्त्रज्ञो, दृश्यते मूर्खवद्भृशम् ॥ ३७ ॥ काव्यम्—काव्यङ्करोतु परिजल्पतु संस्कृतं वा, सर्वाः कलाः समधिगच्छतु वाच्यमानाः । लोकस्थितिं यदि न वेत्ति यथानुरूपां, सर्वस्य मूर्खनिकरस्य स चक्रवर्ती ॥ ३८ ॥ लोकमार्गं नरो यावन्नैव जानाति कञ्चन । शृङ्गपुच्छपरिभ्रष्टः, स ध्रुवं पशुरेव हि ॥ ३९ ॥ यथा वेदचतुर्वेत्ताप्यन्यशास्त्रश्रमं विना । विप्रः पशुसमस्तद्वद्, व्यवहारं विना नरः ॥ ४० ॥ श्लोकः—अपठाः परिडताः केचित्, केचित्पठितपण्डिताः । अपठा मूर्खकाः केचित्, केचित्पठितमूर्खकाः ॥ ४१ ॥ नात्यन्तं सरलैर्भाव्यं, गत्वा पश्य वनस्पतीः । सरलास्तत्र च्छिद्यन्ते, कुब्जास्तिष्ठन्ति पादपाः ॥ ४२ ॥ नातिमौग्ध्यं न काठिन्यं, नात्युच्चं नातिनीचकम् । एकान्तं किन्तु नो रम्यं, सर्वं समतया शुभम् ॥ ४३ ॥ विद्याभिरनवद्याभिरपि कार्यं न सिध्यति । व्यवहारज्ञता नो चेच्चत्वारोऽत्र निदर्श-

नम् ॥ ४४ ॥ यथा चन्द्रपुरे पूर्वं, बभूव चन्द्रजिन्नृपः । राज्ञी चन्द्रानना तस्य, मन्त्रीशो बुद्धिसागरः ॥ ४५ ॥ राज्ञोऽग्रे कथितं केन, विद्वानेव नरो वरः । मन्त्रिणोक्तं बुधो मूर्खो, व्यवहारं न वेत्ति यः ॥ ४६ ॥ तत्परीक्षाकृते राज्ञा, चत्वारो राजपुत्रकाः । सुरूपाः सुभगाः सौम्याः, पाठिता भूमिमन्दिरे ॥ ४७ ॥ व्याकरणं प्रमाणञ्च, ज्योतिषं वैद्यकं तथा । पाठयित्वा पण्डितेन, ते भूपस्य समर्पिताः ॥ ४८ ॥ तदा भूपतिना विप्रो, द्रव्यैः सन्तोष्य वालितः । पुत्राः संवाहिताः पित्रा, सर्वे विंशतिवार्षिकाः ॥ ४९ ॥ स्वसमीपे निविष्टास्ते, पृष्टा भूपेन किञ्चन । उत्तरं दिव्यभाषाभिः, कुमाराः कोविदा ददुः ॥ ५० ॥ प्रधानं प्राह भूपोऽथ, कीदृशा नन्दना बुधाः । एते पठितमूर्खा हि, प्रधानोऽप्यब्रवीदिति ॥ ५१ ॥ कथं मूर्खा नृपोऽप्यूचे ?, भूयोऽपि सचिवोऽब्रवीत् । लोकाचारं न जानन्ति, शुकवत्पठिता अमी ॥ ५२ ॥ परीक्षार्थं ततस्तेषां, पुत्रयुक्तो नृपो गृहे । बहुमानात् प्रधानेन, भोजनार्थं निमन्त्रितः ॥ ५३ ॥ पक्वान्नं पञ्चधा भुक्तं, भुक्ता फलहुलिस्तथा । कुमाराः खजकं वीक्ष्य, प्रजल्पन्ति परस्परम् ॥ ५४ ॥ किमिदं हि बहुच्छिद्रं, चतुष्कोणं भयावहम् । नैव किञ्चिद्वयं विद्मो, यदत्रैतत्किमुच्यते ॥ ५५ ॥ इत्युक्त्वा ते समुत्थाय, प्रोचुरुच्चैरिदं वचः । यत्र च्छिद्रं किमप्यस्ति, नात्र स्थेयं बुधैः क्षणम् ॥ ५६ ॥ छिद्रेऽनर्था भवन्त्युच्चैस्तत्त्याज्यं स्थानकं ततः । चलितास्तेऽपि चत्वारस्त्यक्त्वा भोजनभाजनम् ॥ ५७ ॥ ज्ञातं तच्चेष्टितं राज्ञा, मन्त्रीशकृतसंज्ञया । लोकस्थितिं न जानन्ति, ह्येते वेदज्ञवाडवाः ॥ ५८ ॥ एषामाचरणं गत्वा, विलोक्य नष्टचर्यया । इत्युक्त्वा मन्त्रिणा तेन, तत्पृष्ठे प्रहितो नरः ॥ ५९ ॥ यावदग्रे गता राजपुत्रास्तावत् खरः पुनः । राजद्वारे स्थितो दृष्टो, रङ्गेण परितः स्फुरन् ॥ ६० ॥ अन्योऽन्यं ते च पृच्छन्ति, कोऽयं पञ्चमबान्धवः ? । खरं शास्त्रप्रमाणेन, भ्रातृबुद्ध्या

यस्तिष्ठति स बान्धवः ॥ ६२ ॥
स्पृशन्ति ते ॥ ६१ ॥ यतः—आतुरे व्यसनप्राप्ते, दुर्भिक्षे शत्रुविग्रहे । राजद्वारे स्मशाने च, यस्तिष्ठति स बान्धवः ॥ ६२ ॥
इति मत्वा खरं लात्वा, पुनरप्यग्रतोऽगमन् । वेगाद्गच्छन्तमुष्ट्रं चाऽपश्यन्नेकं कुमारकाः ॥ ६३ ॥ पुनः पृच्छन्ति भो भ्रातः !
कोऽयं गच्छति वेगतः । परः प्राह न जानीथ, धर्म्मस्त्वरितगाम्ययम् ॥ ६४ ॥ चलं चित्तं चलं वित्तं, चलं यौवनमावयोः ।
प्रसारय करं पात्रे, धर्म्मस्य त्वरिता गतिः ॥ ६५ ॥ स्थैर्यं सर्वेषु कार्येषु, शंसन्ति नयपण्डिताः । बह्वन्तराययुक्तस्य, धर्म-
स्य त्वरिता गतिः ॥ ६६ ॥ सर्वे वदन्ति हुं ज्ञातं, धर्मस्त्वरितगाम्ययम् । इत्युक्त्वा कन्धरायां ते, गृहीत्वा चोष्ट्रमूचिरे
॥ ६७ ॥ धर्म त्वं भूरिभाग्येन, प्राप्त इष्टश्च दीयते । उक्त्वैवमौष्ट्रग्रीवायां, रासभं ते बबन्धिरे ॥ ६८ ॥
सुकुले योजयेत् कन्यां, पुत्रे विद्यां नियोजयेत् । व्यसने योजयेत् शत्रुमिष्टं धर्मे नियोजयेत् ॥ ६९ ॥ यन्त्रितौ रासभोष्ट्रौ
ते, गृहीत्वा चलिताः पथि । तत्कौतुकं जनाः प्रेक्ष्य, जल्पन्तीति परस्परम् ॥ ७० ॥ निर्द्रव्यं प्रेक्षणं लोका, एत्य पश्यत
पश्यत । दक्षत्वं राजपुत्राणां, पठितानां हि दृश्यते ॥ ७१ ॥ इति हास्यास्पदं जातास्ततो राज्ञा निराकृताः । नागन्तव्यमरे
मूर्खा !, युष्माभिर्नगरे मम ॥ ७२ ॥ रथ एको महाजीर्णो, वृषभद्वयसंयुतः । प्रधानवचसा राज्ञा, कुमाराणां समर्पितः
॥ ७३ ॥ तं रथं ते समारुह्य, चेलुरेकदिशं प्रति । एकस्मिन्नगरासन्ने, कानने च समागताः ॥ ७४ ॥ भोजनावसरे तत्राप्येकः
पाकाय संस्थितः । एको जगाम शाकार्थमेको घृतकृते गतः ॥ ७५ ॥ एको गतो बलीवर्दचारणाय कुमारकः । पृथक् पृथक्
क्रियां कर्तुमेवं सर्वे समुद्यताः ॥ ७६ ॥ जातः कलकलः शब्दः, पाकभाण्डान्तरे तदा । तेनाऽचिन्त्यस्य शब्दस्य, निष्पत्ति-

१ एतत् इति वा.

नास्ति लक्षणे ॥ ७७ ॥ मिथ्याशब्दं वदत्येतदस्य शिक्षां ददाम्यहम् । ततो लकुटमुत्पाट्य, प्रहारं भाजनेऽमुचत् ॥ ७८ ॥ भग्नं भाण्डमभून्मौनं, लग्ना शिक्षाऽस्य सत्यतः । इत्युदित्वा सुखं सुप्तो, निश्चिन्तो जडधीर्नरः ॥ ७९ ॥ वातश्लेष्मादि-कारीणि, त्यक्त्वान्यव्यञ्जनान्यथ । सर्वरोगहरं निम्बं, लात्वा द्वितीय आगतः ॥ ८० ॥ तृतीयो घृतमादाय, गच्छन्नेवमचि-न्तयत् । घृताधारेऽत्र किं पात्रं, ? पात्राधारे नु किं घृतम् ? ॥ ८१ ॥ परीक्षार्थमधः पात्रं, कृतं यावद्गतं घृतम् । घृतं यातु परं भग्नः, सन्देह इति सोऽब्रवीत् ॥ ८२ ॥ वृषौ हृतौ च चौरेण, पश्यन्नपि चतुर्थकः । तरुच्छायाश्रितो मूर्खो, लग्नभावं व्यलोकयत् ॥ ८३ ॥ स्थिरलग्ने स्थिरांशे च, स्थिरे (रो) भवति चन्द्रमाः । इति योगे समायाते, स्वयमायास्यतो वृषौ ॥ ८४ ॥ इति ज्ञात्वा बलीवर्दवालनार्थं स नोत्थितः । मिलित्वा तेऽथ चत्वारः, पुरमध्ये समागताः ॥ ८५ ॥ भ्रमन्तस्तत्र दीनास्या, वराकास्ते बुभुक्षिताः । दिनस्य पश्चिमे यामे, सोमश्रेष्ठ्यापणे गताः ॥ ८६ ॥ प्रश्नपूर्वं गृहे नीत्वा, दत्वा वैता(का)लिकं ततः । प्रभाते श्रेष्ठिना तेषां, कार्यं दत्तं पृथक् पृथक् ॥ ८७ ॥ एकस्याज्यभृतः कूटो, विक्रयार्थं समर्पितः । मार्गे भोः तस्कराः सन्ति, गन्तव्यं सावधानतः ॥ ८८ ॥ एवं शिक्षां प्रदत्त्वाऽसौ, चालितो वेगतोऽगमत् । अर्धमार्गे महारण्ये, कूटमुत्तार्य सोऽब्रवीत् ॥ ८९ ॥ भो अत्र कोऽपि चौरोऽस्ति, स प्रकटीभवत्विह । उक्त्वैवं कूटमुद्घाट्य, यावदालोकयत्स्वयम् ॥ ९० ॥ प्रतिरूपमाज्यमध्ये, दृष्ट्वा चित्ते चमत्कृतः । श्रेष्ठिना कथितं सत्यं, प्रत्यक्षश्चौर ईक्ष्यते ॥ ९१ ॥ दास्यामि साम्प्रतं शिक्षामेवमुक्त्वाऽक्षिपत्क्षितौ । कूटकं तमधोवक्त्रं, गतं सर्पिः सतस्करम् ॥ ९२ ॥ चिन्तितं तेन यात्वाज्यं, कृतं रम्यं मयाधुना । मृतः पुत्रः परं वध्वा, लद्सटाटो निवारितः ॥ ९३ ॥ अथ कूटं करे कृत्वा, स पश्चा-

द्रलितो रयात् । रथस्थौ भ्रातरौ चान्यौ, द्वौ काष्ठाय वने गतौ ॥ ९४ ॥ मार्गे रथस्य चित्कारशब्दं श्रुत्वेत्यवोचताम् । रोदित्येष रथः कस्मात्, कश्चिद्रोगो विभाव्यते ॥ ९५ ॥ मुक्त्वा रथं समुत्तीर्णौ, तौ द्वौ यावदपश्यताम् । तावन्न श्रूयते शब्दो, मृतोऽसौ मौनमाश्रितः ॥ ९६ ॥ एवं विचिन्त्य संस्कारं, विधाय शकटस्य तौ । स्नानार्थं तटिनीतीरे, गत्वा स्नानं च चक्रतुः ॥ ९७ ॥ अथाऽस्मिन्समये तत्र, बान्धवो घृतविक्रयी । तृषार्त्तो जलपानार्थमागतो तटिनीतटे ॥ ९८ ॥ त्रयोऽपि मिलितास्तत्र, बहिरागत्य नीरतः । मिथो जल्पन्ति नो नद्या, विश्वासः क्रियते बुधैः ॥ ९९ ॥ यतः–नदीनाञ्च नखीनांञ्च[1], शृङ्गिणां शस्त्रपाणिनाम् । विश्वासो नैव कर्त्तव्यः, स्त्रीषु राजकुलेषु च ॥ २०० ॥ इति मत्वा तदा मुग्धा, धूर्त्तत्वरहिता मिथः । गणयन्तो विनात्मानं, सर्वान्संभालयन्ति ते ॥ २०१ ॥ मिथो वदन्त्यहो एको, जनः किं नोऽत्र दृश्यते । वाहिन्या भक्षितो भ्राता, रुदन्तीति मुहुर्मुहुः ॥ २ ॥ भूयोऽपि गणयन्नेको, नात्मानं गणयेज्जडः । इत्थं कृत्वाऽरुदन्नुच्चैर्गोपाला मिलितास्तदा ॥ ३ ॥ कथं रुदिथ तैरुक्तं, ? किं गतं ? केन पीडिताः ? । तेप्याहुर्न गतं किञ्चिदेको भ्राता विलोक्यते ॥ ४ ॥ यूयं कति स्थ तैः पृष्टं, ? मुग्धैरुक्तं वयं त्रयः । गोपैरुक्तं त्रयः स्थुला, दृश्यन्ते ( ध्वे ) रुद्यते कथम् ? ॥ ५ ॥ पतित्वा पादयोस्तेषां, कुमारा ऊचिरे त्रयः । यूयं दर्शयतास्माकं, तृतीयं हे नरोत्तमाः ! ॥ ६ ॥ स्थापयित्वा त्रिकं श्रेण्यां, गणयित्वा च पाणिना । गोपालैर्दर्शितास्तेषां, ते त्रयोऽपि सहोदराः ॥ ७ ॥ ततो जाता सहर्षास्ते, निर्गतास्तटिनीतटात् । यावत्सोमगृहे यान्ति, तावत्तुर्यकृतं शृणु ॥ ८ ॥ सोमश्रेष्ठिगृहे मातामही वृद्धाऽस्त्यचेतना । श्लेष्मलाला-

---

१ नखिनां च नदीनां च, इति पाठः साधुः.

दिग्भिर्व्याप्ता, जराकष्टेन पीडिता ॥ ९ ॥ यतः काव्यम्—गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता, दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रञ्च लालायते। वाक्यं नैव शृणोति बान्धवजनः पत्नी न शुश्रूषते, धिक्कष्टं जरयाऽभिभूतमनुजं पुत्रोऽप्यवज्ञायते ॥ १० ॥ वदनं दशनविहीनं, वाचो न परिस्फुटा गता शक्तिः। विगता चेन्द्रियवृत्तिः, पुनरपि बाल्यं कृतं जरया ॥ ११ ॥ वृद्धाया मक्षिकादंशोपद्रवस्य निवारणे। नीरपानादिशुश्रूषाकृते मुक्तश्चतुर्थकः ॥ १२ ॥ वृद्धायामथ सुप्तायां, मक्षिका मुखसंस्थिताः। उड्डापयन्नुवाचासौ, रे युष्मान्वारयाम्यहम् ॥ १३ ॥ युष्माभिर्मक्षिका नात्रागन्तव्यं कथ्यते घनम्। विकलास्ता न जानन्ति, पुनरागत्य संस्थिताः ॥ १४ ॥ उड्डाप्य पुनरूचेऽसौ, वारयामि मुहुर्मुहुः। सुशिक्षामथ दास्यामि, मम दोषो न दीयते ॥१५॥ इत्युक्त्वा मुशलं स्थूलमुत्पाट्य मक्षिकामिषात्। विमुक्तं तेन वृद्धाङ्गे, तद्घाताज्जरती मृता ॥१६॥ श्रेष्ठी निशम्य निर्घातमागाच्छीघ्रमुवाच च। किं कृतं रे महादुष्ट! जननी मारिता मम ॥ १७॥ सोऽप्याख्यत्किं मया चक्रे?, मक्षिका वारिताः पुनः। न गच्छन्ति तदा शिक्षा, दत्ता चान्यत्कृतं नहि ॥ १८ ॥ तस्या विधाय संस्कारं, स श्रेष्ठी मातृशोकतः। रुदन्नस्ति गृहे यावत्, तावत्तेऽप्यागतास्त्रयः ॥ १९ ॥ गद्गदाक्षरमूचाते, रथमूर्त्युमुभौ नरौ। एकेनोक्तं प्रविष्टश्च, तस्करः कूटकान्तरे ॥२०॥ चतुर्णामपि चातुर्यं, ज्ञात्वैतत् श्रेष्ठिना ततः। दत्त्वा च भोजनं किञ्चिद्, गृहान्निष्कास्य मोचिताः ॥२१॥ ज्ञात्वा पठितमूर्खाणां, स्वरूपं स्वचराननात्। आकार्य भूभुजा पुत्रा, व्यवहारविदः कृताः ॥२२॥ इति अव्यवहारज्ञकथा।

श्रीमती प्राह हे नाथ! यथा ते राजपुत्रकाः। पठिताः कथिता अज्ञास्तथायं तव नन्दनः ॥ २३ ॥ लेखशाला पुण्यशाला, कामशाला तृतीयका। पूर्वमुक्ता हि हे नाथ! वर्गत्रितयसाधने ॥ २४ ॥ ततोऽयं धर्मदत्तोऽपि, कामार्थौ नैव

अथोचे श्रीपतिः पत्नीं, कोऽप्युपायोऽस्ति कामिनि ! । कृते
सेवते । तथा कुरु यथा नाथ ! दक्षो भवति नन्दनः ॥ २५ ॥ श्रेष्ठिनी प्राह पुत्रोऽयं, द्यूतकाराय दीयते । दक्षत्वं दिवसैः स्तोकैः, कुर्व्वन्ति
यस्मिन्नयं पुत्रः, सर्वत्र कुशलो भवेत् ॥ २६ ॥ इत्थं श्रुत्वाऽब्रवीत् श्रेष्ठी, का कुबुद्धिरियं तव ! उत्पन्ना विपरीता किं, मतिः सर्वार्थनाशिनी ?
कितवा नृणाम् ॥ २७ ॥ किन्तु तां दुर्म्मतिं दत्ते, यया रुलति रङ्कवत् ॥ २९ ॥
॥ २८ ॥ यतः—रुष्टो देवोऽपि किं कस्य, चपेटां दातुमुद्यतः ? । कोपीनं वसनं कदन्नम-
द्यूतं वेश्यानुरागश्च, धातुवादश्च विभ्रमः । योगिसेवा सदा रुष्टे, दैवेऽमी स्युः शरीरिणाम् ॥ ३० ॥ व्यापाराः परवञ्चनानि सुहृदश्चौरा
शनं शय्या धरा पांसुला, जल्पोऽश्लीलगिरः कुटुम्बकजनो वेश्या सहाया विटाः । द्यूतं सर्वापदां धाम, द्यूतं दीव्यन्ति दुर्धियः । द्यूतेन
महान्तो द्विषः, प्रायः सैष दुरोदरव्यसनिनः संसारवासक्रमः ॥ ३१ ॥ हे प्रिये ! शोभना नैव, बुद्धिरेषा यतः सुतः । कुसंसर्गात् कुतो दक्षो ?,
कुलमालिन्यं, द्यूताय श्लाघ्यतेऽधमः ॥ ३२ ॥ कुसङ्गात्किल दोषाः स्युः, सत्सङ्गात्सुगुणाः पुनः । न श्रुता किं पुरा वार्त्ता, वनस्थशुक-
जीवितं किं विपाद्भवेत् ? ॥ ३३ ॥ तत्रैको जगृहे भिल्लैर्गृहीतस्तापसैः परः ॥ ३५ ॥ किरात-
योर्द्वयोः ॥ ३४ ॥ वने क्वापि द्रुशाखायां, नीडे जातं शुकद्वयम् । लक्षं याति व्रजेत्कोटिरिति
तापसस्थाने, शृणुतस्तद्वचांसि तौ । कोऽपि राजा हयाकृष्टः, समागाद्भिल्लसन्निधौ ॥ ३६ ॥ नैव दृष्टं परं किञ्चिदश्वं लात्वा समागताः ।
भिल्लशुकोऽवदत् । तच्छ्रुत्वा धाविता भिल्लाः, सर्वाङ्गे शोधितो नृपः ॥ ३७ ॥ भूपं प्रत्यूचुरस्माकं, सत्यं ज्ञानी शुको वदेत् । गुप्तं किमस्ति ते पार्श्वे,
पुनरेतत् शुकोऽवादीद्गता भिल्ला नृपान्तिके ॥ ३८ ॥ राजाऽऽह सोऽब्रवील्लक्षं, कोटिरायाति मद्गृहे । इत्युक्ते तुरगं दत्वा, भिल्लैर्मुक्तो नराधिपः
सत्यं जल्पाभयं तव ॥ ३९ ॥

॥ ४० ॥ अग्रे तु मुनिकीरेण, प्रोक्तं यात्यतिथिर्महान् । तापसैर्नृपमानीय, विहिताऽतिथिसत्क्रिया ॥ ४१ ॥ राज्ञा कीरं करे कृत्वा, पृष्टमेकेन ग्राहितः । सत्कारितोऽहमेकेन, शुकयुग्मे किमन्तरम् ? ॥ ४२ ॥ शुक उवाच–माताप्येका पिताप्येको, मम तस्य च पक्षिणः । अहं मुनिभिरानीतः, स चानीतो गवाशिभिः ॥ ४३ ॥ गवाशनानां स गिरः शृणोति, अहञ्च राजन्मुनिपुङ्गवानाम् । प्रत्यक्षमेतद्भवतापि दृष्टं, संसर्गजा दोषगुणा भवन्ति ॥ ४४ ॥ इति शुकयुग्मकथानकम् ।

सन्तोऽपि खलसंसर्गात्, जायन्ते दोषभाजनम् । अतः कान्ते ? कुसंसर्गादहितो वार्यते यतः ( ऽपि हि वार्यते ) ॥ ४५ ॥ कुसंसर्गात्कुलीनानां, भवेदभ्युदयः कुतः ? । कदली नन्दति कियद्बदरीतरुसन्निधौ ॥ ४६ ॥ कथं वल्लभपुत्रस्य, कुशिक्षा दीयते स्वयम् ? । वरं गतो मृतश्चापि, न वरं द्यूतसङ्गतिः ॥ ४७ ॥ श्रेष्ठिना वारिताप्येवं, नातिष्ठद्वनिता तदा । स्त्री भूपो याचको बालो, न मुञ्चन्ति कदाग्रहम् ॥ ४८ ॥ पुनः पुनः प्रकथनात्, श्रेष्ठी मेने प्रियावचः । शते प्रल(रू)पिते शब्दे, सती भग्नातिसत्त्वतः ? ॥ ४९ ॥ गाहा–जहा जालं तु मीणाणं, कुरङ्गाणञ्च वागुरा । पक्खीणं पासओ बन्धो, तहा नारी नराण य ॥५०॥ जे गरुआ गंभीरथिर, मोडुं जाह मरट्ट । महिला ते वि भमाडिया, जिम करि धरीय घरट्ट ॥ ५१ ॥ आहूय कितवान् दत्तानर्पितः श्रेष्ठिना सुतः । इभ्यपुत्रं स्वहस्ते तं, प्राप्य ते हर्षिता घनम् ॥५२॥ तद्दिने जलकेलिश्चाम्बुकेलिं वनखेलनम् । सहैव धर्म्मदत्तेन, चक्रिरे द्यूतकारकाः ॥ ५३ ॥ जीवः स्वभावतो नीचसङ्गतिं कुरुते भृशम् । किं पुनः प्रेरितः पित्रा ?, गडौ[1]ची निम्बमाश्रिता ॥ ५४ ॥ शिक्षा सा पैतृकी पूर्वा, पुण्यमार्गप्रवर्त्तिनी । त्यक्ता तेन तथा यद्वत्, मक्षिकाभिः सुचन्दनम्

१ भाषायां ' गळो '.

॥ ५५ ॥ कलास्तस्य गताः शास्त्रं, विस्मृतं स्वल्पकालतः । उच्छृङ्खलो महान् जातो, निष्पन्नस्तस्करो विटः ॥ ५६ ॥ यथा दुग्धं विनष्टं स्याद्यथा कुथितकाञ्जिकम् । तथोत्तमकुलोत्पन्नो, विनष्टो दुस्सहो भवेत् ॥ ५७ ॥ अथ कामपताकाया, वेश्यायाया मन्दिरे स च । मोहार्थं कितवैर्नीत, इति तस्याश्च भाषितम् ॥ ५८ ॥ आवर्जनाऽस्य यत्नेन, कर्त्तव्या गणिके ! त्वया । तवासौ कल्पशाखीव, वांछितं पूरयिष्यति ॥ ५९ ॥ तत्र स्थितस्य तस्याथ, जनन्यप्रे ( नी प्रै ) षयद् घनम् । अमानं द्रविणं नित्यं, स्वेच्छया विलसत्यसौ ॥ ६० ॥ वेश्यालुब्धस्य तौ मातापितरौ तस्य विस्मृतौ । निःशङ्कं रममाणस्य, सञ्जातं वर्षसप्तकम् ॥ ६१ ॥ अन्यदा श्रेष्ठिना गेहे सुतस्याकारणं कृतम् । नायात्यसौ कथमपि, जातौ तौ दुःखितौ तदा ॥ ६२ ॥ श्रेष्ठ्यूचे देवतावाणी, स्यात्कल्पान्तेऽपि नान्यथा । यो मया शङ्कितो धर्मस्तत्कर्म्म समुपागतम् ॥ ६३ ॥ आकार्याकार्यं तौ स्नुषावूचतुर्दम्पती मिथः । यतोऽयं स्वकृतो दोषः, परं कस्य च कथ्यते । ६४ ॥ यतः—आत्मापराधवृक्षस्य, फलान्येतानि देहिनाम् । दारिद्र्यरोगदुःखानि, बन्धनव्यसनानि च ॥ ६५ ॥ बाढं वेश्यारते पुत्रे, श्रीपतिः श्रीमतीयुतः । शुशोच स्वकृतं दोषं, यत्सुतो द्यूतकृत् कृतः ॥ ६६ ॥ पूर्वमुड्डाप्यते हस्ताद्यथा पश्चात्तदिष्यते । दत्वा प्राग् द्यूतकारेभ्यः, पुत्र आकार्यते तथा ॥६७॥ अथापुत्रमिवात्मानं, मन्वानौ तौ हि दम्पती । मुक्त्वा चिन्तां तदा जातौ, धर्मध्यानपरायणौ ॥६८॥ विपन्नौ तौ शुभध्यानाज्जातौ देवौ महर्धिकौ । मातापित्रोर्मृतिं श्रुत्वा, गेहे नागात्स नन्दनः ॥ ६९ ॥ अप्रेषयद्ध(प्रैषयच्च ध) नं तस्य, भार्याऽथो भर्तृयाचितम् । क्रमाद्द्रव्ये गते जाता, सा कर्त्तनपरा सती ॥ ७० ॥ यथा गाथा–कन्तविहूणी कामिनी, केहनइ सरणइ जाइ । रहिटीडइ पूणी करी, पेट भरी जइमाइ ॥ ७१ ॥ तद्गृहे प्रेषिता दासी, पश्चादागाद्धनं विना । गृहे

निर्धनतां ज्ञात्वाऽक्कया निष्कासितोऽथ सः ॥ ७२ ॥ निर्द्रव्यो नार्घति कापि, गृहे बाह्येऽपि सर्वथा । गोविन्दो ग्राममध्ये च, रुद्रोऽरण्ये तु सर्वदा ॥ ७३ ॥ साकारोऽपि सविद्योऽपि, निर्द्रव्यः कापि नार्घति । व्यक्ताक्षरस्तु वृत्तोऽपि, द्रम्मः कूटो विवर्ज्यते ॥ ७४ ॥ दासः सर्वोऽपि वित्तस्य, सेवन्ते न जनं जनाः । पक्षिणोऽपि रथाङ्गाद्याः, सरः शुष्कं सरन्ति किम् ? ॥ ७५ ॥ सस्नेहो धर्मदत्तोऽपि, चिरकालोपसेवितः । एकवारमनायाते, द्रव्ये निष्कासितस्तया ॥ ७६ ॥ यतः—सद्भावो नास्ति वेश्यानां, स्थिरता नास्ति संपदाम् । विवेको नास्ति मूर्खाणां, विनाशो नास्ति कर्मणाम् ॥ ७७ ॥ विरक्ता प्राणसन्देहं, धनहानिं पराभवम् । करोति सर्वमप्येवं, वेश्या दुर्जनवन्नृणाम् ॥ ७८ ॥ श्लोकः—, अभ्रच्छाया तृणादग्निः, खले प्रीतिः स्थले जलम् । वेश्यारागः कुमित्रञ्च, षडेते बुद्बुदोपमाः ॥ ७९ ॥ इत्यादि चिन्तयन्धर्म्मदत्तो निजगृहेऽगमत् । अपश्यद् गृहचेष्टाञ्च, दुःस्थावस्थासमागताम् ॥ ८० ॥ प्रतोली पतिता यत्र, भित्तयः सन्ति जर्जराः । कपाटानि च भग्नान्यावासान् सोऽपश्यदीदृशान् ॥ ८१ ॥ आत्मानं व्यसनासक्तं, निन्दन् गेहान्तरे गतः । कर्त्तयन्तीं प्रियां दृष्ट्वा, मुमोचाश्रूणि दुःख्यसौ ॥ ८२ ॥ दृष्ट्वा तं पुरुषं साप्याकारेङ्गितगुणैर्ध्रुवम् । उपलक्ष्य पतिं स्वीयं, प्रतिपत्तिमथाकरोत् ॥ ८३ ॥ यतः—प्रजानां दैवतं राजा, पितरौ देवता सताम् । सुशिष्याणां गुरुर्देवो, नारीणां दैवतं पतिः ॥ ८४ ॥ गाम्भीर्यं धैर्यमौदार्यं, चतुरत्वं विलोभता । सर्व्वसहत्वं माधुर्यमार्जवं सुस्त्रियां गुणाः ॥ ८५ ॥ आचमनं तया दत्त्वा, मुक्तश्च वरमासनम् । उपविष्टे प्रिये गेहस्वरूपं कथितं च तत् ॥ ८६ ॥ सखेदं दिग्मूढमिव, प्रेक्ष्य कान्तं तु साब्रवीत् । प्राणेश ! त्वं यदा दत्तस्तदा किञ्चिद्गतं नहि ॥ ८७ ॥ यदा त्वं सावधानत्वात्सर्वचिन्तां करिष्यसि । भविष्यति तदा भव्यं, मा कार्षीः खेदमात्मनः ॥ ८८ ॥ तदा

प्राणप्रियोऽप्याह, प्रिये खेदः कथं नहि ? । निर्धना नरनार्यो हि शवस्य सदृशा मताः ॥ ८९ ॥ यतः—यस्यार्थास्तस्य
मित्राणि, यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमान् लोके, यस्यार्थास्तस्य जीवितम् ॥ ९० ॥ गाथा—जाई विज्जा
रूवं, तिन्निवि निवडन्तु कन्दरे विवरे । अत्थुच्चिय परिवड्ढउ, जेण गुणा पायडा हुन्ति ॥ ९१ ॥
पत्नी प्रोवाच वक्ष्येऽहमुपायं ते धनार्जने । तावत्त्वं स्वस्थचित्तेन, प्रथमं भोजनं कुरु ॥ ९२ ॥ स्नात्वा देवार्चनं कृत्वा, कृत्वा
च भोजनं ततः । चिन्तितं तेन भार्या किं, निधानं दर्शयिष्यति ? ॥ ९३ ॥ क्षणं विश्रम्य सा पृष्टोपायः कः ? कथ्यतां
प्रिये ! । तयोक्तं लक्षमूल्यानि, सन्त्यङ्गाभरणानि मे ॥ ९४ ॥ तेषां मध्यात्पञ्चशतदीनारमूल्यकुण्डलम् । विक्रीय तेन द्रव्ये-
ण, व्यवसायं कुरु प्रिय ! ॥ ९५ ॥ ततोऽसौ तेन वित्तेन, व्यवसायं व्यचिन्तयत् । पूर्वं कोटीश्वरस्तेन, चित्ते नायाति तद्ध-
नम् ॥ ९६ ॥ ततोऽवादीत्प्रिये ! पूर्वमहं कोटीश्वरोऽभवम् । अत्राल्पव्यवसायांश्च, कुर्वन् लज्जामि साम्प्रतम् ॥ ९७ ॥ तेनाहं
यानपात्रेण, किञ्चिल्लात्वा पयोनिधौ । कस्मिन् द्वीपे गमिष्यामि, नो द्रव्यं नीरधिं विना ॥ ९८ ॥ यतः—इक्षुक्षेत्रं समुद्रा (द्र)
श्च, जात्यपाषाण एव च । प्रसादो भूभृतां चैव, क्षणाद् घ्नन्ति दरिद्रताम् ॥ ९९ ॥ अथोक्तं प्रियया तस्य, किं समुद्रेण साम्प्र-
तम् ? । सर्वथा सर्वकार्येषु, भाग्यमेव प्रशस्यते ॥ ३०० ॥ काव्ये—पुण्यादेव समीहितार्थघटना नो पौरुषात्प्राणिनाम्,
यद्भानोर्भ्रमतोपि नाम्बरपथे स्यादष्टमः सैन्धवः । स्वस्थानात्पदमात्रमप्यचलतो विन्ध्यस्य चानेकशो, जायन्ते मधुपालि-
पालितयशःश्रीलम्भिनः कुम्भिनः ॥ ३०१ ॥ केषाञ्चिन्निजवेश्मनि स्थितवतामालस्यवश्यात्मनां, दृश्यंते फलिता लता इव
फलैरामूलचूलं श्रियः । आब्धिं लङ्घयतां खनिश्च खनतां क्षोणीतलं प्रेक्ष ( पश्य ) ता—मन्येषां व्यवसायसाहसवतां तन्नास्ति

यद्धुज्यते ॥ ३०२ ॥ यद्भविष्याधिको धीरैः, व्यवसायः प्रकीर्त्यते । तस्मादप्यधिको लोके, भाग्यवान् राजिलो यथा ॥ ३ ॥ स्यातां गान्धर्वनगरे, वणिजौ रत्नराजिलौ । अहर्निशं तौ निष्कार्यौ, विवदेते मदोध्धुरौ ॥ ४ ॥ मन्यते व्यवसायस्य, साफल्यं रत्नसंज्ञितः । राजिलो दीर्घदृक्कामं, भाग्यमेव प्रशंसति ॥ ५ ॥ निषेध्यमानौ लोकेन, हठात्तौ न विरेमतुः । तावद्भिदितवृत्तेन, पप्रच्छाते महीभुजा ॥ ६ ॥ कुतो रे निष्फलं वादं, कुर्वीयाथामसौख्यदम् ? । यद्यस्य मनसा भाति, तन्निन्द्यमपि सुन्दरम् ॥ ७ ॥ स्वान्ययोः क्वापि सौख्याय, विपरीताः कृताः क्रियाः । यथा स्याद् व्यासविश्रान्तिः, पूगक्रतुनतिर्यथा ॥८॥ त्वज्ज्येष्ठा बान्धवाः सप्त, बभूवुः खण्डमण्डनाः । भाग्यात्त्वमेव राजाभूर्नेदं[1] किं ? राजिलोऽब्रवीत् ॥ ९ ॥ शत्रुपीडादिकं चेत्त्वं, व्यवसायं करोषि न । तत्ते कुतो राज्यवृद्धि ? द्वितीयोऽप्यगदन्नृपम् ॥ १० ॥ अथवा स्थालनिक्षिप्तैर्नैवेद्यैर्मनसः प्रियैः । कवलव्यवसायात्तु, विना तृप्तिर्न जायते ॥ ११ ॥ ततो हास्यरुषाक्रान्तो, नरेन्द्रो निजपूरुषैः । निर्नीरकूपे चिक्षेप, तावुभौ मानदुर्द्धरौ ॥ १२ ॥ सुष्वाप राजिल[2] इव, राजिलः कूपमध्यगः । अभितस्तत्र बभ्राम, रत्नोऽपि व्यवसायवान् ॥ १३ ॥ मध्यान्दिने नृपोऽप्रैषीत्, सदयो मोदकाष्टकम् । ते जाग्रता जगृहिरे, रत्नेनावटवर्त्तिना ॥ १४ ॥ प्रबोध्य तत्र रत्नोपि, राजिलञ्च वितर्कयन् । तेषामर्धं दयापूर्वं, ददौ मुदितमानसः ॥ १५ ॥ अपराह्णे समाकृष्टौ, कूपाद्भूपेन जल्पितौ । प्रौढं शशंस भाग्याय, राजिलो रङ्गसङ्गतः ॥ १६ ॥ देवाऽस्य भ्रमतोऽभूवन्, यावन्तो मोदकाः श्रमात् । प्रसुप्तेनापि तावन्तो, लेभिरे हेलया मया ॥ १७ ॥ रत्नोऽब्रवीत्कृपापूर्वं, त्वं विनिद्रो मया कृतः । रे रे तुभ्यं मतिं दत्वा, भाग्येनाहं प्रबोधितः ॥ १८ ॥ भूपोऽ-

१ भाग्यं. २ राजा.

पि मोदकन्यस्तामयाचन्मुद्रिकां तयोः । समर्थो राजिलः शीघ्रमार्प्पयत्तां स्मिताननः ॥ १९ ॥ इति प्रत्यक्षदृष्टान्ताद्, बोधितौ तौ महीभुजा । मेनाते भाग्यसाफल्यं, तेनाते पुण्यमद्भुतम् ॥ २० ॥ इति राजिलकथा ।

पुनः कान्ता पतिं प्राह, यदि पुण्योदयो भवेत् । उपक्रमं विना तर्हि, सर्व्वं संपद्यते गृहे ॥२१॥ यतः—उद्यमं कुर्व्वतां पुंसां, फलं भाग्यानुसारतः । समुद्रमथनाल्लेभे, हरिर्लक्ष्मीं हरो विषम् ॥२२॥ यत्स्वल्पं न्यायधर्मेण, प्राप्यते तद् घनं भवेत् । घनं त्वन्याय मार्गेण, तद्वित्तमचिराद् व्रजेत् ॥२३॥ अन्यायोपार्जितं वित्तं, क्षणं नैवावतिष्ठति । अत्रोदाहरणं श्रेष्ठी, काशीवासी धनावहः ॥२४॥

तथाहि—पुर्य्यां वाणारसीनाम्न्यां, कुशलः सर्व्वकर्मसु । धनाढ्यो घृतकश्रेष्ठी, वसति स्म धनावहः ॥ २५ ॥ अन्येद्युर्ग्रामनारीभ्यः, प्राज्यमाज्यं धनावहः । अङ्करेखाविपर्यासात्, सपादं जगृहे शठः ॥ २६ ॥ स दध्यौ चेतसि परमन्यायद्रविणं भृशम् । न तिष्ठति तदेतद्राग्, व्ययिष्ये वेल्भनादिषु[1] ॥ २७ ॥ गोधूमघृतखण्डाद्यमर्पयित्वाङ्गजन्मनः । प्रोक्तं स्वजननीपार्श्वात्, घृतपूराणि कारय ॥ २८ ॥ सा वक्त्रनिपतल्लालं, घृतपूराणि हर्षिता । यावच्चकार मध्याह्ने, तावदागात्सुतापतिः ॥ २९ ॥ सहायसहितं सापि, बहुमानं सगौरवम् । भोजयामास सरसैर्घृतपूरैः पुराकृतैः ॥ ३० ॥ उक्तश्च—तियां[2] तिन्नि उ वल्लह, कलिकज्जलसिन्दूर । अन्नवि तिन्निवि वल्लहा दूधजमाईतूर ॥ ३१ ॥ भुक्त्वा तस्मिन् गते ग्रामं, हट्टात् श्रेष्ठी समागतः । स्नानस्य देवतार्चाया, मनोरथमथाकरोत् ॥ ३२ ॥ सा भ्रमं घृतपूराणां, रक्षन्ती प्रियमालपत् । मध्यन्दिनमतिक्रान्तं, मङ्क्षु भुङ्क्ष्व बुभुक्षितः ॥ ३३ ॥ विवेकेनाद्य भोक्तव्यमिति विस्तरकारणम् । घृतपूरभ्रमधरं, वारयामास सा न तम् ॥ ३४ ॥

१ भोजनादिषु. २ स्त्रियाः.

संपूर्णकृत्यं सापत्यं, विशालस्थालधारिणम् । सस्पृहं घृतपूरार्थे, निषण्णं वीक्ष्य साहसत् ॥३५॥ अन्नमप्यर्धपक्वं च, करवाणि कथं प्रिय १ । स्वादूनि घृतपूराणि, जघास दुहितापतिः ॥ ३६ ॥ इति तद्वचनाज्जातास्तोकशोकः स कोपनः । पतन्तु दन्ता जामातुरष्टवर्षीयबालवत् ॥३७॥ वज्रं पततु तन्मूर्ध्नि, यथा गिरिवरे पुरा । विद्युत्पततु तन्मुण्डे, कांस्यपात्र इवाद्भुता ॥३८॥ सदा रुष्टः सदा क्रूरः, सदा पूजां प्रयच्छति । कन्याराशिस्थितो नित्यं, जामाता दशमो ग्रहः ॥३९॥ इति यावद्विमृशति, तावत्सा घृतदायिनी । गाढशब्दं च नर्दन्ती, शाकिनीवाऽऽगमद्गृहे ॥४०॥ रे रे विश्वस्तवधक, मायाविन् जनवञ्चक । पश्यतोहर वेगेन, चल त्वं राजमन्दिरे ॥ ४१ ॥ मामकीनं कुतोऽग्राहि, प्रमाणादाधिकं घृतम् १ । इत्यर्धभुक्ते स तया, धृतो बाहौ मनस्यधात् ॥ ४२ ॥ अन्यायोपार्जितं वित्तं, न यामयुगलस्थितम् । निपत्य पादयोस्तस्याः, सघृतं द्रविणं ददौ ॥ ४३ ॥ इति अन्यायवित्तकथा ।

अतो न्यायेन योत्पत्तिर्वित्तस्याल्पाथवा घना । शतधा लब्धा सा च, भाग्येन भवति प्रिय ! ॥ ४४ ॥ अथोचे धर्मदत्तोपि, त्वं सत्यं वदसि प्रिये ! । तथाप्यभाग्यभाग्ये हि, न ज्ञायेते विनोद्यमम् ॥ ४५ ॥ श्लोकः–उद्यमं साहसं धैर्यं, बलं बुद्धिः पराक्रमः । षडेते यस्य विद्यन्ते तस्य देवोऽपि शङ्कते ॥ ४६ ॥ गाथा–अत्थो जसो अ कित्ती, विज्ञा विन्नाणयं पुरिसकारो । पाण्णं( पाएणं )पाविज्जइ, पुरिसेहिं अन्नदेसंमि ॥ ४७ ॥ उद्यमं परमं मित्रमालस्यं परमो रिपुः । आलस्यं सर्वथा जित्वा, सर्वकार्यक्षमो भव ॥ ४८ ॥ अतो रत्नाकरस्यैकवारं सेवां करोम्यहम् । स प्रियानुमतिं प्राप्य, यानपात्रमसज्जयत् ॥ ४९ ॥ आपृच्छय स्वजनान् सर्वान्, पोतमारुह्य सद्दिने । कर्कोटद्वीपमुद्दिश्य, प्रतस्थे

१ सप्तम्येकवचनम्.

तद्दिशं प्रति ॥ ५० ॥ अन्येद्युर्गच्छतस्तस्य, प्रतिकूलेन वायुना । अकस्मात् पापकर्मत्वात्, भग्नः पोतः क्षणेन सः ॥ ५१ ॥ धर्मदत्तकरे किञ्चित्फलकञ्चाटितं तदा । तदिष्टजनवत्तेन, दोर्भ्यामालिङ्गितं दृढम् ॥ ५२ ॥ तरन्नीरं प्रियाशिक्षां, स्मरंस्तीरमवाप सः । रौरवं तटमम्भोधेः, पश्यन्नेवं बभाण च ॥ ५३ ॥ यतः—स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः, कल्याणिनी भवतु मौक्तिकशुक्तिमाला । प्राप्तं फलं सकलमप्यमुतः पयोधेर्यद्दारुणैर्जलचरैर्न विदारितोऽहम् ॥ ५४ ॥ एतस्मादमृतं सुरैः शतमखेनोच्चैःश्रवाः सद्गुणः, कृष्णेनाद्भुतविक्रमैकवसतिर्लक्ष्मीः समासादिता । इत्यादिप्रसरच्चिरंतनकथाभ्रान्त्या कृतोपासनै—रस्माभिर्न हि दृष्टमत्र जलधेः क्षाराम्बु मुक्त्वाऽपरम् ॥५५॥ इत्युक्त्वा सोऽग्रतो गच्छन्, वनश्रेणीर्विलोकयन् । ददर्शैकं पयःपूर्णं, तटाकं चन्द्रबिम्बवत् ॥ ५६ ॥ मिष्टं नीरं पपौ तीरे, तरुच्छायां समाश्रितः । दुःखत उद्विजँश्चिन्तां, विविधाञ्चाकरोदसौ ॥ ५७ ॥ तदा निद्राकुलत्वेन, स सुप्तः पर्णसंस्तरे । यावन्निद्रा समायाता, तावत्केनाप्यऽसौ हृतः ॥ ५८ ॥ स बुद्धः प्रौढदेहश्च, हर्तारं तं भयावहम् । राक्षसं वीक्ष्य नेत्रे द्वे, निमील्यैवमचिन्तयत् ॥ ५९ ॥ काव्यम्—छित्वा पाशमपास्य कूटरचनां भङ्क्त्वा लसद्वागुरां । पर्यन्ताग्निशिखाकलापवसनान्निर्गत्य दूरं वनात् । व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन्मृगः, कूपान्तः पतितः करोतु विधुरे किंवा विधौ पौरुषम् ? ॥ ६० ॥ यदुपतेर्जगदेकमहीभुजो, रिपुसमूहतृणैकहविर्भुजः । मरणमस्य वने शरसंभवं, विधिरहो बलवानिति मे मतिः ॥ ६१ ॥ पुराऽहं पतितः कूटसङ्कटे द्यूतवेश्ययोः । ततो निःसृत्य वैदग्ध्याच्चटितः सागरे बलात् ॥ ६२ ॥ भग्ने पोतेऽम्बुधेः पाताद्यद्यहं निर्गतस्ततः । अधुना राक्षसे कष्टे, पतितः किं करोम्यहम् ? ॥ ६३ ॥ यद्भाव्यं तद्भवत्वेवं, धीरत्वं स दधौ हृदि । कस्मिन् स्थानेऽथ मुक्त्वा तं, जगाम क्वापि राक्षसः ॥ ६४ ॥

विज्ञाय मुक्तमात्मानं, यावदुद्घाट्य चक्षुषी । पश्येन्न राक्षसो दृष्टो, दृष्टैका तत्र बालिका ॥ ६५ ॥ वृक्षच्छायाश्रितां दिव्यरूपसौभाग्यशालिनीम् । वरवस्त्रादिशृङ्गारामेनां दृष्ट्वा स विस्मितः ॥ ६६ ॥ दध्यौ च राक्षसः कागादेषा स्त्री किमु राक्षसी । कन्यारूपोऽथवा जातः, पलादश्चित्रहेतवे ॥ ६७ ॥ किं वेयं खेचरी नारी, सुरी वा व्यन्तरी किमु। नागलोकोद्भवा किं वा, किंवाऽसौ कापि मानवी ? ॥ ६८ ॥ साहसं हृदि धृत्वाऽथ, निर्विकल्पेन चेतसा । धर्म्मदत्तेन सा बाला, पृष्टा त्वं काऽसि सुन्दरि ! ? ॥ ६९ ॥ तया पृष्टः स कोऽसि त्वं, मानवोऽहं नरोऽवदत् । तयोक्तं मानवी चाहं, कुमारः पुनरब्रवीत् ॥ ७० ॥ कुतोऽत्र विषमेऽरण्ये, तिष्ठस्येकाकिनी कनी ? । साऽवादीद्दैवयोगान्मे, विद्यते विषमा गतिः ॥ ७१ ॥ कुमारः प्राह हे भद्रे ! कथं ते विषमा गतिः ? । साऽवोचत्श्रूयतां मित्र, ! कथा मे चित्रकारिणी ॥ ७२ ॥ वार्ध्येर्धे सिंहलद्वीपेऽस्ति पुरं कमलाभिधम् । तत्र सत्यार्थनामासीद् धनसारो वणिग्वरः ॥ ७३ ॥ धनश्रीति प्रिया तस्य,कृष्णस्य कमला यथा । रूपलावण्यसंपूर्णा, नारीजनशिरोमणिः ॥ ७४ ॥ यतः—अनुकूला न वाग्दुष्टा, दक्षा साध्वी त्रपावती । एभिरेव गुणैर्युक्ता, सा स्त्री लक्ष्मीर्न संशयः ॥ ७५ ॥ तत्कुक्षिसंभवा पुत्री, पवित्रीकृतमानसा । अहं धनवती जाता, प्राणेभ्योऽप्यतिवल्लभा ॥ ७६ ॥ सा शिक्षितसर्वकला, क्रमात्संप्राप्तयौवना । पित्रा दृष्टा चिन्तितश्च, वरयोग्याऽभवत्सुता ॥ ७७ ॥ गाहा—जायाइ हवइ सोगो, वड्ढन्तीए य वड्ढए चिन्ता । परिणीयाए दण्डो (?), सुयासमा वेयणा नत्थि ॥ ७८ ॥ यतः—प्रार्थना न कृता येन, जाता यस्य न कन्यका । स्वाधीना यस्य वृत्तिश्च, सुखं जीवन्ति ते त्रयः ॥ ७९ ॥ तदा मे जनकेनैवं, भूयोऽपि हृदि चिन्तितम् । भाग्यवान् यो गुणैर्युक्तस्तस्यैषा दीयते सुता ॥ ८० ॥ जातिरूपवयोविद्या, आरोग्यं बहुपक्षता । उद्यमो वृत्तयुक्तत्वमष्टावेते

वरे गुणाः ॥ ८१ ॥ यतः–मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् । त्रिगुणाधिकवर्षाणामपि देया न कन्यका ॥ ८२ ॥ काव्यम्–न्यायोपात्तधनाधिपो विनयवान् धीमान् कुलीनाग्रणी, रूपैर्न्यत्कृतमन्मथो बलिरिव त्यागेन भोगप्रियः । शिष्टाचारविचारकौशलकलापाण्डित्यधर्मप्रियः, प्रीत्याभाषणसंमदामृतमयः प्राणेश्वरो दुर्लभः ॥ ८३ ॥ वरार्थेऽथ महेभ्यानां, बहूनामङ्गजन्मनाम् । वीक्षिता जन्मपत्र्योऽपि, सदृश्येकाऽपि नाऽमिलत् ॥८४॥ तातेनाचिन्ति किं कुर्व्वे, जन्मपत्र्यादियोगतः । आलोक्यालोक्य भग्नोऽहं, मत्सुतासदृशं वरम् ॥ ८५ ॥ अथ चन्द्रपुरात्कोऽपि, ज्योतिःशास्त्रविदागतः शृण्वन्त्यां मयि तातस्तं, जगाद गणकं प्रति ॥ ८६ ॥ वृद्धा जाता सुतैषा मे, क्वानुरूपो वरो नहि । ज्योतिर्वित् ! त्वं जगद्ज्ञाता, सुतातुल्यं वरं वद ॥ ८७ ॥ जन्मपत्र्यनुमानेन, ग्रहमेलापकं शुभम् । दृष्ट्वाथ वाडवः प्रोचे, शृणु त्वं श्रेष्ठिसत्तम ! ॥ ८८ ॥ इभ्यश्चन्द्रपुरे जातः, श्रीपतिः श्रीमतीप्रियः । धर्म्मदत्तोऽस्ति तत्सूनुः, सुकृती सुभगाग्रणीः ॥ ८९ ॥ तदा हृष्टात्मना श्रेष्ठी, पुनः पप्रच्छ तद्गुणान् । विप्रः प्रोचे मया नैव, दृष्टस्तत्सदृशो भुवि ॥९०॥ विद्यावयोयशोभाग्यकृतज्ञत्वादितद्गुणाः । षोडशस्वर्णकोटीनां, भोक्ता यो वेश्यया सह ॥ ९१ ॥ विप्रवाक्यं निशम्यैवं, स श्रेष्ठी पुनरब्रवीत् । मत्पुत्रीं धर्मदत्ताय, दास्याम्यन्यत्र न क्वचित् ॥ ९२ ॥ लग्नं पश्य महाशुद्धं, शुभयोगसमन्वितम् । विप्रोऽवादीत्पञ्चदशदिनान्ते लग्नमुत्तमम् ॥ ९३ ॥ अस्मिन्वर्षेऽपरं लग्नं, नास्त्येवोत्तममीदृशम् । श्रेष्ठी प्रोचे दिनैः स्तोकैः, कथं स्यातां गमागमौ ? ॥ ९४ ॥ कर्तुं विवाहकार्याणि, शक्यते नैव विस्तरात् । सुतामादाय तत्राहं, ततो यामि कुटुम्बयुक् ॥ ९५ ॥ विप्रं सन्तोष्य दानेन, सज्जीभूतः स श्रेष्ठिराट् । आरुरोह महापोतं, सकुटुंबः सुतायुतः ॥ ९६ ॥ दुर्दैवप्रेरितो वातः, प्रतिकूलस्तदाऽभवत् । भग्नं प्रवहणं तेन, सर्व-

मब्धौ ममज्ज च ॥ ३९७ ॥ भग्ने पोते धनवती, फलकग्रहणात्तदा । तरन्ती सलिलं तीरं, प्राप्ता सप्तदिनैः क्रमात् ॥ ९८ ॥ स्वस्थीभूता वने क्वापि, पयः पीत्वा सरोवरे । सुप्ताहं राक्षसेनाथोत्पाट्य मुक्ताऽत्र भूतले ॥ ९९ ॥ ततो रक्षोभयाद्भीतां, कम्पमानां च वीक्ष्य माम् । राक्षसः प्राह मा भैषीस्तव किञ्चिन्न कथ्यते ॥ ४०० ॥ मम क्षुधाकुलस्यापि, त्वां दृष्ट्वा करुणाभवत् । यावद्भक्ष्यञ्च लप्स्येऽन्यत्तावत्त्वां भक्षयामि न ॥ ४०१ ॥ इत्युक्त्वा क्वापि गत्वा च, त्वमानीतोऽधुनाऽमुना । विशेषात्तदहं जाता, दुःखिनी तव दुःखतः ॥ २ ॥ भवन्तं वीक्ष्य हे साधो ! चिन्ता मे बाधतेऽधिकम् । ईदृशं नररत्नं हा, भक्षयिष्यति राक्षसः ॥ ३ ॥ दैवेनाहं कथं सृष्टा, पापिनी भाग्यवर्जिता । मत्कृते यत्कुटुम्बस्य समकालमभून्मृतिः ॥ ४ ॥ विदेशे पतिताऽहं च, विवाहोऽपि मम स्थितः । मद्दृष्टौ राक्षसाद्दुष्टाद्विनाशस्ते भविष्यति ॥ ५ ॥ तस्माज्जानामि चित्तेऽहमात्मघातं करोम्यथ । वरं दुःखमदृष्ट्वैव, साध्यते मरणं हि यत् ॥ ६ ॥ अथवा भद्र कोऽसि त्वं, कस्मात् स्थानादिहागतः ? । स्वरूपं वद सत्यं स्वं, श्रुत्वा यन्मे सुखं भवेत् ॥ ७ ॥ इत्युक्ते धर्मदत्तोऽपि, स्मित्वाऽवादीद्वरानने ! । मम स्थानादिकं सर्व्वं, त्वयैवोक्तं समासतः ॥ ८ ॥ स्वरूपं सकलं तस्या, धर्म्मदत्तेन भाषितम् । अथ तस्या भुजो वामः, स्फुरितः प्रीतिहेतवे ॥ ९ ॥ अङ्गस्य चेष्टया ज्ञातं, तयाऽसौ धर्मदत्तकः । हृदीति निश्चयं कृत्वा, दधौ लज्जाभरं च सा ॥ १० ॥ प्रीत्या वाचं तदोवाच कुमारं प्रति कन्यका । सानुकूलेन दैवेन, चक्रे सङ्गम आवयोः ॥ ११ ॥ अहो क्व कावयोः स्थाने, दूरे भूमिरियं क्व च ? । परं पुण्याद्भवेन्नृणामसंभाव्यमपि ध्रुवम् ॥ १२ ॥ कुमारः प्राह जानासि, लग्नस्य दिवसः कदा ? । दिनानि गणयित्वा सा, प्रोचेऽद्यैव स वासरः ॥ १३ ॥ ततो वनस्थसामग्र्या, लग्नवेला च साधिता । परिणीताऽवदन्नारी, राक्षसात्ते भयं प्रिय !

५

॥ १४ ॥ स प्रोचे तस्य घाताय कोऽप्युपायोऽस्ति हे प्रिये ! ? । नार्या प्रोक्तं तटाके प्राग्, गत्वा स्नानं करोति सः ॥ १५ ॥
पश्चादत्र समागत्य, देवार्चां कुरुते यदा । तदा स दैवतं खड्गं, पार्श्वे मुञ्चति हस्ततः ॥ १६ ॥ प्रियोऽवादीत्करिष्येऽस्य,
शिरश्छेदं ततोऽसिना । प्रियोचे राक्षसोऽभ्येति तावदन्यत्र गम्यताम् ॥ १७ ॥ एवं कृतेऽथ तत्रागात्, राक्षसोऽसौ मदो-
द्धतः । रे भक्ष्यं क्व गतं चैवमुक्त्वोपविष्ट आशु सः ॥ १८ ॥ देवतार्चनवेलायां, प्रस्तावं प्राप्य सत्त्ववान् । स्थित्वा रक्षस-
पृष्ठौ द्राक्, कुमारः खड्गमग्रहीत् ॥ १९ ॥ गृहीत्वासिं दृढं मुष्टौ, भूत्वाऽग्रे हक्कितः सुरः । रे राक्षस ! दुराचार !, रुष्टो दैवस्त-
वाधुना ॥ २० ॥ श्रुत्वैवं यावदुत्तस्थौ, स कोपाकुललोचनः । तावत् द्राग् धर्म्मदत्तेन, हतश्च हस्तलाघवात् ॥ २१ ॥ ततो
धनवती तस्य, भुजं पुष्पैरपूजयत् । स्वपतेः कुशलं वीक्ष्य, प्रमोदश्च दधौ हृदि ॥ २२ ॥ तौ निःशङ्कौ वने तत्र, द्राक्षाम्रक-
दलीफलैः । कृताहारौ सुखेनैव, युग्मिवत्संस्थितौ तदा ॥ २३ ॥ राज्यतुल्यं वनमपि, स्वेच्छादिकसुखे भवेत् । विरहाद्यसुखे
राज्यं, दुस्सहं काननादपि ॥ २४ ॥ तथा मिथः कथागाथाकाव्यप्रहेलिकादिभिः । कुर्व्वन्तौ कौतुकं कालं, तावगमयतां मुदा
॥ २५ ॥ धर्मदत्त उवाच—अपूर्वोऽयं मया दृष्टः, कान्ते कमललोचने ! । मध्ये शो यदि जानासि, तदाऽहं तव सेवकः
॥ २६ ॥ क्षणं विमृश्य नार्यूचे, हुं ज्ञातं स्वामिनोदितम् । पतिरूचे कथं ? साऽऽह, अशोक इति कथ्यते ॥ २७ ॥ पत्नी
प्रोचे मया प्रोक्तं, नाथ ! प्रश्नोत्तरं द्रुतम् । चेत्त्वं जानासि तन्नूनं, तवाहं पदरेणुका ॥ २८ ॥ कथं संबोध्यते राजा, सुग्रीव-
स न का प्रिया । दरिद्रिणः किमिच्छन्ति, किङ्कुर्व्वन्ति तपोधनाः ? ॥ २९ ॥ विमृश्याथ पतिः प्रोचे, प्रिये ! ज्ञातं तवो-
दितम् । 'देवताराधनं' ह्येतत्, कर्तव्यं विबुधैः सदा ॥ ३० ॥ इत्थं विनोदतोऽत्यन्तं, गतः कालः कियानपि । अन्यदा

वल्लभा प्रोचे, पतिं प्रति सुधर्म्मिणी ॥ ३१ ॥ नाथात्र मृगवत् स्वीयं, यात्यायुर्धर्मवर्जितम् । आवयोर्वा वृथोत्पत्तिररण्ये मालती यथा ॥ ३२ ॥ श्लोकः—न देवपूजा न च पात्रपूजा, न श्राद्धधर्मश्च न साधुधर्म्मः । लब्ध्वाऽपि मानुष्यमिदं समस्तं कृतं मयाऽरण्यविलापतुल्यम् ॥ ३३ ॥ मानुषं भवमवाप्य दक्षिणावर्त्तशङ्खवदमुं भवाम्बुधौ । पूरयेत्सुकृतगङ्गवारिणा, पापवृत्तिसुरया न चोत्तमः ॥ ३४ ॥ काव्यम्—पूजामाचरतां जगत्त्रयपतेः सङ्घार्चनां कुर्व्वतां, तीर्थानामभिवन्दनं विदधतां जैनं वचः शृण्वतां। सद्दानं ददतां तपश्च चरतां सत्त्वानुकंपाकृताम्, येषां यान्ति दिनानि जन्म सफलं तेषां सुपुण्यात्मनाम् ॥३५॥ यः प्राप्य दुष्प्रापमिदं नरत्वं, धर्मे प्रयत्नं न करोति मूढः । क्लेशप्रबन्धेन स लब्धमब्धौ, चिन्तामणिं पातयति प्रमादात् ॥ ३६ ॥ न येषां धर्मार्थं भवति धनलाभः किल नृणां, न ये दुःखार्त्तेषु प्रकृतिकरुणाव्याकुलधियः । न वा यैरात्मार्थः सुचरितविधानैर्विरचितो, न तेषां जन्मेदं जननशतलाभोऽपि विफलः ॥ ३७ ॥ काव्यम्—प्रत्यूषे प्रतिमा जिनस्य कलशः पूर्णो जलैरुज्ज्वलैः, पुष्पस्रक्परिधाप्रदीपकलिकानैवेद्यमारात्रिकैः । भद्रं स्वस्ति नमो नमो जयजयेत्युच्चैर्वचांसि स्थितै-रित्येते शकुना भवन्ति भविनां गेहे वसन्त्याः श्रियः ॥ ३८ ॥ यतः—मानुषत्वेऽपि संप्राप्ते, केचिन्निष्फलजन्मकाः । दीपोत्सवे कृता द्वारि, च्छगणस्येव पुत्रकाः ॥ ३९ ॥ न देवायतनं किञ्चिन्न चात्र मुनिदर्शनम् । सज्जनस्य च योगो ना-नार्यवज्जीव्यतेऽधुना ॥ ४० ॥ गाथा—जत्थ न दीसन्ति जिणा, न य भवणं नेव सङ्घमुहकमलं । न य सुव्वइ जिणवयणं, किं ताए अत्थभूमीए ? ॥ ४१ ॥ काव्यम्—तत्र धाम्नि निवसेद् गृहमेधी, संपतन्ति खलु यत्र मुनीन्द्राः । यत्र चैत्यगृहमस्ति जिनानां, श्रावकाः परिवसन्ति च यत्र ॥ ४२ ॥ ततस्तौ दम्पती तस्मात्स्थानकाच्चेलतुः शनैः । वासभूमौ च

संप्राप्तौ, ग्रामाणि नगराण्यपि ॥ ४३ ॥ क्रमाच्चन्द्रपुरासन्ने, देशमध्ये च तौ गतौ । वनमध्येऽन्यदा सायं, श्रान्तौ सुप्तौ च निर्भयौ ॥ ४४ ॥ धर्मदत्तो जजागार, पाश्चात्यनिशि सोद्यमः । स्मृत्वा पञ्चनमस्कारं, धर्मध्यानं तथाऽकरोत् ॥ ४५ ॥ अथ सूर्योदयात्पूर्वं, प्रियाजागरणाय सः । बभाषे हर्षमाश्रित्य, सूक्तमेवं महार्थकम् ॥ ४६ ॥ काव्यम्—प्रोज्जृम्भते परिमलः कमलावलीनां, शब्दायते क्षितिरुहोपरि ताम्रचूडः । शृङ्गं पवित्रयति मेरुगिरेर्विवस्वानुत्थीयतां सुनयने ! रजनी जगाम ॥ ४७ ॥ प्रोक्ते सूक्तेऽपि सा पत्नी, तदा दत्ते स्म नोत्तरम् । क्षणमेकं प्रतीक्षित्वा, प्रबोधायाऽपठत्पुनः ॥४८॥ एते व्रजन्ति हरिणास्तृणभक्षणाय, चूर्णिं विधातुमथ यान्ति हि पक्षिणोऽपि। मार्गस्तथाऽपि सुवहः किल शीतलः स्यादुत्थीयतां प्रियतमे ! रजनी जगाम ॥ ४९ ॥ यावत्सा नोत्तरं दत्ते, धर्मदत्तेन तावता । निरीक्षितं मुखं तस्या, दृष्टं किञ्चिन्न संस्तरे ॥ ५० ॥ चिन्तितं देहचिन्तायै, नूनं पूर्वोत्थिता गता । क्षणमात्रं पुनः स्थित्वा, शब्दमुच्चैश्चकार सः ॥ ५१ ॥ आगच्छागच्छ हे कान्ते ! वेगेन पथि गम्यते । न कोऽप्यागात्तदोत्थाय, सोऽपश्यत्सर्वतः पदान् ॥ ५२ ॥ पदं न दृश्यते लग्नं, ततोऽसौ विविधार्त्तितः[1]। भ्रान्त्वा भ्रान्त्वा वने श्रान्तः, क्वापि लब्धा न सा परम् ॥५३॥ ततश्चित्तभ्रमो जातः, सोऽजल्पन्मुक्तचेतनः । हे हंसकोकिसारङ्गाः ! सारङ्गाक्षी प्रिया क्व मे ? ॥ ५४ ॥ चम्पकाशोकनिम्बाम्रशालिपिप्पलपादपाः । गच्छन्तीं मे प्रियां दृष्ट्वा, शुद्धिं कथयत द्रुतम् ॥ ५५ ॥ इति जल्पन् पुनर्भ्रान्त्वा, सोऽगमत् शयनस्थितौ । एवं ग्रथिलवद्याति, प्रत्यायाति वदन्निति ॥ ५६ ॥ यतः—किङ्करोमि क्व गच्छामि ? रामो नास्ति महीतले । प्रियाविरहजं दुःखं, नान्यो जानाति मानवः

१ ल्यबभावश्चिन्त्यः.

॥ ५७ ॥ गाथा–ए संसार असारडउ, आशावन्धणि जाइ । अनेरंडइ करि सूईयइ, अनेरडइ विहाइ ॥ ५८ ॥ यतः– यन्मनोरथशतैरगोचरं, यत्स्पृशन्ति न गिरः कवेरपि । स्वप्नवृत्तिरपि यत्र दुर्लभा, लीलयैव विदधाति तद्विधिः ॥ ५९ ॥ यतः–बुधजने विहिता च दरिद्रता, बत कृता च जरा वनिताजने । हतधवा सुनवा च कुलाङ्गना, विधिरहो बलवानिति मे मतिः ॥ ६० ॥ इत्यादि प्रलपन्नेष, स्वगृहं प्रति निर्ययौ । ततश्चन्द्रपुरं प्राप्य, प्रवेशेऽचिन्तयत्पुनः ॥ ६१ ॥ हा मूढ ! धर्मदत्त ! त्वं, अनात्मज्ञ ! क्व यासि रे ? । निर्द्रव्यो भग्नपोतोऽहं, कथं यामि निजे गृहे ? ॥ ६२ ॥ स्वजनानामभाग्योऽहं, दर्शयामि कथं मुखम् ? । दुर्जनाः सधनाः सर्वे, हसिष्यन्ति मुहुर्मुहुः ॥ ६३ ॥ यतः–वरं वनं व्याघ्रभुजङ्गसेवितं, द्रुमालये पुष्पफलाम्बुभोजनम् । भिक्षाशनं वा विषभक्षणं वरं, न बन्धुमध्ये धनहीनजीवितम् ॥ ६४ ॥ यतः कपिकुलनखमुखविदलिततरुतलपतितानि[2] भोजनं प्रवरम् । न पुनर्धनमदगर्व्वितभ्रूभङ्गविकारिणी दृष्टिः ॥ ६५ ॥ विचिन्त्यैवमसौ पश्चाद्वलितोऽगाद्वनान्तरे । तत्र वारिफलाहारं, कुर्वंस्तस्थौ मृगेन्द्रवत् ॥ ६६ ॥ अमन्नन्येद्युरेकेन, दृष्टः पृष्टश्च योगिना । दृश्यसेऽहो सचिन्तस्त्वं, चिन्तां ते वद मेऽग्रतः ॥ ६७ ॥ धर्मदत्तोऽब्रवीद्देव ! निर्धनत्वे कुतः सुखम् ? । कथं भवामि निश्चिन्तो ?, यदि दारिद्र्यपीडितः ॥ ६८ ॥ कपाली प्राह रे मां किं, न वेत्सि त्वमियद्दिनैः ? । दारिद्र्यकन्दकुद्दाल, इति मे बिरुदं स्फुटम् ॥ ६९ ॥ गाहा–मयणदेव ईसर दहिउ, लङ्क दही हणुमेण । पाण्डुउवन अरजुन दहिउ, पुण दालिद्द न केण ॥ ७० ॥ दारिद्र्यदहनो नाम, मदीयं वर्त्तते भुवि । श्रुत्वा तद्धर्मदत्तोऽपि, हृष्टस्तं प्रणनाम च ॥ ७१ ॥ पृष्ठे दत्त्वा करं योगी, प्रोचे चिन्तां विमुञ्च भोः ! । लक्ष्मीं तव

---

१ अनेरे करि. इति वा. २ फलानि इति गम्यम्.

गृहे दासीं, करोमि स्वल्पकालतः ॥ ७२ ॥ अथोचे धर्मदत्तोऽपि, केनोपायेन हे विभो ! । करिष्यसि द्रुतं दासीं, कमलां ? कथ्यतां मम ॥ ७३ ॥ योग्यूचे साधयिष्यामि, सद्दिने स्वर्णपौरुषम् । चिन्तितं धर्मदत्तेन, कार्या रक्षाऽऽत्मनो मया ॥७४॥ मामेव स्वर्णपुरुषं, मन्ये योगी करिष्यति । निःशूका योगिनः सर्वे, किलेदं श्रूयते पुरा ॥ ७५ ॥ विचिन्त्येति स तं प्रोचे, त्वं योगिन् ! जीवघाततः । करिष्यसि नरं हैमं, कार्यं तन्नास्ति तेन मे ॥ ७६ ॥ योग्यवादीद्दरे हा हा, जीवघातं करोति कः ? । ईदृशो नाथ(न्याय)मार्गो यद्रक्ष्यन्ते सर्वजन्तवः ॥ ७७ ॥ यतः— तत् श्रुतं यातु पातालं, तच्चातुर्यं विलीयताम् । ते विशन्तु गुणा वह्नौ, यत्र जीवदया नहि ॥ ७८ ॥ अघदवौघघनाघनमण्डली, सुकृतसन्ततिकल्पलतावनी । विशदधर्मजनन्यमृतं स्फुरद्, गुणगणे करुणा जयताच्चिरम् ॥ ७९ ॥ यतः—सर्वे धर्मा दानसत्यादयो ये, यन्मूलास्ते कीर्तिताः पूर्वपुम्भिः । एकैवेयं सा दया सावधानैः, साध्या सद्भिः सिद्धिसन्धानदूती ॥ ८० ॥ यतः—द्यूतकारस्तलारक्षस्तैलिको मांसविक्रयी । वार्धकिर्नृपतिर्वैद्यः, कृपया सप्त वर्जिताः ॥ ८१ ॥ तस्याग्रे चित्तरङ्गेण, किन्दरिं वादयन् पुनः । गातुं लग्नस्तदा योगी, सयोगिवाणिभाषया ॥ ८२ ॥ सा च—सोनाकरपुरिसइ काहुं किजइ रे, जइ नही दया प्रधान, तीनइ सोनइ सोहा किसी रे, जीणइ त्रूटइ कान ॥ ८३ ॥ दूहा—भारवहु काई जटा जनोई, दया विण धरम न कोई । जीवदया तुम्हे पालउ बाबू, हीयडइ निरमल होई ॥ ८४ ॥ एभिर्वाक्यैर्द्धर्मदत्तो, विश्वस्तः प्राह हे विभो ! । ब्रूहि केन प्रकारेण, निष्पादयसि पूरुषम् ? ॥ ८५ ॥ योग्यूचे शृणु भो भद्र ! सद्रक्ताञ्जनिकामयम् । पुत्तलं कारयिष्यामि, सप्तहस्तप्रमाणकम् ॥ ८६ ॥ मन्त्रेण पुत्तलं माषसर्षपक्षेपपूर्वकम् । अभिमन्त्र्याग्निकुण्डे च, क्षिप्त्वा होमः करिष्यते ॥ ८७ ॥ उष्णशीतज-

लैर्वह्लावासिक्ते स्वर्णपूरुषः । भविष्यति त्तणादेव, महामन्त्रप्रभावतः ॥ ८८ ॥ श्रुत्वेति धर्मदत्तोऽवक्, प्रसद्य त्वं कुरूद्यमम् । तेनोक्तं किं सुवर्णेन, कार्यं मे ? योगिनो वयम् ॥ ८९ ॥ परं तवैव कार्याय, परोपकृतिहेतुतः । उपक्रमं करिष्येऽथोपकारे दुर्लभा मतिः ॥ ९० ॥ यतः—लक्ष्मीः परोपकाराय, विवेकाय सरस्वती । संन्ततिः सर्वसौख्याय, भवेद्धन्यस्य कस्यचित् ॥ ९१ ॥ परोपकाराय कृतघ्नमेतच्चलं शरीरं यदि याति यातु । काचेन चेद्वज्रमणिं लभेत, मूर्खोऽपि किं नेति[2] पुनर्ब्रवीति ॥ ९२ ॥ धर्म्मदत्तः पुनः प्राह, भगवन् ! विश्वपावन ! । तवेदृशी मतिः पुण्ये, यत्परार्थाय खिद्यति ॥ ९३ ॥ यतः—निष्पेषोऽस्थिचयस्य दुस्सहतरः कष्टं तुलारोपणम्, ग्राम्यस्त्रीकरलुञ्चनव्यतिकरस्तन्त्रीप्रहारव्यथा । मातङ्गोज्झितगण्डवारिकणिकापातश्च कूर्चाहतिः, कर्प्पासेन परार्थसाधनकृते किं किं न चाङ्गीकृतम् ? ॥ ९४॥ योगिनोक्तं महाभाग ! सपादलक्षपर्वतात् । शीतमुष्णञ्च पानीये, आनीयेते प्रयत्नतः ॥ ९५ ॥ गत्वा द्वाभ्यां ततस्तत्रानीतं कुण्डाज्जलद्वयम् । कारितश्च ततो रक्ताञ्जनिकाकाष्ठजो नरः ॥ ९६ ॥ नीत्वा होमस्य सामग्रीं, श्मशाने निशि योग्यसौ । गतः कृष्णचतुर्दश्यां, कुण्डे वह्निः कृतस्ततः ॥ ९७ ॥ विमुक्तः कुण्डकण्ठे स, रक्तचन्दनपुत्तलः । रक्षामिषेण तत्पार्श्वे, खड्गो मुक्तश्च योगिना ॥ ९८ ॥ कुमारं प्रति योग्यूचे, किमस्ति तव सन्निधौ । आयुधं लोहरक्षार्थं ? धर्म्मदत्तस्ततोऽब्रवीत् ॥ ९९ ॥ येनासिना मया पूर्वं, पापिष्ठो राक्षसो हतः । पार्श्वे गुप्तोऽस्ति खड्गोऽसौ, योगिनोक्तं न ते भयम् ॥ ५०० ॥ पराङ्मुखं धर्म्मदत्तं, संस्थाप्य तस्य पृष्ठके । मुक्त्वा च पुत्तलं योगी, कुण्डकण्ठ उपाविशत् ॥ ५०१ ॥ सर्षपानाक्षिपन्मन्त्रपूर्वकं काष्ठजे नरे । धर्म्मदत्तं चापि पृष्ठेऽताडयत्सर्षपा-

१ संपत्तिः इति वा पाठः. २ नकारं न वदेदित्यर्थः.

च्चतैः ॥ २ ॥ चिन्तितं धर्मदत्तेनैतत्कपटं ममोपरि । दुष्टेन योगिना तस्मात् प्रारब्धं कूटनाटकम् ॥ ३ ॥ अधुना कोऽस्ति मे मित्रं, व्यसने पतिते सति ?। यः करिष्यति मे रक्षां, किं कर्त्तव्यं मया ततः ? ॥ ४ ॥ येन दत्तोऽस्ति धर्मेण, तस्य धर्मस्य चिन्तनम् । धर्मदत्तः करोति स्म, परमेष्ठिस्मृतिं तथा ॥ ५ ॥ परमेष्ठिनमस्कारं, सारं नवपदात्मकम् । आत्मरक्षाकरं वज्रपञ्जराभं स्मराम्यहम् ॥ ६ ॥ काव्यम्—सङ्ग्रामसागरकरीन्द्रभुजङ्गसिंहदुर्व्याधिवह्निरिपुबन्धनसंभवानि । चौरग्रहभ्रमनिशाचरशाकिनीनां, नश्यन्ति पञ्चपरमेष्ठिपदैर्भयानि ॥ ७ ॥ ॐ नमो अरिहंताणं, शिरस्कं शिरसि स्थितम् । ॐ नमो सव्वसिद्धाणं, ममाङ्गे वज्रपञ्जरम् ॥ ८ ॥ इत्थं परममन्त्रेण, स्वाङ्गरक्षां चकार सः । सज्जीकृत्य ततः खड्गं, सावधानतया स्थितः ॥ ९ ॥ यावदष्टोत्तरशता—हुतयः पूर्णतां गताः । वक्रीभूय तदालोक्य, योगी खड्गं करे दधौ ॥ १० ॥ तद्दृष्ट्वा धर्म्मदत्तेन, हतो योगी स लाघवात् । कुण्डमध्ये ततः क्षिप्तः, सिक्तः शीतोष्णवारिणा ॥ ११ ॥ योगी स्वर्णनरश्चाभूत्, धर्म्मदत्तस्ततः क्षणम् । गतो मठे जलं पीत्वा, पुनस्तत्र समागतः ॥ १२ ॥ तावत्स्वर्णनरस्तत्र, न दृष्टो मूर्छितोऽपतत् । स शीतपवनैर्लब्धचैतन्यश्चेत्यचिन्तयत् ॥ १३ ॥ अहो मया हतो योगी, किञ्चित्प्राप्तं फलं न च । पृथुकोऽगारकरे दग्धो, भ्रष्टो ह्युभयतोऽप्यहम् ॥ १४ ॥ चण्डालपाटके यातो, भिक्षापि घटिता नहि । अरे दैव ! त्वया चाहमेक एवोपलक्षितः ॥ १५ ॥ मत्पृष्ठे त्वं जलं पीत्वा, स्थित एव विभाव्यसे । दुःखस्योपरि यद्दुःखं, पात्यते मेऽग्रतोऽग्रतः ॥ १६ ॥ पूर्वं पितृवियोगश्च, पश्चात्सागरपातनम् ॥ प्रियावियोग एतत्तु, किं त्वया विदधेऽधुना ? ॥ १७ ॥ यतः—अघटितं घटनां नयति ध्रुवं, सुघटितं क्षणभङ्गुरताकुलम् । जगदिदं कुरुते सचराचरं, विधिरहो बलवानिति मे मतिः ॥ १८ ॥ विलपन्निति

दुःखार्त्तः, पुनरेवमचिन्तयत् । सुखिता दुःखिता ये च, तेषां वै पार्थिवो गतिः ॥ १९ ॥ दुर्बलस्य बलं राजाऽतस्तं विज्ञापयाम्यहम् । अन्यथा कार्यसिद्धिर्मे, भविष्यति कदापि न ॥ २० ॥ यशोधवलराजानं, प्रत्यूचे धर्मदत्तकः । इति ध्यात्वा समुत्थाय, राजन् ! पार्श्वे तवागतः ॥ २१ ॥ राजन्नत्रैव वास्तव्यः, श्रीपतिश्रेष्ठिनः सुतः । धर्म्मदत्तः सोऽहमेव, रावार्थमेष आगतः ॥ २२ ॥ मत्कथा स्वर्णमूर्त्तेश्चोत्पत्तिस्ते कथिता मया । पञ्चमो लोकपालस्त्वं, यथा रुचिस्तथा कुरु ॥ २३ ॥ यतः—

दुष्टस्य दण्डः स्वजनस्य पूजा, न्यायेन कोशस्य च संप्रवृद्धिः । अपक्षपातोऽर्थिषु राष्ट्ररक्षा, पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ २४ ॥ शत्रूणां तपनः सदैव सुहृदामानन्दनश्चन्द्रवत्, पात्रापात्रपरीक्षणे सुरगुरुर्दानेषु कर्णोपमः । नीतौ रामनिभो युधिष्ठिरसमः सत्ये श्रिया श्रीपतिः, स्वीये सत्यपि पक्षपातसुभगः स्वामी यथार्थो भवेत् ॥ ५२५ ॥

इति श्रीवीरदेशनायां श्रीधर्म्मकल्पद्रुमे मुख्यचतुःशाखिके प्रथमदानशाखायां धर्मदत्तकथासंयुते श्रीचन्द्रयशोनृपाख्याने द्वितीयः पल्लवः समाप्तः ॥ २ ॥

# अथ तृतीयः पल्लवः

इन्दुः प्रीणकर्ता प्रतापमरुणो गाम्भीर्यमम्भोनिधिस्तुङ्गत्वं कनकाचलो हिमगिरिः शैत्यं स्वतेजोऽनलः । ऐश्वर्यं धनदः शमंश्च ऋषयः सर्वंसहत्वं धरा, सर्व्वे माङ्गलिकं व्यधुर्निजनिजं यस्मै स जीयान्नृपः ॥ १ ॥ इत्याशिषं ददद्धर्म्मदत्तोऽथ नृपतिं प्रति । पुनरूचे मम स्वामिन् ! दीयते किञ्चिदुत्तरम् ॥ २ ॥ राजोचे भो महाभागोपायः कोऽपि न दृश्यते । न जानीमो वयं केन, गृहीतः कानको नरः ? ॥ ३ ॥ ततः किमुत्तरं दद्मः ? परं मे वचनं शृणु । लक्षं स्वर्णस्य कोटिं वा, याचस्व त्वं निजेच्छया ॥ ४ ॥ यथा तद्दाप्यते कोशात्सन्तोषस्तव जायते । ममापि न भवेत्पश्चादपकीर्त्तिः कदाऽप्यहो ॥ ५ ॥ पश्चादपि कदा कुत्र, ज्ञास्यामि स्वर्णपूरुषम् । तुभ्यमेवार्प्पयिष्यामि, करिष्ये स्वस्थतां तव ॥ ६ ॥ श्रुत्वैवं धर्म्मदत्तोऽवक्, स्वर्णमस्तु धनं तव । युष्मद्धेम्ना न मे कार्यं, वाञ्छते हेमपूरुषः ॥ ७ ॥ इत्युक्तेपि समर्थस्त्वं, यदि मद्वस्तुवालने । करिष्यसि प्रसादं न, तदभाग्यं ममास्ति वै ॥ ८ ॥ निर्वृतिर्मे तदैव स्यात्, यदा प्राप्नोमि मद्धनम् । त्वत्सुवर्णं न गृह्णामि, सद्भिर्मानो न मुच्यते ॥ ९ ॥ यतः– बप्पीयडु जल तं पीयइ, जं घण तुट्ठउ देइ । माणविवज्जउ धरपडइं, मरइ न चञ्चू भरेई ॥ १० ॥ एक एव खगो मानी, सुखं जीवति चातकः । पिपासितो वा म्रियते, याचते वा पुरन्दरम् ॥ ११ ॥ काव्यम्–कूपे पानमधोमुखं भवति मे नद्यो वराकाः स्त्रियः, सामान्यं बकटिट्टिभैर्वरसरश्चैवं समालोच्य तत् । नादत्ते तृषितोऽपि नीचसलिलं क्रूरैर्वृतं जन्तुभिः, मानादुन्नतकन्धरोऽमरपतिं तद्याचते चातकः ॥ १२ ॥ अतः स्वामिंस्त्वया नैव, वाच्यं मे हेमसङ्ग्रहे । इति तन्निश्चयं ज्ञात्वा,

राजा चित्ते व्यचिन्तयत् ॥ १३ ॥ चेन्ममाप्याश्रितस्यास्य, कार्यं सिद्धिं न यास्यति । तदाऽहं किं मुखं स्वीयं, दर्शयिष्यामि भूतले ? । १४॥ ध्यात्वैवं वीटकं हस्ते, गृहीत्वैवमभाषत । मत्सभायां स कोऽप्यस्ति ?, यो वालयति पूरुषम् ॥ १५ ॥ ततो राजसुतश्चन्द्रयशा वीटकमग्रहीत् । भूपं नत्वाऽवदच्चेति, वालयिष्यामि पूरुषम् ॥ १६ ॥ सविस्मयास्तदा लोकाश्चिन्तयन्ति स्म चेतसा ( सि ) । अहो कथं कुमारोऽसौ, वालयिष्यति पूरुषम् ? ॥ १७ ॥ अथ राजसभामभ्यात्, धर्मदत्तनृपाङ्गजौ । चलितौ द्वावपि क्षिप्रं, तत्कार्यकरणेच्छया ॥ १८ ॥ वने गत्वा विलम्बार्थमित्युक्तं राजसूनुना । देवेन दानवेनाथ, खेचरेण नरेण वा ॥ १९ ॥ येन केन हृतो यावत्, ज्ञायते न हि पूरुषः । तावन्महोद्यमेनापि, कार्यसिद्धिर्भवेन्न हि ॥ २० ॥ अतो रात्रौ वने तत्र स्थीयते च्छन्नवृत्तितः । यथा ज्ञात्वा स्वरूपं तत्, क्रियते कार्यसाधनम् ॥२१॥ एवं मिथो विमृश्य द्वौ, स्मशाने शर्व्वरीमुखे । निविष्टौ धार्ष्ट्यमालम्ब्य, निशाचरभयेऽपि च ॥ २२ ॥ धर्मदत्तः सनिद्रोऽभूत्, जागर्त्ति क्षितिपाङ्गजः । दूरे तेन तदा दिव्यवाद्य-गानरवः श्रुतः ॥ २३ ॥ मुक्त्वा सुप्तं धर्मदत्तमाभिज्ञानं पदे पदे । कुर्वन्शब्दानुसारेण, ययौ तत्र स कौतुकी ॥ २४ ॥ ददर्शाग्रे च यक्षस्य, भवनं स्वर्विमानवत् । मध्येऽद्राक्षीत्ततो दत्तकपाटविवरेण सः ॥ २५ ॥ अष्टोत्तरशतं तत्र, नृत्यन्ति सुरकन्यकाः । तासां मध्ये ददर्शैकां नारीं सोऽधिकरूपिणीम् ॥ २६ ॥ मुहूर्त्तं कौतुकं वीक्ष्य, व्यावृत्तोऽसौ कुमारकः । आगतो धर्म-दत्तस्य, समीपे सोऽप्यजागरीत् ॥ २७ ॥ स पृष्टो राजपुत्रेण, त्वयाऽहो मित्र ! साम्प्रतम् । सुप्तेनेह श्रुतं किञ्चिद्धर्मदत्तस्ततो-ऽवदत् ॥ २८ ॥ शृगालव्यालशार्दूलोलूकशूकरखड्गिनाम् । पिशाचप्रेतभूतानां, श्रुताः शब्दा मया घनाः ॥ २९ ॥ ततः स्मि-त्वा कुमारेण, नृत्यवार्त्ता प्रकीर्त्तिता । दिव्यरूपधरा चैका, प्रोक्ताभिज्ञानसंयुता ॥ ३० ॥ तच्छ्रुत्वा धर्मदत्तस्तं, प्रत्यूचे सा

मम प्रिया। घटते गम्यते तत्र, द्रुतं सा च विलोक्यते ॥ ३१ ॥ ततः स्थानाद्गतौ यावत्तौ द्वौ यत्तस्य वेश्मनि। न दृष्टं नर्त्तनं तावन्न दृष्टा सा च सुन्दरी ॥ ३२ ॥ हस्तौ प्रघर्षयन्धर्म्मदत्तः पप्रच्छ साऽवला। कियन्माना च कीदृग्वर्णा च कतिवार्षिका ? ॥ ३३ ॥ स्वरूपं सकलं तस्याः, कथितं भूपसूनुना। धर्म्मदत्तोऽवदत्स्वर्णनरेणालं वयस्य ! मे ॥ ३४ ॥ हे भ्रातर्मम पत्नीं तां, केनोपायेन चालय। तर्हि मे जीवितं दत्तं, प्राप्तं सर्वस्वमेव च ॥ ३५ ॥ प्रभातसमये जाते द्वारमुद्घाटितं तदा। यत्ताग्रे च कुमारेण, प्रारब्धमिति वर्चसम् ॥ ३६ ॥ कृतान्नाम्बुपरित्यागो, रागरङ्गविवर्जितः। निस्स्पृहो निरहङ्कारः, कुमारोऽसौ यतीन्द्रवत् ॥ ३७ ॥ एकाग्रं मानसं कृत्वा, धर्मदत्तकृते ततः। निविष्टो निश्चलो भूत्वा, दर्भसंस्तारके कृती ॥ ३८ ॥ युग्मम् ॥ एकचित्तेन सिद्धिः स्यात्, द्विधाचित्तो विनश्यति। चित्ते सुदृढता यस्य, तस्य किं नहि सिध्यति ? ॥ ३९ ॥ एति प्रसन्नतां सर्वमेकचित्तेन सेवितम्। दरिद्रभक्त्या किं नाभूत्, राजपालो रमास्पदम् ? ॥ ४० ॥ क्षत्रियो देवदत्ताख्यः, पुरेऽभूत् रथमर्दने। तस्य दैववशाज्जज्ञे, राजपालाभिधः सुतः ॥ ४१ ॥ तस्मिन् पाण्मासिके जाते, परलोकं गतः पिता। माताऽपि पञ्चवर्षीये, मरणं शरणं ययौ ॥ ४२ ॥ विषपुञ्जनिभं मत्वा, तं बालं स्वजनाः परे। सर्प्पवत्तत्यजुर्दूरमशरण्यं दयोज्झिताः ॥ ४३ ॥ सोऽपि स्वकर्मणा वृद्धिं, पुपोष गिरिवृक्षवत्। प्रपन्नो यौवनावस्थां, दध्याविति अर्थवर्जितः ॥ ४४ ॥ यौवनं सफलं भोगैः भोगाः स्युः सफला धनैः। तद्विना मानुषं जन्म, जायते वनपुष्पवत् ॥ ४५ ॥ ततो देवानसौ नित्यं, नुनाव धनलोलुपः। न कोऽपि द्रव्यदानार्थमलंभूष्णुरभूत्सुरः ॥ ४६ ॥ ततो जातविषादोऽसौ, तान् देवान् पूर्व्वयाचितान्। सावज्ञं तृणवत्कोपात्, विचिक्राय चतुष्पथे ॥ ४७ ॥ परं दरिद्ररूपं स, मृन्मयं सपरश्वधम्। निर्म्माय निजगेहान्तः, पूजयामास सादरम् ॥ ४८ ॥

कदा तत्रैव मुक्त्वा तं, दरिद्रं स च धीधनः । जगाम योजनशतं, दरिद्रदरकातरः ॥ ४९ ॥ तत्र चन्द्रापुरीमध्यं, प्रविशन् शून्यसद्मनि । स तं दरिद्रमद्राक्षीत्, संभ्रमोत्कर्षभासुरः ॥ ५० ॥ अहो सकलदेवस्य, प्रसादो मयि कीदृशः ? । यद्योजनशतं मुक्तो, मत्पृष्ठिं न मुमोच यः ॥ ५१ ॥ प्राञ्जलिर्गद्गदगिरा, तुष्टाव गुणरञ्जितः । हरिशङ्करप्रमुखास्त्वत्पुरः के सुरोत्तमाः ? ॥ ५२ ॥ यतः—हे दारिद्र्य ! नमस्तुभ्यं, सिद्धोऽहं त्वत्प्रसादतः । अहं सर्वत्र पश्यामि, माञ्च कोऽपि न पश्यति ॥ ५३ ॥ इति स्तौति प्रतिदिनं, पूजमानोऽथ भक्तिमान् । सेवते दैवतमिव, तं दरिद्रं स दुर्गतः ॥ ५४ ॥ इतश्च चन्द्राधिपतेः, पट्टहस्ती विशृङ्खलः । पातयन्पुरसौधानि, मर्दयन्मनुजांस्तथा ॥ ५५ ॥ नामयन् वासराधीशं, मोहयन्मनुजेश्वरम् । आलानस्तम्भमुन्मूल्य, विचचार मदोद्धुरः ॥ ५६ ॥ तं वीक्ष्य विवशं राजाऽघोषयत् डिण्डिमं पुरे । वशीकरोति करिणं, तस्याहं वाञ्छितं ददे ॥ ५७ ॥ श्रुत्वा दरिद्रभक्तेन, तेन गीतकलाविदा । मन्द्रमध्यतारभेदैः, क्षणान्नागो वशीकृतः ॥ ५८ ॥ अयाचि भूपादिष्टेन, प्रसादस्तेन मानिना । दीपा न कार्याः केनापि, मद्गृहे दीपवासरे ॥ ५९ ॥ तथेति राज्ञाऽनुज्ञातो, रोरो दीपमहे निशि । निजोटजाभितो दीप्रान्, भूरिदीपानचीकरत् ॥ ६० ॥ तस्यां निशायां कमला, बभ्राम सकलां पुरीम् । क्वापि दीपमपश्यन्ती, समेता तस्य सद्मनि ॥ ६१ ॥ उद्यम्य लकुटं सोऽथ, कमलामनुधावितः । दरिद्रे स्वामिनि सति, त्वं कुतोऽत्रैपि चञ्चले ! ॥ ६२ ॥ इति भक्त्या तया हृष्टो, दरिद्रोऽपि हसन् जगौ । त्वयि तुष्टो महारोर ! वरं ब्रूहि विशारद ॥ ६३ ॥ शब्दच्छलज्ञः स प्राह, यदि तुष्टोऽसि तत्कदा । मदीयेन त्वया भाव्यं, किं समीहेऽपरं त्वयि ॥ ६४ ॥ छलितेऽस्मिन्न वागूचे निर्गते निजमन्दिरात् । सोऽपि पद्मां समाहूय, पूजयित्वा नतिं व्यधात् ॥ ६५ ॥ मातर्दरिद्रे मध्यस्थे, न योग्यः स्यात्तवा-

गमः । कल्पवल्ली करीरेण, किं योजयितुमर्हति ? ॥ ६६ ॥ प्रातः प्रजेश ( शः ) प्रत्यक्षं, प्रीत्या पद्माप्रमोदतः । भूमिखण्डस्य कस्यापि, राज्यमस्मै वितीर्णवान् ॥ ६७ ॥

इति एकाग्रचित्तविषये राजपालकथा समाप्ता ॥

अथास्यैकाग्रचित्तस्य, दृढासनस्थितस्य च । रूपाणि सर्प्पसिंहानां, दर्शितानि सुरैर्निशि ॥ ६८ ॥ तथापि राजपुत्रस्य, क्षुभितं न मनो मनाक् । एवं तस्य दिनाः सप्त, सञ्जाताः सत्त्वशालिनः ॥ ६९ ॥ सप्तोपवासैः प्रत्यक्षीभूय यक्षो जगाद सः । याचसे किं महाधीर !, स ऊचे शृणु यक्षराट् ! ॥७०॥ धर्मदत्तस्य या पत्नी, तामानीय ममार्प्पय । यक्षेणोक्तमसाध्यं मे, यतः सा मत्प्रियावशा ॥७१॥ न शक्यते मया दातुं, श्रुत्वैवं नृपजोऽब्रवीत् । सुन्दरी सा त्वया यक्ष !, क्व प्राप्ता कथय प्रभो ! ॥७२॥ यक्षो जगाद हे भद्र !, कदाऽहं प्रियया युतः । रात्रौ कापि वने प्राप्तो, दृष्टा सा दिव्यधारिणी ॥७३॥ यक्षिण्या मे तदा प्रोक्तं, स्वामिन् ! दिव्यैकरूपिणी । मानवी दृश्यते सुप्ताऽपहृत्यैनां ममार्प्पय ॥७४॥ भर्तृपार्श्वात्ततो हृत्वा, प्रियायै सा मयाऽर्प्पिता । तां दातुं नैव शक्तोऽहमित्युक्त्वाऽसौ तिरोदधौ ॥७५॥ कुमारेण तदाऽचिन्ति, धिग् देवान् येऽबलावशाः । किङ्करा इव दृश्यन्ते, मानवास्तर्हि किं पुनः ? ॥ ७६ ॥ गाथा–हरिहरचउराणणचन्दसूरखन्धाइणोऽवि जे देवा । नारीण किङ्करत्तं, करन्ति धिद्धी विसयातिण्हा ॥ ७७ ॥ यक्षिणीं तामथोद्दिश्य, कुर्व्वेऽत्राहं पुनस्तपः । यथा मे कार्यसिद्धिः स्यात्तपो हि विषमार्थकृत् ॥ ७८ ॥ यतः–इष्टे नष्टे सुखे भ्रष्टे, कष्टे निकटवर्तिनि । अमूढमनसां युक्तं, वैराग्याभरणं तपः ॥ ७९ ॥ नानाविधलसल्लब्धिलतामण्डलमण्डपः । कल्याणकुमुदारामचन्द्रचन्द्रातपस्तपः ॥८०॥ तपः सकललक्ष्मीणां, नियन्त्रणमशृङ्खलम् । दुरित-

प्रेतभूतानां, रक्षामन्त्रो निरक्षरः ॥ ८१ ॥ अथोपवासत्रितयं, तथैव विधिना कृतम् । ततस्तस्य तपःसत्त्वात्, यक्षिणी कम्पितासना ॥ ८२ ॥ प्रत्यक्षीभूय तं प्रोचे, किमेतद्वत्स ! साहसम् ?। तपसा तव तुष्टाऽहं, मनोऽभीष्टं वरं वृणु ॥ ८३ ॥ तेनोक्तं देवि ! देहि त्वं, धर्मदत्तप्रियां मम । ततो दत्ता तया सा स्त्री, सर्वं सिध्यति सत्त्वतः ॥ ८४ ॥ धर्मदत्तं समाहूय, कुमारेणार्पिता प्रिया । प्रोक्तं चैषा भवद्भार्या, पूर्वप्रोक्ता भवेन्न वा ? ॥ ८५ ॥ दृष्ट्वा दिव्यदुकूलैश्चाभरणैर्भूषितां प्रियाम् । भवत्येवेति स प्रोक्त्वा(च्य), नितान्तं मुमुदे हृदि ॥८६॥ पुनर्भूपसुतोऽवादीत्, हे सखे ! धर्मदत्तक। अग्रे चल यथा स्वर्णनरं निष्कास्य ते ददे ॥ ८७ ॥ गत्वा तत्र स्मशानेऽथ, खनित्वा तेन भूतलम् । निष्कासितः स देदीप्यमानः काञ्चनपूरुषः ॥ ८८ ॥ कथितं च मयैवायं, गृहीत्वा वह्निकुण्डतः। निक्षिप्तो भूमिमध्ये प्राग्, गृहाण तव पूरुषम् ॥ ८९ ॥ तं दृष्ट्वा धर्म्मदत्तोऽपि, चेतस्येवमचिन्तयत् । अहो अस्योपकारित्वमुदारत्वं च कीदृशम् ? ॥ ९० ॥ गाथा–उवयारइ उवयारडउ, सहूइ कोइ करेइ । विण उवयारइ जो करइ, विरला जणणि जणेइ ॥ ९१ ॥ नयप्रणयिनी लक्ष्मीः, सत्त्वप्रणयिनी धृतिः। कुलीनानां भवत्येव, धर्म्मप्रणयिनी मतिः ॥ ९२ ॥ यतः–उद्योतयति कोऽपि जातः, कुलमन्यो निर्मलं कलङ्कयति । धवलयति कुमुदबन्धुर्गगनं मलिनयति जीमूतः ॥ ९३ ॥ अथोचे धर्मदत्तस्तं, कुमारं प्रति सादरम् । तवोपकारिणः पार्श्वे, याञ्चां कि(का)ञ्चित्करोम्यहम् ॥९४॥ मम वाक्यं त्वया व्यर्थं, न कर्तव्यं विचक्षण !। याचस्वेति कुमारेण, प्रोक्ते धर्मोऽवदत्पुनः ॥९५॥ चामीकरनरं मित्र !, गृहाण वचसा मम। कुमारेणोक्तं को हेतुर्येन्मे ददासि पूरुषम् ॥९६॥ तेनोक्तं नायमस्माकं, मन्दिरे घटते कदा। तेन ते दीयते प्रत्युपकारोऽपि भवेत्पुनः ॥ ९७ ॥ आग्रहाद्धर्मदत्तस्य, प्रोवाच नृपनन्दनः । यावद्रोचेत तन्मानं, स्वर्ण

गृहाण पूरुषात् ॥ ९८ ॥ द्वौ पादौ च करौ तस्य, च्छित्वा सोऽथ गृहीतवान् । शीर्षादि शेषमुत्पाट्य, राजपुत्रो गृहं ययौ ॥ ९९ ॥ पृष्टं भूपेन हे वत्स !, तस्य लब्धः स पूरुषः ! । लब्ध एवं कुमारेण, भाषिते हर्षितो नृपः ॥ १०० ॥ तेनाथ धर्मदत्तेन, षोडश द्रव्यकोटयः । तस्माच्चामीकरात् प्राप्ताः, पुरुषाङ्गप्रभावतः ॥ १ ॥ कस्मात्स्थानान्महान्तं स, सार्थं कृत्वा समागतः । गृहे वर्धापकोऽप्रैषि, भार्या तस्य च हर्षिता ॥ २ ॥ सर्वोऽपि स्वजनस्तस्य, तदा सन्मुख आगतः । महोत्सवेन धर्मोऽसौ, प्रविवेश निजं गृहम् ॥ ३ ॥ भार्याद्वययुतो धर्मदत्तो भोगान् बुभोज सः । पूर्वाश्रिताश्च ये लोकास्तमाढ्यं ते सिषेविरे ॥ ४ ॥ काव्यम्—त्यजन्ति मित्राणि धनैर्विहीनं, पुत्राश्च दाराश्च सहोदराश्च । तमर्थवन्तं पुनराश्रयन्ति, अर्थो हि लोके पुरुषस्य बन्धुः ॥ ५ ॥ कियत्यपि गते काले, यशोधवलभूपतिः । वैराग्यरसपीयूषपानं कर्तुं समुद्यतः ॥ ६ ॥ श्रीचन्द्रयशसं पुत्रं, विन्यस्य राज्यसंपदि । सुमित्रसूरिपार्श्वे स, व्रतं जग्राह शुद्धधीः ॥ ७ ॥ पठित्वा शुद्धसिद्धान्तं, चिरं चारित्रमुज्ज्वलम् । प्रपाल्य खड्गधाराभं, स राजर्षिः शिवं ययौ ॥ ८ ॥ तस्य श्रीचन्द्रयशसो, राज्यप्राप्तस्य भूतले । नवीनं चन्द्रधवल, इति नाम प्रकीर्त्तितम् ॥ ९ ॥ सुवर्णपुरुषस्याथ, पूज्यमानस्य युक्तिभिः । हस्ताः पादा अपि च्छिन्ना, आविर्बभूवुरन्वहम् ॥ ११० ॥ अक्षयस्तेन हेम्नाऽस्य, जातः कोशः स्वपुण्यतः । स पृथ्वीमनृणां कृत्वा, प्रावर्तयत्स्ववत्सरम् ॥ ११ ॥ अन्यदा धर्म्मदत्तः स, स्मृतिं राज्ञः समागतः । मन्त्रिणं प्रेष्य चाकार्य, बहुमानमदान्नृपः ॥ १२ ॥ राजोचे तव दत्तेन, सुवर्णपुरुषेण भोः ! । अनृणीकारकीर्तिर्मे, जाताऽतस्त्वं महासखा(खः) ॥१३॥ मुख्यश्रेष्ठिपदं दत्तं, मध्येऽस्य व्यवहारिणाम् । धर्म्मः सुखासनासीनो, यात्यायाति निजे गृहे ॥ १४ ॥ नरेन्द्रधर्म्मदत्तौ तौ, धर्म्मकार्याण्यनेकशः । चक्रतुः स्नेहवार्ताश्च, नित्यं विदधतु-

मिथः ॥ १५ ॥ एकदा तेन भूपेन, प्रीत्या पृष्टः स श्रेष्ठिराट् । कियन्मात्रं धनं तेऽस्ति ?, तेनोचे शृणु कौतुकम् ॥ १६ ॥ तस्मिन्नवसरे स्वामिन् !, सुवर्णपुरुषाङ्गतः । सङ्ख्यया मे सुवर्णस्य, जाताः षोडश कोटयः ॥ १७ ॥ जलस्थलादिमार्गेषु, व्यवसायं प्रकुर्वतः । लेख्यके मम ता एव, सन्ति षोडश कोटयः ॥ १८ ॥ न विशेषः कदा कश्चिद्व्यवसायस्य दृश्यते । तेन कर्तुं न शक्नोमि, व्ययश्च सविशेषकम् ॥ १९ ॥ अतः कारणतो देव !, कोऽपि ज्ञान्येव पृच्छ्यते । येन मे ज्ञायते कर्म्म-विपाकः कथमीदृशः ? ॥ १२० ॥ राज्ञोचे मित्र ! ते लक्ष्म्या, इयान्लोभः कथं हृदि ? । भाग्येनैव भवेत्पद्मा, भाग्यं सर्वत्र वन्द्यते ॥ २१ ॥ यथान्यदा भाग्यलक्ष्म्योर्द्वयोर्मिलितयोर्मिथः । सञ्जातः क्वापि संवादः, आत्मात्मैकप्रशंसने ॥ २२ ॥ अप्येको नो विरमते ( ति ), सुरैरिन्द्रादिकैस्तदा । एतयोः कथितं स्वस्वान्, गुणान् दर्शयतं युवाम् ॥ २३ ॥ अथैकं दुर्गतं दीनं, कृशं संवीक्ष्य मानवम् । सुवर्णस्येष्टिका तस्य, दत्वा च कमलाऽवदत् ॥ २४ ॥ रे त्वं याहि गृहे स्वर्णं, विक्रीयाभरणादिभिः । भूषितः पुनरागच्छामीषां दर्शय मद्गुणान् ॥ २५ ॥ ओमित्युक्त्वा गतो गेहे, गोपिता चेष्टिका क्वचित् । तां प्रातिवेश्मिकी दृष्ट्वा, गृहीत्वा च गता गृहे ॥ २६ ॥ तथावस्थं ततो निःस्वं, दृष्ट्वा द्वितीयवासरे । रत्नमेकं पुनर्लक्ष्म्या, तस्मै सत्कृपयाऽर्प्पितम् ॥२७॥ शिक्षां चापि तथा दत्वा, वालितोऽसौ गृहं प्रति । रत्नं मुक्त्वा नदीतीरे, स्नानार्थं स जलेऽविशत् ॥ २८ ॥ मत्स्येनागत्य तद्रत्नं, गिलितं च ययौ जले । तृतीयेऽपि दिने तादृक्, स नरो ददृशे श्रिया ॥ २९ ॥ भाग्येनाथ रमा प्रोक्ता, त्वयाऽसौ न धनीकृतः । वीक्ष्याहं शुभदृष्टिभ्यां, करोम्यद्यास्य सुन्दरम् ॥ १३० ॥ यतः—भाग्यं फलति सर्वत्र, न विद्या न च पौरुषम् । श्रीकण्ठकण्ठलग्नस्य, वासुकेर्वायुवल्गनम् ॥ ३१ ॥ भाग्येनाथ स्वहस्तेन, तद्भाले तिलकं कृतम् ।

उक्तं याहि गृहे जल्पन्, भाग्यं स्फुरति मेऽद्य वै ॥ ३२ ॥ तस्मिन्गेहे गतेऽथागात्, प्राघूर्णकोऽस्य शालकः । तदर्थे हीनजातित्वान्मत्स्य आनीय दारितः ॥ ३३ ॥ तन्मध्यान्निःसृतं रत्नं, दृष्ट्वा सोऽवक् प्रियां प्रति । लब्धं पूर्वगतं रत्नमिष्टिकाऽथ विलोक्यते ॥ ३४ ॥ एवं प्रोचे पुनर्यावत्तावद्भित्त्यन्तरे स्थिता । तत्प्रातिवेश्मकी श्रुत्वा, ददौ तां शङ्कयेष्टिकाम् ॥ ३५ ॥ लगित्वा पादयोश्चैवं, वदति स पुनः पुनः । क्षन्तव्यो मेऽपराधोऽयं, वाच्यं कस्याग्रतोऽपि न ॥ ३६ ॥ ओमित्युक्त्वा जहर्षासौ, रत्नस्वर्णेष्टकाधनात् । आढ्यो बभूव भाग्येन, दरिद्रं सकलं गतम् ॥ ३७ ॥ अन्येद्युःसेवकैर्युक्तो, वस्त्राभरणभूषितः । अश्वारूढो जगामासौ, कमलाभाग्यसंनिधौ ॥ ३८ ॥ भाग्यपादे पतित्वा च, तद्गुणान् वर्णयंस्तथ । देवानां पुरतो लक्ष्मीं, निर्भर्त्सयन्नुवाच सः ॥ ३९ ॥ भाग्यप्रभावतो राज्यं, भाग्याच्च प्रचुरं धनम् । अतो भाग्यं वरं ज्ञेयं, तद्विना श्रीः करोति किम् ? ॥ १४० ॥

इति भाग्योपरि कथा समाप्ता ।

अतो ब्रवीमि हे मित्र !, धर्म्मदत्त ! रमाक्षयः । भाग्ये सति भवेन्नैव, ततः कार्यो धनव्ययः ॥ ४१ ॥ इत्थं मिथो रागवन्तौ, चक्रतुः सुकृतानि तौ । अन्येद्युर्वनपालेन, विज्ञप्तोऽसौ धराधिपः ॥ ४२ ॥ स्वामिन् ! श्रीधर्मधवलनामानः सूरयो वने । समाजग्मुः परिवृताः, साधुभिः पञ्चभिः शतैः ॥ ४३ ॥ श्रुत्वैवं हर्षितो भूपश्चतुरङ्गचमूवृतः । महोत्सवेन सद्भक्त्या, गुरून्नन्तुं ययौ वने ॥ ४४ ॥ धर्मदत्तोऽपि सोत्साहः, पत्नीद्वितयसंयुतः । मनःसंशयभङ्गार्थं, जगाम गुरुवन्दने ॥ ४५ ॥ निजभालेऽञ्जलिं कृत्वा, वन्दित्वा तं गुरुं वरम् । उपविष्टौ यथास्थानं, नरेन्द्रधर्मदत्तकौ ॥ ४६ ॥ तेषां भविकजीवानां,

पुरतस्तेन सूरिणा । भवदाहसुधातुल्या, प्रारब्धा धर्मदेशना ॥ ४७ ॥ भो भव्या ! भूरिभाग्येन, भविनां नृभवो भवेत् । तदमुं प्राप्य संसारं, त्यक्त्वाऽऽश्रयत निर्वृतिम् ॥ ४८ ॥ संसारः परमं दुःखं, मोक्षश्च (श्च) परमं सुखम् । इति तत्त्वं परिज्ञाय, भाव्यं मोक्षाय तत्परैः ॥ ४९ ॥ भवा जन्तोरनन्ताः स्युर्नृभवः शस्यते परम् । यदर्ज्यन्तेऽमुना स्वर्गापवर्गाद्याः सुखश्रियः ॥ १५० ॥ यतः—विषयविरतिः सङ्गत्यागः कषायविनिग्रहः, शमदमदयास्तत्त्वाभ्यासस्तपश्चरणोद्यमः । नियमितमनोवृत्ति-र्भक्तिर्जिनेषु सुशीलता, भवति कृतिनः संसाराब्धेस्तटे निकटे सति ॥ ५१ ॥ यथा मृगा मृत्युभयेन भीता, उद्घूर्णय कर्णौ न करन्ति निद्राम् । एवं बुधा ज्ञानसमन्विता हि, संसारभीता न करन्ति पापम् ॥ ५२ ॥ प्राणान्न हिंस्यान्न पिबेच्च मद्यं, वदेच्च सत्यं न हरेत्परार्थम् । परस्य भार्यां मनसाऽपि नेच्छेत्, स्वर्गं यदीच्छेत् गृहवत्प्रवेष्टुम् ॥ ५३ ॥ पुरन्दरसहस्राणि, चक्रवर्त्तिशतानि च । निर्व्वापितानि कालेन, प्रदीपा इव वायुना ॥ १५४ ॥ धर्म्मादाप्नोति शर्माणि, परमादिव बान्धवात् । तरण्डेनेव तरति, धर्मेण विपदापगाः ॥ ५५ ॥ सम्यगाराधितो धर्म्मो, जन्तूनां सुखदायकः । इहलोके फलं दत्ते, परलोके हि का कथा ? ॥ ५६ ॥ यथा हि दुर्गतः पूर्वं, सुन्दरश्रेष्ठिनन्दनः । कृत्वा दुःखक्षयं धर्म्मादिहलोकेऽपि सुख्यभूत् ॥५७॥ गाथा—अलमित्थ वित्थरेणं, कुरु धम्मं जेण वंछियसुहाइं । पावेसिइ इहलोए, जहाइं सुयसुन्दरस्सेव ॥ ५८ ॥ अयनानि विना भानि, यथा शोभां दधन्ति न । तमो विना कथं दीपे, दीपकत्वं प्रवर्त्तते ? ॥५९॥ बुभुक्षां च विना भव्यं, भोजनं रोचते कथम् ? । विना चातपसंतापं, नहि च्छायागुणो भवेत् ॥ १६० ॥ पुरा कृतस्य पापस्य, विपाकेन विना तथा । कथं वरे-ण्यपुण्यस्य, प्रभावो ज्ञायते भुवि ? ॥ ६१ ॥ यदा सङ्कटमायाति, प्रयाति विलयं यदा । तदा तदा क्षणे जन्तोः, पापपुण्यफलं

भवेत् ॥ ६२ ॥ जानन्ति मानवा दक्षाः, पुण्यपापफलं स्वयम् । मुग्धजन्तुविबोधार्थं, कथ्यते हेतुभिः पुनः ॥ ६३ ॥ राजोचे भगवन्कोऽसौ, सुन्दरश्रेष्ठिसंभवः । किं कृतं प्रबलं पुण्यं ?, गतं पापं कथं पुनः ? ॥ ६४ ॥ अहं तु श्रोतुमिच्छामि, तत्कथां त्वत्प्रसादतः । यस्यात्रैव कृतो धर्म, इहैव फलितो द्रुतम् ॥ ६५ ॥ मुनिराह महाभाग !, शृणु त्वं शुद्धचेतसा । सम्यक् ते कथयामीत्थं, कथां कौतुककारिणीम् ॥ ६६ ॥ अथ—जंबूद्वीपेऽस्ति सत्क्षेत्रं, पवित्रं भरताभिधम् । तद्भाले तिलकाकारं, पुरं तिलकनामकम् ॥ ६७ ॥ तत्पुरं पालयामास, राजा श्रीतिलकप्रभुः । प्रजानां पोषको नित्यं, शोषकः पापकारिणाम् ॥ ६८ ॥ तिलकश्रीः प्रिया तस्य, सती सौभाग्यशालिनी । सौजन्यगुणसंयुक्ता, रूपेण जितदेवता ॥ ६९ ॥ तत्पुरे सुन्दरश्रेष्ठी, गुणैर्ज्येष्ठो विशिष्टधीः । निजवंशावतंसोऽभूद्दयादाक्षिण्यसुन्दरः ॥ १७० ॥ सुभगश्रीः प्रिया तस्य, भाग्यसौभाग्यभूरभूत् । सुशीला स्वजनानन्ददायिनी कमलोपमा ॥ ७१ ॥ सदाल्हादा च सोत्साहा, स्वजने मिलिते सति । भक्ता देवे गुरौ चापि, सा स्त्री लक्ष्मीरिवापरा ॥ ७२ ॥ परघरगमणालसिणी परपुरिसाविलोयणे य जच्चन्धा । परमालावे बहिरा, घरस्स लच्छी न सा महिला ॥ ७३ ॥ दूहा—कङ्कुआ बोली कामिणी, फगडा सूरी नारि । तेहनउ घर सहु परिहरइ, को न चढइ घरबार ॥ ७४ ॥ नर नरस्युं बहु बोलणा, घर घर गोडि भमन्ति । सहीया निसि बाहिर वसइ, ते सुशील किम हुन्ति ? ॥७५॥ संपूर्णविभवः श्रेष्ठी, कोटिसंख्यधनेश्वरः । कान्तया सह संसारभोगान्नित्यं बुभोज सः ॥ ७६ ॥ कदा वचनमात्रेण, न दूमयति कञ्चन । यस्य धर्मे शुभा बुद्धिर्मनःशुद्धिर्जिनार्चने ॥ ७७ ॥ एवं प्रवर्त्ततस्तस्य ( मानस्य ), कालो घनतरो ययौ । परं पुत्रफलं नाभूत्तदा श्रेष्ठी व्यचिन्तयत् ॥ ७८ ॥ वर्त्तते मम कायस्य, वयस्तुर्यं समीपगम् । तथापि दृश्यते नूनं, गृहं शून्यं सुतं विना

॥७९॥ गाथा—तं मन्दिरं न सोहइ, जत्थ न दीसन्ति धूलिधवलाइं। उठ्ठन्ति रडन्ति रमन्ति च, दोतिन्नि लहुयाइं डिंभाइं॥१८०॥ काव्यम्—इक्षोर्विकारा मतयः कवीनां, गवां रसो बालकभाषणानि। ताम्बूलमन्नं युवतीकटाक्षा, एतान्यहो शुक्र! न सन्ति नाके ॥ ८१ ॥ को भावी मद्गृहाधीशो, वंशवृद्धिः कथं भवेत्। कः कर्त्ता च विना पुत्रं, गुरुगोत्रजयोः स्थितिम्? ॥८२॥ इति चिन्तापरो नित्यं, शून्यचित्तः सुतार्त्तिभाक्। दिनान्यपूरयत् श्रेष्ठी, धने सत्यपि दीनवत् ॥ ८३ ॥ एकदा यामिनीयामे, पश्चिमे स महामतिः। धर्मात्मा धर्म्मकृत्येषु, विशेषात्प्रगुणोऽभवत् ॥ ८४ ॥ शय्यां विमुच्य यत्नेन, प्रमार्ज्य धरणीतलम्। पद्मासनं दृढीकृत्योपविष्टो विष्टरे वरे ॥ ८५ ॥ पिण्डस्थं च पदस्थं च, रूपस्थं रूपवर्जितम्। एवं चतुर्विधे ध्याने, यथाशक्ति समुद्यतः ॥ ८६ ॥ परमेष्ठिनमस्कारं, सारं सस्मार मानसे। ववन्दे शुभभावेन, श्रेष्ठी शाश्वततीर्थपान् ॥ ८७ ॥ शत्रुञ्जयोज्जयन्ताद्री, संमेतशिखरं तथा। अष्टापदश्च तीर्थानि, नमश्चक्रेऽथ शान्तये ॥ ८८ ॥ ऋषभेशोऽजितः स्वामी, संभवश्चाभिनन्दनः। सुमतिस्तु पद्मप्रभः, श्रीसुपार्श्वो जिनाधिपः ॥ ८९ ॥ चन्द्रप्रभस्तु सुविधिः, शीतलस्तीर्थनायकः। श्रेयांसो वासुपूज्योऽपि, विमलोऽनन्ततीर्थराट् ॥ १९० ॥ धर्म्मः श्रीशान्तिकुन्थू चारो मल्लिर्मुनिसुव्रतः। नमिर्नेमिः पार्श्वनाथो, महावीरो जिनोत्तमः ॥ ९१ ॥ चतुर्विंशतितीर्थेशानेतांश्च समये तदा। अतीतान् भाविनश्चापि, स ववन्दे शिवङ्करान् ॥ ९२ ॥ धर्म्मध्याने स्थितस्यैवं, सुन्दरस्य महात्मनः। प्रत्यक्षीभूय तत्राऽऽगात्, गोत्रजा पूर्व्वजन्मनः ॥९३॥ यतः—सदयः सत्यवादी यः, सलज्जः शुद्धमानसः। गुरुदेवार्चको वाग्मी, तस्य तुष्यन्ति देवताः ॥९४॥ यतः—चौराणां वञ्चकानाञ्च, परदारापहारिणाम्। निर्दयानाञ्च निःस्वानां, न तुष्यन्ति सुराः कदा ॥ ९५ ॥ असत्यवादिनां हत्याकारकाणां कुकर्म्मणाम्। अन्तर्मलिनचित्तानां,

न तुष्यन्ति सुराः कदा ॥९६॥ गोत्रजा सा जगादैवं, मां त्वं जानासि सुन्दर !। प्राग्भवेऽहं भवदेवी, तव पूर्व्वभवं शृणु ॥९७॥ श्रीनिवासपुरे पूर्व्वमिभ्यः सोमाभिधोऽभवत् । सोमश्रीस्तस्य भार्याऽभूद्गोत्रजा भुवनेश्वरी ॥९८॥ सिंहदत्ताभिधः श्रेष्ठः, श्रेष्ठिनोऽस्य सुतोऽभवत् । कृत्वा दानादिकं धर्म्मं, सोमो मृत्युमवाप सः ॥ ९९ ॥ उत्पन्नः सोमदेवोऽत्र, पुरे तिलकनामनि । सिंहदत्तस्य जीवस्त्वं, पुत्रो जातोऽस्य सुन्दर ! ॥ २०० ॥ प्राग्भवे गोत्रदेवी ते, सैवाहं भुवनेश्वरी । अत्रागताऽस्मि हे वत्स !, शृणु चागमकारणम् ॥ १ ॥ अद्याहं तीर्थयात्रार्थं, द्वीपे नंदीश्वरे गता । तत्र शाश्वततीर्थेशा, वन्दिता भक्तियुक्तिभिः ॥२॥ नृत्य-गानादिरङ्गश्च, कृत्वा विविधभावतः । अनगच्छाश्वतचैत्यानि, वन्दित्वा वलिता पुनः ॥ ३ ॥ आगताऽष्टापदाद्रौ च, यस्मिन् भरतकारितः । प्रासादोऽस्ति सुवर्णस्य, चतुर्द्वारो महोन्नतः ॥ ४ ॥ काव्यम्—उत्सेधाङ्गुलदीर्घयोजनमितं कोशत्रयं चोच्छ्रितं, विस्तारे भरताधिराजविहितं गव्यूतमात्रोध्धुरम् । एकाहर्निशि नित्यवासशिवदं कैलासभूषामणिं, नाम्ना सिंहनिषद्यमुत्तममहं चैत्यं स्तुवे सादरम् ॥ ५ ॥ चतुर्विंशतिरर्हन्तो, रत्नकाञ्चनमूर्तिभिः । स्थापिता मानवर्णाभ्यां, युक्तास्तत्र चतुर्दिशम् ॥ ६ ॥ तान् जिनान् पूजयित्वा च, वन्दित्वा चलिता ततः । नृपापश्रियामेऽहमागतैतत्पुरोपरि ॥ ७ ॥ तदाऽकस्माद्विमानं मे, बभूव नभसि स्थिरम् । उपायानां शतेनापि, न चलत्येव चालितम् ॥ ८ ॥ क्रुधाऽचिन्ति मया केन, विमानं स्तम्भितं मम ? । अवधिज्ञानयोगेन, तदा पश्चान्निरीक्षितम् ॥ ९ ॥ तदाऽधस्तान्मया दृष्टस्त्वं ध्यानेनात्र संस्थितः । सन्तानार्थश्च चिन्तापि, ज्ञाता ते याऽस्ति चेतसि ॥ २१० ॥ अहं दृष्टा तदा चित्ते, कोपाटोपश्च संवृतः । तव ध्यानप्रभावेन, विमानं स्तम्भितं मम ॥ ११ ॥ यतः—पुण्यवान् यः पुमान् कोऽपि, कष्टचिन्तार्णवे पतेत् । तस्योपरि भवेद्दैवं, स्थिरं यानमिति स्थितिः ॥ १२ ॥

यतः—साधुस्त्रीबालवृद्धानां, पीडितानाञ्च केनचित् । उल्लङ्घने च तीर्थानां, विमानं स्थिरतां भजेत् ॥ १३ ॥ यतः—दुष्टारि-
ष्टाभिभूता ये, दुःखिनश्च सुधर्म्मिणः । सांनिध्यं क्रियते तेषां, स्थितिरेषा हि दैवती ॥ १४ ॥ अतोऽहं पूर्वमोहेन, तव
ध्यानेन सुन्दर ! । मुक्त्वा विमानमाकाशे, आगता भवदन्तिके ॥ १५ ॥ तुष्टाऽहं तव भाग्येन, याचस्व वरमीहितम् । सुन्द-
रः स्माह हे मातः !, सत्यं सर्व्वं त्वयोदितम् ॥१६॥ शृण्वतो मम त्वद्वाचं, जातिस्मृतिरभूदिह । तेन पूर्वो भवो दृष्टो, यादृशः
कथितस्त्वया ॥ १७ ॥ अथ त्वं यदि तुष्टाऽसि, किमन्यद् याच्यते ? यतः । सांसारिकं सुखं सर्वमस्ति मे त्वत्प्रसादतः
॥ १८ ॥ परमेकोऽयं मे नास्ति, देहि तद्देवि ! साम्प्रतम् । येन मे सफलं जन्म, जायते जगतीतले ॥ १९ ॥ देव्यूचे भद्र !
किं न्यूनं ?, प्रोवाच सुन्दरः पुनः । सूनुर्मे नास्ति तद्दुःखं, यं विना भाति नो कुलम् ॥ २२० ॥ यतः—दिनं दिनकरं विना
वितरणं विना वैभवं, महत्त्वमुचितं विना सुवचनं विना गौरवम् । सरः सुजलजं विना घनभरं विना मान्दिरम्, कुलं तनुरुहं
विना श्रयति नैव सश्रीकताम् ॥ २१ ॥ देवि ! देहि ततः पुत्रं, प्रशस्तं शुभलक्षणम् । मद्वाचा ते सुतो भावीत्युक्त्वा देवी
पुनर्जगौ ॥ २२ ॥ सुभगः सुगुणो दक्षस्तव पुत्रो भविष्यति । परं तव च पुत्रस्य, सुखं नो भवितोभयोः ॥ २३ ॥ माता-
पित्रोर्वियोगोऽस्य, बालत्वेऽपि भविष्यति । प्रथमं चासुखीभूत्वा, पश्चात्स भविता सुखी ॥ २४ ॥ इत्युक्त्वा सा तिरोभूता,
यानस्था स्वाश्रयङ्गता । श्रेष्ठी क्षणं स्थिरं स्थित्वा, निजचित्ते व्यचिन्तयत् ॥ २५ ॥ काव्यम्—स्वप्नः किन्तु किमिन्द्रजाल-
मथवा किं चेतसो विभ्रमो, दोषः कोऽपि किमेष मे नयनयोर्विश्वैकसंमोहकृत् । पाताले त्रिदिवेऽथवा समभवज्जन्मान्तरं मेऽपरम्,
कोऽस्मि क्वास्मि किमस्मि कर्म विदधत् क्षिप्तोऽस्मि केनात्र च ? ॥ २६ ॥ इति चिन्तयतस्तस्य, प्रभातं समजायत ।

चकारावश्यकादीनि, प्रातःकृत्यान्यसौ सुधीः ॥ २७ ॥ तद्दिनाद्धर्म्मकार्याणि, विदधेऽसौ महादरात् । दीनादिभ्यो ददौ
दानं, पात्रेभ्योऽपि विशेषतः ॥ २८ ॥ यतः—दातव्यं भोक्तव्यं, सति विभवे सञ्चयो न कर्त्तव्यः । पश्येह मधुकरीणां, सञ्चि-
तमर्थं हरन्त्यन्ये ॥ २९ ॥ यतः—रूपं स्वरूपं वसुवासवोपमं, रम्याणि हर्म्याणि मनोरमाः स्त्रियः । भवन्ति सौभाग्ययुताश्च
देहिनः, सुपात्रदत्तेन धनेन सर्व्वदा ॥ २३० ॥ यतः—सत्पात्रं महती श्रद्धा, काले देयं यथोचितम् । धर्म्मसाधनसामग्री,
नाल्पपुण्यैरवाप्यते ॥ ३१ ॥ ज्ञानयुक्तः क्रियाधारः, सुपात्रमभिधीयते । दत्तं बहुफलं तत्र धेनुसत्क्षेत्रयोरिव ॥ ३२ ॥
असद्भ्योऽपिच यद्दानं, तत्र श्रेयस्करं विदुः । दुग्धपानं भुजङ्गानां, जायते विषवृद्धये ॥ ३३ ॥ गाथा—जं तवसंयमहीणं,
नियमविहूणं च बंभपरिहीणं । तं सिलसमं पत्तं, बुड्डन्तं बोलए अन्नं ॥ ३४ ॥ गाथा—जो सिंचिऊण विसपायवंपि पत्थेइ
तत्थ अमयरसं । जइ पाविज्ज तओ तं, ता मुक्खफलं अपत्तेवि ॥ ३५ ॥ चैत्यानां यत्समारम्भे, साधूनां भेषजक्रमे । किञ्चि-
देकगुणं पापं, पुण्यं कोटिगुणं भवेत् ॥ ३६ ॥ दातुर्दापयितुश्चैव, अनुमन्तुश्च भावतः । वस्तुनः पात्रदत्तस्य, त्रयाणां सदृशं
फलम् ॥ ३७ ॥ आनन्दाश्रूणि रोमाञ्चो, बहुमानः प्रियं वचः । किं चानुमोदना पात्रदानभूषणपञ्चकम् ॥ ३८ ॥ अनादरो
विलम्बश्च, वैमुख्यं विप्रियं वचः । पश्चात्तापश्च पञ्चामी, सद्दानं दूषयन्त्यहो ॥ ३९ ॥ स्थावरं जङ्गमं चेति, सत्पात्रं द्विविधं
स्मृतम् । स्थावरं तत्र पुण्याय, प्रासादप्रतिमादिकम् ॥ २४० ॥ ज्ञानाधिकं तपःक्षामं, निर्म्ममं निरहङ्कृतम् । स्वाध्यायब्रह्म-
चर्येशं, युक्तं पात्रन्तु जङ्गमम् ॥ ४१ ॥ तयोस्तत्र द्वयोर्मध्ये, जङ्गमं पात्रमुत्तमम् । स्थावरं हि बहोः कालात्सद्यः पुण्याय
जङ्गमम् ॥ ४२ ॥ देवधर्म्मादिकं सर्व्वं, ज्ञायते जङ्गमाद्यतः । प्रोक्तं सर्व्वोत्तमं तेन, सत्पात्रं जङ्गमं बुधैः ॥ ४३ ॥ काव्यम्—

शूराः सन्ति सहस्रशः सुचरितैः पूर्णं जगत्पण्डितैः, सङ्ख्या नास्ति कलाविदां बहुतरैः शान्तैर्वनान्ताः श्रिताः । त्यक्तुं यः किल वित्तमुत्तममतिः शक्नोति जीवाधिकम्, सोऽस्मिन् भूमिविभूषणं गुणनिधिर्भव्यो भवे दुर्लभः ॥ ४४ ॥ काव्यम्—दानं दुर्गतिवारणं गुणगणप्रस्तारविस्तारणम्, तेजः सन्ततिधारणं कृतविपत्श्रेणीसमुत्सारणम् । अंहःसन्ततिदारणं भवमहाकूपारनिस्तारणम्, धर्म्माभ्युन्नतिकारणं विजयते श्रेयःसुखाकारणम् ॥ ४५ ॥ काव्यम्—क्वचित्कामासक्तः क्वचिदपि कषायैरपहृतः, क्वचिन्मोहग्रस्तः क्वचन वधनोपायनिरतः । न धर्म्मार्थे किञ्चित्सुचरितमगारी प्रकुरुते, परिभ्रष्टो दानात्स यदि न तदालम्बनमिह ॥ ४६ ॥ लघुः काणोऽपि कुब्जोऽपि, दानादुपरि कर्करः । उपार्जकोऽपि पूर्णोऽपि, लोकेऽपि स्यादधो घटः ॥ ४७ ॥ यतः—क्षेत्रं यन्त्रप्रहरणवधूलाङ्गलं गोतुरङ्गम्, धेनुर्गन्त्री द्रविणतरवो हर्म्यमन्यच्च वित्तम् । यत्सारम्भञ्जनयति मनोरत्नमालिन्यमुच्चै—स्तादृग्दानं सुगतितृपितैर्नैव लेयं न देयम् ॥ ४८ ॥ यतः—दानेन लक्ष्मीर्विनयेन विद्या, नयेन राज्यं सुकृतेन जन्म । परोपकारक्रिययाऽपि कायः, कृतार्थ्यते येन पुमान्स मान्यः ॥ ४९ ॥ अथ प्रकुर्वतः पुण्यं, सुन्दरस्य सुरीवरात् । गतेषु कतिघस्रेषु, पत्नी गर्भं बभार सा ॥ २५० ॥ क्रमेण ववृधे गर्भः, शुभदोहदसंयुतः । सा संपूर्णेषु मासेषु, शुभेऽह्नि सुषुवे सुतम् ॥ ५१ ॥ सोत्साहः सुन्दरः श्रेष्ठी, पुत्रजन्मोत्सवं व्यधात् । बालस्य दुर्ग्गक इति, नाम चक्रे ततः पिता ॥ ५२ ॥ अथ तस्य शिशुत्वेऽपि, पूर्व्वदुष्कर्मयोगतः । मृतौ तौ मातृपितरौ, नान्यथा देवतावचः ॥ ५३ ॥ तत्कुलस्य क्षयो जातो, विनष्टो विभवोऽपि च । शेषः परिजनः सर्व्वो, दूरे मृत्योर्भयाद्गतः ॥ ५४ ॥ बालोऽसौ पालयाञ्चक्रे, सत्कृपैः प्रातिवेश्मिकैः । वृद्धिं क्रमेण संप्राप, दुर्ग्गको दैवयोगतः ॥ ५५ ॥ अरक्तरक्तको दैवः, प्रायेण स्थितिरीदृशी । विधिर्विनष्टकर्त्ता च, सुरक्तं तद्विनश्यति ॥

७

५६ ॥ गुणोऽपि दोषतां याति, वक्रीभूते विधातरि । सानुकूले पुनस्तस्मिन्, दोषोऽपि हि गुणायते ॥ ५७ ॥ विमुक्तबालभावोऽसौ, सर्वशास्त्राण्यपीपठत् । कलासु कुशलो जज्ञे, कर्मणा निर्धनः परम् ॥ ५८ ॥ विमुच्य तत्पुरं शालिग्रामके पार्श्ववर्तिनि । गतस्तत्र करोत्येष, व्यवसायं नवं नवम् ॥ ५९ ॥ यद्यत्क्रयाणकं सोऽथ, गृह्णीयात्तस्य तस्य न । लाभः स्वल्पोऽपि हानिस्तु, घना भवति कर्म्मतः ॥ २६० ॥ अथैकस्मिन् दिने तस्य, मस्तके न्यस्त(स्य)पुट्टलम् । व्रजतो मिलितौ मार्गे, द्वौ मुनीशौ मनोहरौ ॥ ६१ ॥ सत्कर्मपरिणामेन, तेनाप्ता साधुसङ्गतिः । अग्रे हि यादृशी सिद्धिर्योगो भवति तादृशः ॥ ६२ ॥ वन्दित्वा मुनियुग्मं तत्, धर्म्मं पप्रच्छ दुर्गकः । धर्मोपदेश एकेन, साधुना दत्त ईदृशः ॥ ६३ ॥ यतः–जिनभक्तिर्गुरुनमनं, दानं शीलं तपः श्रुतं ध्यानम् । संवेगश्च प्रत्यहमिति कार्यं श्रावकैः सद्भिः ॥ ६४ ॥ ततो गुरूपदेशात्स, नित्यं याति जिनालये । त्रिसन्ध्यं पूजयामास, जिनान् विविधवस्तुभिः ॥ ६५ ॥ आवश्यकं द्विसन्ध्यं स, चकार शुभभावतः । परमेष्ठिनमस्कारं, जजाप स्थिरमानसे ॥ ६६ ॥ संविभागञ्च साधूनां, स्वल्पात्स्वल्पतरं व्यधात् । निःस्वत्वसमये ह्यल्पं, कृतं पुण्यं घनं भवेत् ॥ ६७ ॥ सारं श्रीजिनधर्म्मस्य, दयालुर्विदधे दयाम् । सामग्रीं प्राप्य धर्मस्य, वेलां शून्यां मुमोच न ॥ ६८ ॥ कियत्यपि गते काले, सोऽन्येद्युर्मुद्रपोट्टलम् । नीत्वा वलपुरे गच्छन्, मार्गे तस्थौ क्षणं वने ॥ ६९ ॥ तत्रैकशाखिनोऽधस्तान्निविष्टं धृतपुस्तकम् । दृष्ट्वैकं मानवं दक्षं, तं पप्रच्छेति दुर्गकः ॥ २७० ॥ भो विद्वन्पुस्तके तेऽस्ति, किं शास्त्रं ? वद सूनृतम् । शास्त्रं शकुनसत्कं मे, पुस्तकेऽस्तीति सोऽवदत् ॥ ७१ ॥ कीदृशाः शकुनास्तेषां, किं फलं ? वद सुन्दर ! । दुर्गकेणेति पृष्टः सोऽप्याख्यत् शकुनजं फलम् ॥ ७२ ॥ यतः–कन्यागोशङ्खभेरीदधिफलकुसुमं पावको दीप्यमानो, नागेन्द्रोऽश्वो रथो

वा नृपतिरभिमुखः पूर्णकुम्भो ध्वजो वा। उत्क्षिप्ता चैव भूमिर्जलचरयुगलं सिद्धमन्नं शतायु–र्वेश्याखीमद्यमांसं हितमपि गदितं मङ्गलं प्रस्थितानाम्॥ ॥ ७३ ॥ पृष्टे दुर्ग्गाविचारेऽथ, स सिद्धः पुनरब्रवीत्। दुर्गा वामा प्रयाणे तु, शुभा सौख्यधनप्रदा ॥७४॥ सुस्थानस्था विशेषेण, राज्यादिसुखदायिका। एवं निशम्य चोत्थायोत्साहान्ननर्त्त दुर्ग्गकः ॥ ७५ ॥ स्मित्वा सिद्धेन पृष्टोऽसौ कथं नृत्यसि ? भो नर !। उवाच दुर्ग्गकः स्वामिन् !, शृणु स्वोत्कर्षकारणम् ॥ ७६ ॥ प्रोक्ताः प्रशस्ताः शकुनास्त्वया मे, ममाभवंस्ते पुनरीदृशाऽभूत्। दुर्गाप्यतोऽहं प्रकरोमि नृत्यं, भव्यं फलं प्राप्स्यति दुर्ग्गको यत् ॥ ७७ ॥ विज्ञोऽपि पुनरप्यूचे, दुर्गाशकुनभावतः। कन्यायुग्मं च सद्राज्यं, त्वमद्य प्राप्स्यसे ध्रुवम् ॥ ७८ ॥ एवं श्रुत्वाऽग्रतो गत्वा, पुनर्ननर्त्त दुर्गकः। शुभं श्रुत्वा नराः क्षीणाः, प्रायो हर्षन्ति सर्वतः ॥ ७९ ॥ इत्थं विकलवत्तस्मिन्नृत्यं कुर्वति हर्षतः। तत्रागाद्विक्रमधनो, राजाऽकस्मान्नमूवृतः ॥ २८० ॥ तं नृत्यन्तं नरं वीक्ष्य, हेतुं पप्रच्छ भूपतिः। स ऊचे शृणु भूमीश !, मम नृत्यस्य कारणम् ॥ ८१ ॥ मुद्रपोट्टलमुत्पाट्य, मार्गेऽद्यागच्छतो मम। सञ्जाताः शकुनाः सौम्याः, सद्भाग्योदययोगतः ॥ ८२ ॥ विश्रान्तोऽहं वने खिन्नो, दृष्टस्तत्र निमित्तवित्। शकुनार्थे मया पृष्टे, तेनेत्थं कथितं मम ॥ ८३ ॥ प्रशस्ताः शकुना दृष्टा, दुर्ग्गाशब्दानुभावतः। अद्यैव कन्यकायुग्मयुक्तं राज्यमवाप्स्यसि ॥ ८४ ॥ इत्थं श्रुत्वा प्रमोदेन, राजन् ! नृत्यं करोम्यहम्। श्रुतायां लाभवार्त्तायां, हर्षः कस्य न जायते ? ॥ ८५ ॥ इति श्रुत्वा स भूमीभृत्, तं चालोक्य व्यचिन्तयत्। अहो अनीदृशो निःस्वो, विरूपो दृश्यते नरः ॥ ८६ ॥ अद्य वार्त्ता श्रुताऽवश्यं, निन्द्यस्य वणिजोऽपि च। जातेच्छा राजकन्यानामहो लोभविजृम्भितम् ॥ ८७ ॥ चिन्तयित्वेति भूपालो, गूढकोपो गृहं ययौ। पुरे चाघोषयच्छीघ्रं, सर्वत्रैवेति डिण्डिमम् ॥ ८८ ॥ अद्य यस्या-

त्पश्चादिनीं मुद्रान् बाह्यागतान्पुरे । ग्रहीष्यति हि यस्तस्य, राजदण्डो भविष्यति ॥ ८९ ॥ दुर्ग्गकोऽप्यथ सोत्साहो, गृहीत्वा मुद्रपोट्टलम् । आगतो नगरीमध्ये, बभ्राम च चतुष्पथे ॥ २९० ॥ हट्टेषु दर्शिता मुद्र—वर्णिका तु नृपाज्ञया । मुद्रान् कोऽपि न गृह्णाति, न लोप्यं नृपशासनम् ॥ ९१ ॥ चतुष्पथेषु सर्व्वेषु, भ्रान्त्वा भ्रान्त्वाऽखिलं दिनम् । स खिन्नः खेदसंयुक्तः, सुप्तः शून्यापणे क्वचित् ॥ ९२ ॥ उच्छीर्षे पुट्टलं दत्त्वा, मुक्त्वा निःश्वासमुच्चकैः । किञ्चिन्निद्रो निराशश्च, निशां निर्गमयत्यसौ ॥ ९३ ॥ इतश्चास्ति पुरे तस्मिन् सुमतिः सचिवोऽस्य च । सौभाग्यसुन्दरी भार्या, सुता सुभगसुन्दरी ॥ ९४ ॥ सा च यौवनसंपूर्णा, सञ्जाता जनमोहिनी । इतश्चास्ति पुरे तस्मिन्निभ्यसूनुः सुदर्शनः ॥ ९५ ॥ सद्रूपे तस्य सा रक्ता, प्रच्छन्नं पाणिपीडने । दूत्या मुखेन विज्ञाप्य, सङ्केतस्तद्दिने कृतः ॥ ९६ ॥ ततः सामग्रिकां सर्व्वां, गृहीत्वा सा महानिशि । ययौ शून्यापणे तत्र, यत्र सुप्तोऽस्ति दुर्ग्गकः ॥ ९७ ॥ तत्र सङ्केतवेलायां, नागतः स सुदर्शनः । दुर्ग्गकाङ्गेऽन्धकारेऽथ, लग्नस्तस्याः करस्तदा ॥ ९८ ॥ तया ज्ञातं वरो ह्येष, तमुत्थाप्य ततोऽस्य च । परिधाप्य वरं वस्त्रं, सा शृङ्गारमचीकरत् ॥ ९९ ॥ हारार्धहारकेयूरकुण्डलादीनि तत्तनौ । धृत्वा दास्या तयोः शीघ्रं, कृतः पाणिग्रहोत्सवः ॥ ३०० ॥ स्वदासीं प्रति साऽप्यूचे, पूर्णो मेऽद्य मनोरथः । दूती स्माह कृतं भव्यं, प्रमाणं ह्यग्रतो विधिः ॥ १ ॥ आलापयद्यदा सा तं, प्रोचेऽसौ दुर्ग्गकस्तदा । अनीदृशस्वरं श्रुत्वा, ज्ञातं नासौ सुदर्शनः ॥ २ ॥ मन्त्रिपुत्री पुनः प्रोचे, कोऽसि त्वं वद सत्वरम् । सोऽवादीद्दुर्ग्गकोऽहं रे, साऽथोद्योतमकारयत् ॥ ३ ॥ प्रकाशे स तया दृष्टो, दरिद्रो दुर्गकः कृशः । विलक्षाऽभूत्तदा मन्त्रिपुत्री सुभगसुन्दरी ॥ ४ ॥ विधुरा विललापोच्चैर्हा दग्धाऽहं च वञ्चिता । परिणीतो दरिद्रोऽसौ, नागात्सङ्केतितो नरः ॥ ५ ॥ इति चिन्तापरा शीघ्रं,

गता सा निजसद्मनि । विना नीरं यथा मीनो, न रतिं प्राप सा निशि ॥ ६ ॥ जनन्याः कथितः सर्व्वः, स वृत्तान्तस्तया तदा । तयाऽपि भाषितं पुत्र्याः, स्वरूपं भर्तुरग्रतः ॥ ७ ॥ इतश्च तत्पुरे राजा, श्रीविक्रमधनोऽभवत् । अनङ्गकेलिसदनमनङ्गश्रीः सुताऽस्य च ॥ ८ ॥ तस्मिन्नेव दिने कस्यचित्सामन्तसुतस्य च । विवाहविषये च्छन्नः, सङ्केतः कारितस्तया ॥ ९ ॥ रात्रौ गृहोर्ध्वभूमौ सा दीपं कृत्वा तमोभरे । गवाक्षे मञ्चिकां मुक्त्वा, व्यलोकयद्वरागमम् ॥ ३१० ॥ गतायां मन्त्रिनन्दिन्यां, दुर्ग्गकोऽचिन्तयत्तदा । विज्ञोक्तं मिलितं किञ्चित्सा वधूः क्व गता परम् ? ॥ ११ ॥ उत्थायासौ ततो रात्रौ, तां द्रष्टुमगमत्पथि । उद्योते तद्गवाक्षाधो, दृष्ट्वा सरज्जुमञ्चिकाम् ॥ १२ ॥ विनोदेनोपविष्टोऽसौ, मञ्चकोपरि दुर्ग्गकः । रज्जुचालनतो ज्ञातः, कन्यया वर आगतः ॥ १३ ॥ आकृष्य मञ्चिकामूर्ध्वं, नीतो दासीभिराशु सः । अस्तङ्गतस्तदा दैवाद्दीपश्चीवरवायुना ॥ १४ ॥ कृत्वा विवाहसामग्रीं, सारशृङ्गारपूर्व्वकम् । उत्सुकत्वादन्धकारे, परिणीतः स कन्यया ॥ १५ ॥ ततोऽनङ्गश्रिया जाते, विवाहे हर्षपूर्णया । दत्ताभिर्निजचेटीभिरेवमालापितः पतिः ॥ १६ ॥ स्वामिन् ! वेला कथं लग्ना ? शरीरे कुशलं तव ? । दुर्ग्गकः स्माह भो भद्राः !, परग्रामादिहागतः ॥ १७ ॥ परग्रामागमं श्रुत्वा, ज्ञात्वा स्वरविपर्ययम् । शङ्कया कृतदीपेन, साऽपश्यत्तं नरं परम् ॥ १८ ॥ पश्चात्तापपरा जाता, तं निःस्वं वीक्ष्य भूपजा । दासीनां कथितं चाथाधमोऽयं मुच्यतामधः ॥ १९ ॥ उत्तारितो गवाक्षात् स, तस्मिन् शून्यापणे गतः । सुप्तः शेषनिशायाञ्च, कौतुकं चिन्तयन् हृदि ॥ ३२० ॥ अथ जाते प्रभाते स, सचिवः सुमतिः स्वयम् । विलोकनाय जामातुर्निर्गतो नगरान्तरे ॥ २१ ॥ दृष्टः शून्यापणे सुप्तः, स वरः कुङ्कुमार्चितः । विवाहवेषसंयुक्तः, सुशृङ्गारश्च मन्त्रिणा ॥ २२ ॥ उत्थाप्यासौ निजं गेहमानीतो बहुमानतः । राज्ञाऽपि तद्दिने पुत्र्या वृत्तान्तो

ज्ञात आदितः ॥ २३ ॥ आहूय सचिवं चोक्त्वा, पुत्रीवृत्तं नृपोऽवदत् । एकमेव वरं विश्वे, वृणुते कुलबालिका ॥ २४ ॥ स्वेच्छया यो वृतः पुत्र्या, विलोक्यानय तं वरम् । राज्ञोऽग्रे मन्त्रिणाऽप्युक्तं, पुत्रीविवाहकौतुकम् ॥ २५ ॥ दुर्ग्गकोऽसौ नृपस्याग्रे, समानीतोऽथ मन्त्रिणा । दृष्ट्वा तं चोपलक्ष्योचे, भूपो भद्रत्वमागतः ॥ २६ ॥ त्वं मुद्राविक्रयी किं न ?, स एवाहं नरोऽवदत् । शकुनाद्यं नृपेणास्य, स्वरूपं मन्त्रिणोऽकथि ॥ २७ ॥ विमृश्य सचिवः प्रोचे, विधिनाऽयं विवाहितः । भवितव्यं भवत्येव, नाभाव्यं भवति क्वचित् ॥ २८ ॥ यत्पूर्व्वोपार्जितं कर्म्म, शुभं भवति वाऽशुभम् । विपाको जायते तस्य, जिनेन्द्रैरिति भाषितम् ॥ २९ । काव्यम्—नैवाकृतिः फलति नैव कुलं न शीलं, विद्याऽपि नैव न च जन्मकृता च सेवा । भाग्यानि पूर्वतपसा किल सञ्चितानि, काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ३३० ॥ सविस्तरं नृपेणास्य, विवाहः कन्ययोर्द्वयोः । कृतो दत्तश्च जामात्रे, राज्यार्धं करमोचने ॥ ३१ ॥ कृतं सौभाग्यकलश, इति नामास्य भूभुजा । इहलोके सुखी जातः, कृतपुण्यप्रभावतः ॥ ३२ ॥ सम्यक् संसेवितो धर्म्मो, जिनोक्तः करुणान्वितः । इहलोके परत्रापि, सर्व्वथा फलदायकः ॥ ३३ ॥ अन्यदा नृपतिः प्रोचे, हर्षाज्जामातरं प्रति । शुभास्ते शकुना भद्र ! दृश्यन्ते फलितास्तव ॥ ३४ ॥ सौभाग्यकलशोऽप्यूचे, स्वामिन् ! किं शकुनैर्भवेत् ? । एवं यतो मया धर्म्मो, जिनेन्द्रोक्तः कृतो भृशम् ॥ ३५ ॥ जिनेन्द्रपूजनं नित्यं, कृतं दम्भविवर्जितम् । साधूनां संविभागश्च, यथाशक्ति कृतो मया ॥३६॥ तेनात्र फलितं पुण्यं, प्रत्यक्षं मम भूपते ! । सिद्धस्य वचनं सत्यं, जातं पुण्यानुभावतः ॥३७॥ स विक्रमधनो भूपः, स्वरूपं वीक्ष्य धर्म्मजम् । धर्म्ममाराधयामास, शुद्धचित्तो दिवानिशम् ॥३८॥ जिनगेहेषु बिम्बेषु, सिद्धान्तेषु च सर्व्वदा । चतुर्विधेषु सङ्घेषु, व्यधाद्वित्तव्ययं बहु ॥३९॥ यतः—आढ्याः सन्ति भुवस्तले प्रति-

पुरग्रामं कियन्तोऽपि ते, येषां वित्तमलंकरोति धरणीं वृद्ध्या च नाशेन च । बिम्बे बिम्बनिकेतने जिनपतेः सङ्घे च भट्टारके, ज्ञाने त्यागमुपैति यस्य सततं धन्यो ह्यसौ नापरः ॥ ३४० ॥ यतः—यः कारयति पुण्यात्मा, य(स)दा पुस्तकलेखनम् । गोभूहिरण्यदानानि, तेन दत्तानि नित्यशः ॥४१॥ इत्थं पुण्यं प्रकुर्व्वन्तौ, भूपभूपसुतापती । सुखसंयोगलीलाभिर्गमयामासतुर्दिनान् ॥४२॥ अथान्येद्युः पुरे तस्मिन्नुद्याने समुपागतः । सूरीन्द्रो गुणचन्द्राख्यश्चन्द्रोऽज्ज्वलगुणान्वितः ॥४३॥ विज्ञप्तो वनपालेन, तदा राजा स हर्षितः । जामात्रा सहितः सूरिवन्दनार्थं वने गतः ॥ ४४ ॥ तिस्रः प्रदक्षिणा दत्वा, मुक्त्वा गर्व्वञ्च दुर्ज्जयम् । वन्दित्वा विधिना सूरिमुपविष्टो महीपतिः ॥४५॥ गुरुणा देशनाऽऽरब्धा, पुण्यपीयूषवाहिनी । भ्रमतां च भवारण्ये, तृष्णाच्छेदकरी नृणाम् ॥४६॥ धर्मः श्रुतोऽपि दृष्टोऽपि, कृतोऽपि कथितोऽथवा । उन्मोदितोऽथवा राजन् !, पुनात्येवाङ्गिनो भृशम् ॥ ४७ ॥ यास्त्रिलोकेऽपि दृश्यन्ते, प्राप्तयः सुखदुःखयोः । जानीहि ताः फलं भद्र !, प्रकटं पुण्यपापयोः ॥४८॥ वशीभवन्ति विश्वानि, प्रलीयन्ते च शत्रवः । संपदश्च विजृम्भन्ते, पुण्यपण्यानुभावतः ॥ ४९ ॥ यथा पूर्व्वं भूपपुत्र्या, धर्म आराधितो महान् । इहैव फलितः सद्यः, श्रूयतां तन्निदर्शनम् ॥ ३५० ॥ तथाच—यमुनावाहिनीतीरे, पुरी रत्नावती वरा । भूपोऽत्रामरकेतुस्तु, जज्ञे रत्नवती प्रिया ॥ ५१ ॥ जातास्तस्य सुताः सप्त, बभूव पुनरष्टमी । सा मञ्जूषाऽन्तरे क्षिप्ता, जातमात्रैव खेदतः ॥ ५२ ॥ मुक्ता च यमुनानद्यां, सवस्त्रा तु तदम्बया । सप्तयामैः समायाता, ततः पद्मपुरे पुरे ॥ ५३ ॥ सुलसोऽस्ति वणिक्तत्र, सप्तपुत्रीसुदुःखितः । दृष्टा सा तेन मञ्जूषा, गच्छन्ती यमुनाजले ॥५४॥ नद्यां प्रविश्य दक्षेण, पेटा निष्काशिता जलात् । गृहीत्वा चागमद् गेहे, पेटिकोद्घाटिता ततः ॥ ५५ ॥ स तामालोकयद्यावत्तावदैक्षत बालिकाम् । ततोऽजल्पत्करौ घर्षन्, हा हा दैवेन किं

कृतम् ? ॥५६॥ पुण्योदयं विना लोके, यत्र तत्र गतो नरः। वाञ्छितं लभते नैव, विपरीतं भवेत्पुनः ॥५७॥ अग्रेऽपि सप्त मे पुत्र्यः, सन्ति प्राप्ताष्टमी त्वसौ। एकोऽपि नन्दनो नास्ति, किं करोमि क याम्यहम् ? ॥ ५८ ॥ एवं स खेदसंयुक्तः, कृपया तामपालयत्। यमुनेति कृतं नाम, यौवनं प्राप सा क्रमात् ॥ ५९ ॥ पुत्रीबाहुल्यतः साऽथ, पालकत्वाच्च श्रेष्ठिनः। अवल्लभा दरिद्रेव, खलति स्म दिवानिशम् ॥ ३६० ॥ इन्धनार्थमरण्ये सा, नित्यं यात्यतिदुःखिनी। क्षुत्पिपासे सहेन्नित्यं, पूर्वदुष्कृतयोगतः ॥ ६१ ॥ गच्छन्त्या अन्यदाऽरण्ये, काष्ठानयनहेतवे। मार्गेऽस्या मिलितः साधुः, जीवानिमित्तवत्सलः ॥ ६२ ॥ महर्षिमुखतः श्रुत्वा, धर्म्मं शुद्धं सुमानसा। साधयामास सा नित्यं, पुण्यं सद्भावसंयुता ॥ ६३ ॥ षष्ठाष्टमतपश्चक्रे, जिनार्चां जिनवन्दनम्। सम्यक्त्वादिव्रतैर्युक्तं, गृहिधर्म्ममपालयत् ॥ ६४ ॥ जिनधर्म्मप्रभावेण, सा क्रमेण सुखिन्यभूत्। गृहे च वल्लभा जाता, दुर्भगा सुभगाऽभवत् ॥ ६५ ॥ इतश्च तत्पुरक्ष्मापपुत्रो मकरकेतनः। यक्षमाराधयामास, महान्तं सत्प्रियेच्छया ॥ ६६ ॥ तुष्टं यक्षं ययाचे स, भार्यां चातुर्यशालिनीम्। प्रधानगुणसंयुक्तां, राज्याभ्युदयकारिणीम् ॥ ६७ ॥ यक्षो जगाद हे भद्र !, शृणु त्वं कथयामि यत्। रत्नावतीपुरीस्वामी, नृपोऽस्त्यमरकेतनः ॥ ६८ ॥ तस्य रत्नावतीपत्न्यां, नन्दिनीसप्तकोपरि। प्रसूता चाष्टमी पुत्री, क्षिप्ता पेटान्तरेऽथ सा ॥ ६९ ॥ वाहिता यमुनानद्यां, सप्तयामैरिहागता। गृहीता सुलसेनाथ, तद्गृहे साऽस्ति पद्मिनी ॥ ३७० ॥ सैषा ते भाविनी भार्या, राज्याभ्युदयकारिणी। तव पुण्यप्रभावेण, मया दत्ता महाशय ! ॥ ७१ ॥ इति श्रुत्वा गतो गेहे, हर्षान्मकरकेतनः। आनाय्य परिणीता सा, विधिना पितुराज्ञया ॥ ७२ ॥ कुमारः सोऽथ कालेन, जातो राज्यधुरन्धरः। यमुना पट्टराज्ञी च, सञ्जाता पुण्ययोगतः ॥ ७३ ॥ पुरमध्ये श्रेष्ठिपदं,

सुलसाय ददौ नृपः । सुखेन गमयामासुः, कालं राजादयस्त्रयः ॥ ७४ ॥ पद्मिनीप्रमदाप्राप्त्या, पूर्वपुण्याच्च भूपतिः । प्रतापाक्रान्तभूखण्डः, स त्रिखण्डाधिपोऽभवत् ॥ ७५ ॥ साधिताः सकला भूपाः, कृता नमितकन्धराः । राज्ञा न्यायैकधर्म्मेण, प्रजानां च सुखं कृतम् ॥ ७६ ॥ अथान्यदा कियत्कालेऽमरकेतुनरेशितुः । गृहीतं वैरिणा सर्व्वं, राज्यं देशधनान्वितम् ॥ ७७ ॥ सकुटुम्बोऽथ नंष्ट्वा स, राजा तत्रागतः स्वयम् । यत्रास्ति यमुनाभर्त्ता, राजा मकरकेतनः ॥ ७८ ॥ राज्ञीवचनतो राज्ञा, सन्मान्य श्वशुरं निजम् । दत्त्वा वाहनदेशादि, स्थापितः स स्वसंनिधौ ॥ ७९ ॥ अथ ये रिपवः सर्वे, पुरीरत्नावतीस्थिताः । तत्र सैन्यं निजं प्रेष्य, तेऽपि निष्काशिताः क्षणात् ॥ ३८० ॥ भूपस्यामरकेतोश्च, सुरकेतुः सुतस्ततः । प्रेष्य रत्नावतीराज्ये, स्थापितः सैन्यसंयुतः ॥ ८१ ॥ अथ सर्वेऽपि ते जाता, जिनधर्म्मपरायणाः । दृष्ट्वा पुण्यप्रभावञ्च, धर्म्मिष्ठा यमुनाऽभवत् ॥ ८२ ॥ यमुनायां सुतो राज्ञो, बभूव मदनाभिधः । राज्ये संस्थाप्य तं राजा, वृद्धत्वे व्रतमग्रहीत् ॥ ८३ ॥ चिरं चारित्रमाराध्य, राजर्षिर्यमुनायुतः । प्राप कर्म्मक्षये मोक्षमनन्तसुखमव्ययम् ॥ ८४ ॥ यथा यमुनया धर्म्मफलं प्राप्तमिहैव हि । धर्म्मस्तथैव सर्वेषां, फलत्यत्र परत्र च ॥ ८५ ॥

इति श्रीयमुनाकथा धर्म्मविषये ॥

ततः—देशनान्ते नराधीशः, पप्रच्छ मुनिपुङ्गवम् । कथं सौभाग्यकलशः, पूर्व्वं निःस्वः सुखी ततः ? ॥ ८६ ॥ सूरिरूचे कुम्भपुरे, वाणिजो विक्रमोऽभवत् । धनाढ्यो धर्म्मवान्नित्यं कृत्यं धर्म्मस्य योऽकरोत् ॥ ८७ ॥ जिनपूजां करोति स्म, दानं दत्ते स्म भावतः । गृहकर्म्माणि सर्व्वाणि, यश्चक्रे कृपयाऽन्वितः ॥ ८८ ॥ अन्यदा व्रजतो मार्गे, तस्य कुष्ठी नरोऽमिलत् ।

तमालोक्य कृता तेन, दुगुञ्छा तस्य निन्दया ॥८९॥ एकदा स्वकुटुम्बं च, प्रलम्बं वीक्ष्य विक्रमः। मदं चित्ते चकारैवमहो मे विपुलं कुलम् ॥ ३९० ॥ यस्य कस्य कृतो गर्व्वस्तत्सर्वं हीनमाप्यते। तस्माद्विवेकिना त्याज्या, मदा अष्टावपि ध्रुवम् ॥ ९१ ॥ यतः—जातिलाभकुलैश्वर्यबलरूपतपःश्रुतैः। कुर्वन्मदं पुनस्तानि, हीनानि लभते जनः ॥ ९२ ॥ नालोचना कृता तेन, जुगुप्सामदकर्म्मणः। स मृत्वा सुन्दरसुतो, नाम्ना दुर्ग्गक इत्यभूत् ॥ ९३ ॥ गर्व्वतः कुलनाशोऽभूत्, दुःख्यभूत्कुष्ठिनिन्दया। कुलगर्व्वान्नीचकुलं, लभते हि मरीचिवत् ॥ ९४ ॥ प्राग्भवे यत्कृतं पुण्यं, भवे चास्मिन् विशेषतः। तेन पुण्येन राज्यार्धं, लेभे कन्यायुगं त्वसौ ॥ ९५ ॥ इति श्रुत्वा प्रबुद्धोऽथ, जामात्रा सह भूपतिः। ताभ्यां धर्म्मं विधायान्तेऽनशनं जगृहे मुदा ॥९६॥ तौ स्वर्ग्गेऽथ समुत्पन्नौ, ततश्च्युत्वा तु मानुषम्। भवं प्राप्य गृहीत्वा च, संयमं जग्मतुः शिवम् ॥९७॥

इति निन्दायां गर्व्वे च दुर्ग्गककथा.

श्रुत्वा दुर्ग्गकदृष्टान्तं, ज्ञात्वा धर्म्मफलं त्विह। उद्यमो धर्म्मकार्येषु, कर्त्तव्यो भावतो बुधैः ॥ ९८ ॥ काव्यम्—भक्तिर्भूरिगुणालये जिनपतौ रक्तिस्तदुक्तागमे, सक्तिः सद्गुरुपर्युपासनविधौ मैत्री परप्राणिषु। सद्दाने च मतिर्गुणार्जनरतिः शिष्टैः सदा सङ्गतिः, सर्वस्योपकृतिः कुकर्मविरतिः कार्या बुधैः सर्वदा[1] ॥ ९९ ॥ धर्म्मोपदेशनाप्रान्ते, राज्ञा पृष्टं प्रभो! वद। धर्मदत्तोद्यमात्स्वर्णपुरुषो मेऽभवत्कथम्? ॥ ४०० ॥ कोटयः षोडश द्रव्यमेतस्य नाधिकं कथम्?। कथ्यतामत्र यो हेतुः, सन्देहो विद्यते महान् ॥ १ ॥ इत्थं पृष्टो गुरुर्यावत्, किञ्चिद्वदति तावता। एका मर्कटिका वृक्षादुत्तीर्य परितो गुरुम् ॥ २ ॥

---

१ " तदा ते चन्द्रधवलधर्मदत्तादयो जनाः। प्रबुद्धा जगृहुः केऽपि सम्यक्त्वं च व्रतानि के ॥ " इत्यधिकं प्रत्यन्तरे.

भूयो भूयोऽपि बभ्राम, ननर्त्त च सुहर्षतः । तां दृष्ट्वा विस्मयाद्राज्ञा, पुनः पृष्टो मुनीश्वरः ॥ ३ ॥ युग्मम् ॥ पूर्वप्रश्नं प्रभो ! पश्चात्, कथनीयं वदाधुना । भवन्तं परितो हर्षात्कुतो नृत्यति मर्कटी ? ॥ ४ ॥ गुरुराह महासत्त्व ! विषमा भवितव्यता । न शक्यते कथयितुं, विषमां कर्म्मणां गतिम् ॥ ५ ॥ एषा मे वानरी भार्या, यस्याः कुक्षिभवा मम । एषा धनवती पुत्री, जामाता धर्म्मदत्तकः ॥ ६ ॥ एतद्धनवती श्रुत्वा, सम्यगालोक्य चक्षुषा । उपलक्ष्य निजं तातं, पपात गुरुपादयोः ॥ ७ ॥ सा रुदन्ती भृशं दुःखात्, पप्रच्छ च गुरुं कथम् । माता मे वानरी जाता ?, गुरुरूचे सुते ! शृणु ॥ ८ ॥ यदा तव विवाहाय, गच्छतां नौ महोदधौ । भग्नः पोतस्तदा लब्धं, मयैकं फलकं महत् ॥ ९ ॥ तरता तेन संप्राप्तं, तटश्च नवभिर्दिनैः । अग्रे प्राप्तं पुरं तत्र, मां दृष्ट्वैको द्विजोऽवदत् ॥ ४१० ॥ धनसार ! त्वमागच्छागच्छ प्रोक्त्वे(च्ये)ति सादरम् । सविस्मयं गृहीत्वा मां, ययौ विप्रो निजे गृहे ॥ ११ ॥ कारयित्वा सुवेषं मे, भक्तिं चक्रे नवां नवाम् । तदा विप्रो मया पृष्टः, कोऽर्थो हि मम पालने ? ॥ १२ ॥ कथं जानासि मे नाम ?, मया त्वं नोपलक्ष्यसे । इत्युक्ते ब्राह्मणोऽवादीदिदं शङ्खपुरं पुरम् ॥ १३ ॥ विप्रोऽहं जिनधर्म्मज्ञो, जिनशर्म्मेति नामतः । अपुत्रत्वे मया ध्याता, कुलदेवी जगौ स्फुटम् ॥ १४ ॥ महन्निकाचितं कर्म्म, पूर्वोपार्जितमस्ति ते । सुरासुरनरैः सर्व्वैर्यन्न हर्तुं हि शक्यते ॥ १५ ॥ ईप्सितं मनसः सर्व्वं, कस्य संपद्यते सुखम् ? । कर्म्मायत्तं जगत्सर्व्वं, तस्मात्सन्तोषमाश्रय ॥ १६ ॥ यतः—यद्वज्रमयदेहास्ते, शलाकापुरुषा अपि । न मुच्यन्ते विना भोगं, स्वनिकाचितकर्म्मणः ॥ १७ ॥ मयोक्तं देवि ! मच्चित्ते, सन्तोषः कर्म्मनिश्चयात् । अस्त्येव नास्ति च भ्रान्तिः, शृणु वाक्यमिदं पुनः ॥ १८ ॥ मत्तः पश्चात्तवार्चां कः, करिष्यति सुतं विना ? । पुनर्मेऽस्ति वरा विद्या, सा विच्छेदं हि यास्यति ॥१९॥

स एव मे विषादोऽस्ति, तेनैवं याच्यते सुतः । देव्यूचे शृणु सत्येन, नास्ति पुत्रस्तवाङ्गजः ॥ ४२० ॥ पालकस्ते सुतो भावी, धनसाराभिधो वणिक् । एषोऽद्यदिवसाद् षड्भिर्मासैरत्र समेष्यति ॥ २१ ॥ स श्रेष्ठी कमलपुरवास्तव्यो भग्नपोतकः । तीरं नवदिनैः प्राप्त, आनेतव्यस्त्वया गृहे ॥ २२ ॥ स ग्रहीष्यति ते विद्यां, त्वत्पुत्रीं परिणेष्यति । इत्युक्त्वा सा गता देवी, ततस्त्वं मिलितो मम ॥ २३ ॥ तेनाहं तव वात्सल्यं, कुर्व्वे त्वं मम पुत्रवत् । ततो मह्यं ददौ विप्रः, सर्व्वविद्यां च नन्दिनीम् ॥ २४ ॥ कियत्यपि गते काले, गतः स्वर्ग्गं स वाडवः । द्विजपुत्र्या युतस्तत्र, स्थितोऽहं मोदयोगतः ॥ २५ ॥ भुञ्जानस्याथ भोगान्मे, सुतोऽभूद्धनदाभिधः । सोऽप्यष्टवार्षिको जातः, सर्वविद्यां पपाठ च ॥ २६ ॥ गृहभारं समारोप्य, नन्दनेऽथ मया व्रतम् । सिंहदत्तगुरोः पार्श्वे, गृहीतं भार्यया सह ॥ २७ ॥ प्राप्तसूरिपदो ज्ञानी, सोऽहमत्र समागतः । हे पुत्रि ! तव माता सा, भग्नपोता जलेऽपतत् ॥ २८ ॥ तदाऽऽर्त्तध्यानतो मृत्वा, मीनी भूत्वा पुनर्मृता । मर्कट्येषाऽभवत् दृष्ट्वा, मां जातिस्मृतिमाप च ॥ २९ ॥ पूर्वस्नेहादिहागत्य, विष्वग् भ्रमति नृत्यति । श्रुत्वैवं मर्कटीं स्पृष्ट्वा, रुरोद धनवत्यथ ॥४३०॥ हा मातः ! किमिदं जातं, क्व त्वं नारी क्व मर्कटी ?। तदोक्तं गुरुणा वत्से !, विषमो भववारिधिः ॥ ३१ ॥ आर्त्तरौद्रेतिदुर्ध्यानात्, तिर्यग्नारकयोनिषु । जायन्ते प्राणिनः सर्व्वे, स्वस्वकर्म्मप्रभावतः ॥ ३२ ॥ काव्यम्—महारम्भासक्ताः सततममितैः पातकपदैः, परिस्पन्दैर्युक्ता विहितबहुपञ्चेन्द्रियवधाः । महालोभा रौद्राध्यवसितसमेतोग्रमनसो, विशीला मांसाशा दधति नरकायुस्तनुभृतः ॥ ३३ ॥ उन्मार्गदेशनपराः कृतमार्गनाशा, मायाविनो विहितजातिबलादिमानाः । अन्तः सशल्यशठशीलपराश्च जीवास्तिर्यग्गतेर्जननमायुरुपार्जयन्ति ॥ ३४ ॥ ये तु प्रकृत्याऽणुकषाययुक्ता, दानप्रियाः संयमशीलशून्याः । गुणैर्युता

मध्यममार्गभाजो, बध्नन्ति जीवा मनुजायुरेते ॥ ३५ ॥ अणुव्रतमहाव्रतैर्व्यपगतातिचारैर्युताः, सबालतपसोऽथवा दधुरकामतो निर्जराम् । श्रके च जिनवन्दनार्जनपराश्च सम्यग्दृशः, श्रयन्ति त इहाङ्गिनः सुरवरायुरेवं गुणाः ॥ ३६ ॥ अर्हत्सिद्धश्रुताचार्यसङ्घादीनां सुभक्तितः । शुक्लध्यानाच्च गच्छन्ति, मानवाः पञ्चमीं गतिम् ॥ ३७ ॥ काव्यम्—भ्रमतु वसुधां पातालं वा विशत्वविशङ्कितः, श्रयतु शिखरं शैलस्यापि प्रयातु दिशो दिशम् । विहरतु पुमान् द्वीपाद्द्वीपं विलङ्घ्य पयोनिधिं, न फलति पुनः पापारम्भे कदापि समीहितम् ॥ ३८ ॥ ज्ञात्वैवं लघुकर्माणो, रौद्रार्त्तध्यानवर्जनात् । धर्म्मे चित्तं स्थिरं कुर्युर्वाञ्छितार्थस्य सिद्धये ॥ ३९ ॥ अथोचे नृपतिः पूज्य ! त्वं प्रसादं विधाय मे । षोडशद्रव्यकोद्यादेर्देहि प्रश्नस्य चोत्तरम् ॥ ४० ॥ गुरुरूचे कलिङ्गाख्ये, देशे कनकपत्तने । लक्ष्मीवान् ललिताङ्गोऽभूत्, तस्य लक्ष्मीवती प्रिया ॥ ४१ ॥ दक्षा तुष्टा प्रियालापा, पतिचित्तानुवर्त्तिनी । कालौचित्याद्व्ययकरी, या सा लक्ष्मीरिवापरा ॥ ४२ ॥ चातुर्यमार्जवं शीलं, रूपलावण्यसंपदः । सुवाक्यमल्पभाषित्वं, यासां तास्तीर्थभूमयः ॥ ४३ ॥ सम्यक् सर्वज्ञधर्मं स, चकार प्रियया सह । पौषधं देवपूजां च, संविभागं मुनेर्व्यधात् ॥ ४४ ॥ संविभागं कदा चक्रे, पञ्चातिचारसंयुतम् । कदाचित् प्रासुकं वस्तु, सचित्ते क्षिपति स्म सः ॥ ४५ ॥ पिधत्ते वा सचित्तेन, साधुदानरुचिं विना । कालातिक्रमणं कृत्वा, साधूनाह्वयति स्म सः ॥ ४६ ॥ ऊचे वस्तु परस्यैतत्, कल्पते यदि गृह्यताम् । कदाचिन्मत्सरं चक्रे, पञ्चातिचारका अमी ॥ ४७ ॥ कुर्व्वतः सर्व्वदा धर्म्मं, तस्य कालो ययौ कियान् । एकदा कोऽपि सार्थेशोऽन्यदेशे गन्तुमुद्यतः ॥ ४८ ॥ ललिताङ्गं सुहृत् कोऽपि, प्रोचे सार्थे त्वमेहि भोः ! । सर्व्वसामग्रीं शकटमुपभादेश्च मेलय ॥ ४९ ॥ स यावत्प्रगुणीभूतः, स तावत्सार्थपोऽचलत् । वस्तुनः शकटान् भृत्वा, पृष्ठे-

ऽसौ चलितो द्रुतम् ॥ ४५० ॥ सुप्रदेशे स्थितो रात्रौ, निशायां श्रावकाग्रणीः । निस्सश्चलं समुत्थाय, प्रतिक्रमणमातनोत् ॥ ५१ ॥ नमस्कारं स्मरन्नास्ति, तावत्सर्व्वेऽपि सार्थिकाः । चल्यतां चल्यतामेवं, ब्रुवाणा उत्थिता द्रुतम् ॥ ५२ ॥ शकटान् योजयन्तस्ते, ललिताङ्गेन वारिताः । स्वस्थाः स्थ भो घना रात्रिरस्ति सामायिकं मम ॥ ५३ ॥ ऊचुस्ते स्थितिवेला न, प्रयाणं दूरतो भवेत् । क्षुत्तृषाभ्यां बलीवर्द्दा, म्रियन्तेऽप्यातपेन च ॥ ५४ ॥ शकटान् स्थापयिष्यामोऽग्रतो गत्वा वयं पुनः । इत्युक्त्वा ते गताः सर्व्वे, स्थापिता न स्थिताः क्षणम् ॥ ५५ ॥ श्रेष्ठिना चिन्तितं ह्येतैः, सार्थिकैः किं प्रयोजनम् ? । भव्यं जातं गता एते, पूर्णं सामायिकं मम ॥ ५६ ॥ कृते देशान्तरे चास्मिन्नलं शकटयात्रया । चिन्तयित्वेति स श्रेष्ठी, पारयामास तद्व्रतम् ॥ ५७ ॥ यावद्गन्तुं प्रवृत्तोऽग्रे, तावद्बुम्बारवोऽभवत् । श्रेष्ठिनाऽचिन्ति मे पुण्यं, यन्न रात्रौ तदा गतः ॥ ५८ ॥ यावत्कियच्चचालाग्रे, तावत्सर्व्वेऽपि सार्थिकाः । नग्नीभूताः क्षणात्तेन, दृष्टाः पश्चात्समागताः ॥ ५९ ॥ तं प्रोचुः तेऽपि धन्यस्त्वं, पुण्यं जागरितं तव । अस्माकं मिलिता धाटी, ईदृशीकृत्य मोचिताः ॥ ४६० ॥ तेभ्योऽथ ललिताङ्गेन, दत्तं वस्त्रादिकं बहु । स रक्षां तेषु कुर्वत्सु, क्षेमेण स्वगृहे गतः ॥ ६१ ॥ तत्रैव वस्तुभिस्तस्य, विक्रीतैस्तैर्महार्घतः । घनो लाभोऽभवत्तेन, नियमं सोऽग्रहीदिति ॥ ६२ ॥ अस्मिन् भवे मया नैव, कार्यं शकटवाहनम् । गृहे स्थितस्य यो लाभो, व्यवसायान्ममास्तु सः ॥ ६३ ॥ तद्दिनात्कमला तस्य, घनैवाभूत् शनैः शनैः । कियत्यपि गते काले, लक्ष्मीचन्द्रः सुतोऽजनि ॥ ६४ ॥ स क्रमाद् यौवनं प्राप, तस्य पाणिग्रहोत्सवे । आगताः साधवः केऽपि, विहर्तुं श्रेष्ठिनो गृहे ॥ ६५ ॥ तस्मिन्नवसरे श्रेष्ठी, कुर्व्वन्नस्ति जिनार्चनम् । पृष्टं तेन गृहे कोऽस्ति ?, लक्ष्मीचन्द्रोऽब्रवीत्ततः ॥ ६६ ॥ अहमस्मि गृहे तात !, कार्यमादिश्यतां

मम । सोऽवादीद्वत्स ! पृच्छ त्वं, कियन्तः सन्ति साधवः ॥ ६७ ॥ तत्पृष्टे मुनिभिः प्रोक्तं, मुनिपञ्चशतैर्वृताः । श्रीधर्मघोषसूरीन्द्राः, सन्त्यद्येह समागताः ॥ ६८ ॥ तेषां शिष्या वयं केचिद्गोचर्यायां प्रवर्तिताः । श्रुत्वेति श्रेष्ठ्यऽवग् भाग्यादुत्सवे गुरुरागतः ॥ ६९ ॥ यतः—पइसन्तगिलाणेसुं, पारणए तह य लोयकरणे य । उत्तरपारणगंमि य, दाणञ्च बहुफलं होई ॥ ४७० ॥ श्रेष्ठी पुनरुवाचैवं, लक्ष्मीचन्द्रसुतं प्रति । मुनिभ्यो देहि मद्वाचा, वत्स ! षोडश मोदकान् ॥ ७१ ॥ सुतेनाचिन्ति दक्षेण, साधवः सन्त्यनेकशः । संख्यामात्रेण दत्तेन, किं फलं चाग्रतो भवेत् ? ॥ ७२ ॥ मद्विवाहे कृताः सन्ति, मोदका मानवर्जिताः । अत एवैष मे लाभो, मुनिभ्यो दीयते बहु ॥ ७३ ॥ अत्यन्तहर्षतस्तेन, भृत्वा स्थालमसङ्ख्यशः । साधुभ्यो मोदका दत्ता, यावत्सृतेतिभाषणम् ॥ ७४ ॥ गतेषु साधुषु श्रेष्ठी, सुतं पप्रच्छ मोदकाः । षोडशापि त्वया दत्ता ?, दत्ताः पुत्रेण भाषितम् ॥ ७५ ॥ तावन्मात्रं तदा पुण्यं, श्रेष्ठिना समुपार्जितम् । पुत्रेणागणिताद्दानात्संपूर्णं पुण्यमर्जितम् ॥ ७६ ॥ सुतस्यापि विवाहेऽथ, कृते जाताः सुता घनाः । शुद्धः श्रावकधर्मोऽयं, चिरं द्वाभ्यां प्रपालितः ॥ ७७ ॥ अथ तौ पितृपुत्रौ द्वौ, प्रपाल्यायुर्निजं निजम् । शुभध्यानेन सौधर्मे, स्वर्गे जातौ सुरोत्तमौ ॥ ७८ ॥ यतः—सत्यञ्च धर्मश्च पराक्रमश्च, भूतानुकम्पा प्रियभाषणञ्च । गुरुस्वदेवातिथिपूजनञ्च, पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ७९ ॥ सत्येन तपसा क्षान्त्या, दानेनाध्ययनेन च । सर्वस्याश्रयभूताश्च, ते नराः स्वर्गगामिनः ॥ ४८० ॥ मनसश्चेन्द्रियाणां च, ये नित्यं संयमे रताः । त्यक्तशोकभयक्रोधास्ते नराः स्वर्गगामिनः ॥ ८१ ॥ आढ्याश्च रूपवन्तश्च, यौवनस्था विचक्षणाः । ये वै यतेन्द्रिया धीरा–स्ते नराः स्वर्गगामिनः ॥ ८२ ॥ आक्रोशन्तं स्तुवन्तं वा, तुल्यं पश्यन्ति ये नराः । शान्ता दान्ता जितात्मान–स्ते नराः स्वर्ग-

गामिनः ॥ ८३ ॥ कर्म्मणा मनसा वाचा, न पीडयति यः परान् । सर्व्वथा शुभभावो यः, स याति त्रिदिवं नरः ॥ ८४ ॥ भवनेशा व्यन्तराश्च, ज्योतिष्काश्च विमानजाः । देवाश्चतुर्विधा एते, कथिता जिनशासने ॥ ८५ ॥ वैमानिका द्विधा प्रोक्ता, ज्योतिष्काः सन्ति पञ्चधा । अष्टधा व्यन्तराः सर्व्वे, दशधा भवनाधिपाः ॥ ८६ ॥ सौधर्मेशाननामानौ, सनत्कुमार एव च । माहेन्द्रब्रह्मलोकौ च, लान्तकः शुक्र एव च ॥ ८७ ॥ सहस्रारानतौ चैव, प्राणतश्चारणाच्युतौ । स्वर्गाः प्रोक्ता द्वादशैते, नव ग्रैवेयका अमी ॥ ८८ ॥ सुदर्शनं[1] सुप्रबन्धं[2], मनोरमं[3] सर्व्वभद्रं[4]सुविशाले[5] । सुमनस्यं[6] सौमनसं[7] प्रीतिकर्[8]मादिमतं[9] नवमम् ॥ ८९ ॥ विजयं[1] वैजयन्तं[2] च, जयन्तं[3] चापराजितम्[4] । सर्वार्थसिद्धिरेतानि[5] पञ्चैवानुत्तराणि च ॥ ४९० ॥ मुक्तिक्षेत्रं ततश्चोर्ध्व-मनन्तसुखभाजनम् । निश्चलं च निराबाधं, जरामरणवर्जितम् ॥९१॥ निशादिनविभागोऽपि, न तत्र त्रिदशालये । रत्नालोकः स्फुरत्युच्चैः, सततं नेत्रसौख्यदः ॥ ९२ ॥ वर्षातपतुषारादि-समयैः परिवर्जितः । सुखदः सर्व्वदा सौम्य-स्तत्र कालः प्रवर्तते ॥ ९३ ॥ उत्पातभयसन्ताप-चौरादिभङ्गविड्वराः । न हि स्वप्नेऽपि दृश्यन्ते, क्षुद्रसत्त्वाश्च दुर्जनाः ॥ ९४ ॥ चन्द्रकान्तशिलाबद्धाः, प्रवालदलदन्तुराः । वज्रेन्द्रनीलनिर्माणा, विचित्रास्तत्र भूमयः ॥ ९५ ॥ माणिक्यरोचिषां चक्रैः, कर्बुरीकृतदिग्मुखाः । वाप्यः स्वर्णाम्बुजच्छन्ना, रत्नसोपानराजिताः ॥ ९६ ॥ ध्वजचामरछत्राङ्कैर्विमानैर्वनितासखाः । सञ्चरन्ति सुरैः सारं, सेव्यमानाः सुरेश्वराः ॥ ९७ ॥ क्रीडागिरिनिकुञ्जेषु, पुष्पशय्यागृहेषु च । रमन्ते त्रिदशास्तत्र, वरस्त्रीवृन्दवेष्टिताः ॥ ९८ ॥ गीतवादित्रविद्यासु, शृङ्गाररसभूमिषु । अनङ्गप्रतिमा धीराः, सर्व्वलक्षणलक्षिताः ॥ ९९ ॥ हारकुण्डलकेयूरकिरीटाङ्गदभूषिताः । मन्दारमालतीगन्धा, अणिमादिगुणान्विताः ॥ ५०० ॥ न तत्र दुःखितो दीनो,

वृद्धो रोगी गुणच्युतः । विकलाङ्गो गतश्रीकः, स्वर्गलोके सुरोत्तमः ॥ १ ॥ दिव्याकृतिसुसंस्थानाः, सप्तधातुविवर्जिताः । कायाः कान्तिपयःपूरैः, प्रसाधितदिगन्तराः । २ ॥ मृगाङ्कमूर्तिसङ्काशाः, शान्तदोषाः शुभाशयाः । अचिन्त्यमहिमोपेता, भवक्लेशार्त्तिवर्जिताः ॥ ३ ॥ वर्धमानमहोत्साहा, वज्रकाया महाबलाः । नित्योत्सवा विराजन्ते, प्रसन्नापांशुविग्रहाः ॥ ४ ॥ सुखामृतमहाम्भोधेर्मध्यादिव विनिर्गताः । भवन्ति त्रिदशाः सद्यः, क्षणेन नवयौवनाः ॥ ५ ॥ गीतवादित्र-निर्घोषैर्जयमङ्गलपाठकैः । विबोध्यन्ते शुभैः शब्दैः, सुखसुप्ता इव स्वयम् ॥ ६ ॥ देवाङ्गनाद्या एवं वदन्ति ॥ अद्य नाथ ! वयं धन्याः, सफलं चाद्य जीवितम् । अस्माकं यत्त्वया स्वर्गः, संभवेन पवित्रितः ॥ ७ ॥ प्रसीद जय जीव त्वं, देव ! पुण्यस्तवोद्भवः । भव प्रभुः समग्रस्य, स्वर्गलोकस्य सम्प्रति ॥ ८ ॥ नवीनदेवो वक्ति ॥ अहो तपः पुराचीर्णं, मयाऽन्यजन-दुश्चरम् । वितीर्णं चाभयं दानं, प्राणिनां जीवितार्थिनाम् ॥ ९ ॥ निर्दग्धं विषयारण्यं, मारवैरी निपातितः । कषायतर-वश्छिन्ना, रागशत्रुर्नियन्त्रितः ॥ ५१० ॥ रागादिदहनज्वाला, न प्रशाम्यन्ति देहिनाम् । सद्वृत्तवारिसिक्तास्ताः, शमयां-चक्रिरे मया ॥ ११ ॥ क्वचिद्गीतैः क्वचिन्नृत्यैः, कचिद्वाक्यैर्मनोहरैः । क्वचिद्विलासिनीव्रातक्रीडाशृङ्गारदर्शनैः ॥ १२ ॥ दशाङ्गभोगजैः सौख्यैर्लोभ्यमानाः क्वचित् क्वचित् । वसन्ति स्वर्गिणः स्वर्गे, कल्पनातीतवैभवाः ॥ १३ ॥ इच्छासंपन्न-सर्वार्थमनोहारिसुखामृतम् । निर्विघ्नमुपभुञ्जाना, गतं जन्म न जानते ॥ १४ ॥ इत्थं सुरसुखं भुक्त्वा, च्युत्वा चात्र पुरे वरे । पितृजीवो धर्मदत्तो, जातः श्रीपतिश्रेष्ठिसूः ॥ १५ ॥ पुरा साधुसंविभागेऽतिचारा अन्तरे कृताः । तेनायमन्तरे दुःखी, जातो दानस्य दूषणात् ॥ १६ ॥ साधुभ्यो दापिता भावात्, षोडशैव च मोदकाः । षोडशस्वर्णकोटीश, एवाभूदिति पुण्यतः ॥ १७ ॥

पुत्रजीवसुरश्च्युत्वा, राजँस्त्वं पुण्यभागभूः । असङ्ख्यमुनिदानेनाद्वयस्वर्णनरोऽभवत् ॥१८॥ इति श्रुत्वा धराधीशश्चिन्तयामास
चेतसि । धर्म्म एव सदा येषां, लक्ष्मीर्वसति तद्गृहे ॥ १६ ॥ परं मोक्षं विना सौख्यं, शाश्वतं न भवेत् क्वचित् । चारित्रञ्च
विना मोक्षः, प्राप्यते नैव जन्तुभिः ॥ ५२० ॥ दारिद्र्यं देहिनां तावन्न यावत् कल्पपादपः । भविनां भवभीस्तावत्, यावन्नै-
वाप्यते व्रतम् ॥ २१ ॥ भवाब्धितरणे पोतं, सेतुं संसारसागरे । सिद्धिसौधाधिरोहस्य, सोपानमिव सद्व्रतम् ॥ २२ ॥
गुरुं प्रोचे ग्रहीष्येऽहं, धर्म्मदत्तयुतो व्रतम् । भगवन्यावदायामि, राज्यचिन्तां विधाय च ॥ २३ ॥ त्वयाऽत्र स्थीयतां
तावत्कृपां कृत्वा ममोपरि । गुरुराह महीनाथ ! पुनर्मा भूः प्रमादवान् ॥ २४ ॥ युग्मम् ॥ धर्म्मदत्तयुतो राजा, गृहे गत्वा
च मन्त्रिणः । आहूयोवाच राज्यं मे, कस्य देयं तदुच्यताम् ॥ २५ ॥ ऊचुस्ते कथ्यते किं ते, दुर्दैवे वक्रतां गते । रत्नदोषी
विधिर्येन, न दत्तस्तव नन्दनः ॥ २६ ॥ यतः—शशिनि खलु कलङ्कः कण्टकाः पद्मनाले, जलधिजलमपेयं पण्डिते
निर्धनत्वम् । दयितजनवियोगो दुर्भगत्वं सुरूपे, धनवति कृपणत्वं रत्नदोषी कृतान्तः ॥ २७ ॥ त्वया प्रवर्तयाञ्चक्रे, स्वामि-
न्संवत्सरं निजम् । तथापि नन्दनो नाभूदहो कर्म्मबलं महत् ॥ २८ ॥ यस्य कस्यापि निन्द्यस्य, राज्यं दातुं न युज्यते ।
त्वमेव सुचिरं तेन, कुरु राज्यं नराधिप ! ॥ २९ ॥ इत्युक्त्वा मन्त्रिणो जग्मुः, सायं राजा स्वचेतसि । स्मृत्वा शासनदेवीं
स, शुचिः सुप्तः समाहितः ॥ ५३० ॥ रात्रेश्चतुर्थयामेऽथ, स्वप्नमेवं ददर्श सः । कापि स्त्री वररूपाढ्या, दिव्याभरणभूषिता
॥ ३१ ॥ इदं नृपं प्रति प्राह, कथं चिन्तातुरोऽसि भोः ! । तव राज्यं मया वीरधवलाय ददे स्वयम् ॥ ३२ ॥ क्षिप्यते
वरमालैषा, कण्ठे ते संयमश्रियः । इत्युक्त्वा सा गता राजा, प्रबुद्धोऽचिन्तयत् हृदि ॥ ३३ ॥ को वीरधवलः प्रोक्तः ?

कास्त्यसौ कस्य नन्दनः ? । श्रीगुरुः पृच्छ्यते ह्येतत्, तं विना कोऽपि वेत्ति न ॥ ३४ ॥ भूपः पप्रच्छ भगवन्! को वीरधवलो बली ? । मद्राज्यभारधौरेयो, देव्या प्रोक्तो भविष्यति ॥ ३५ ॥ गुरुः प्राह प्रजाधीश!, संयमायोद्यतो भव । त्वद्व्रतावसरे तस्यागमोऽकस्माद्भविष्यति ॥ ३६ ॥ आगत्य रविवत्पूर्व्व-दिशः सोऽत्र करिष्यति । तव दीक्षोत्सवं राजन्!, श्रुत्वेत्यागान्नृपो गृहम् ॥ ३७ ॥ सप्तक्षेत्रेषु सद्द्रव्यं, वपति स्म स्वकोशतः । दीनानाथदरिद्रेषु, ददौ चादापयद्धनम् ॥ ३८ ॥ दानशौण्डा न तन्वन्ति, पात्रापात्रविचारणम् । कमलं कुलहंसेऽपि, मधुपेऽप्यागते समम् ॥ ३९ ॥ काव्यम्—अत्यन्तं यदि वल्लभं धनमिदं त्यक्तुं त्वया नेश्यते । सौहार्दाद्यदहं ब्रवीमि वचनं तद्भद्र! शीघ्रं कुरु । भक्त्या सत्कृतिपूर्वकं गुणवते पात्राय यच्छ स्वयं, येनानेन सुरक्षितं बहुविधं जन्मान्तरे प्राप्यते ॥ ५४० ॥ प्रासादप्रतिमार्थेषु, सत्रागारेष्वमारिषु । ददौ राजा धनं स्वीयं, यथाऽऽषाढे घनो जलम् ॥ ४१ ॥ धर्म्मदत्तो धर्म्मसिंहे, पुत्रे धनवतीभवे । गृहभारं समारोप्य, भूपसार्थे व्रतार्थ्यभूत् ॥ ४२ ॥ महता समुदायेन, शुभेऽह्नि समहोत्सवम् । गुरुपार्श्वे ययौ राजा, धर्म्मदत्तोऽपि सप्रियः ॥ ४३ ॥ भूपालश्चारुचारित्रं, ययाचे गुरुसन्निधौ । ऊचुर्मिथस्तदा लोकाः, को हि राज्यस्य रक्षकः ? ॥ ४४ ॥ राज्यार्हः कोऽपि नायात, इति यावद्वदन्ति ते । दिव्यतूर्यरवस्तावदभवत्पूर्व्वदिग्मुखे ॥ ४५ ॥ विस्मिता मानवाः पूर्व-दिशं पश्यन्ति सर्व्वतः । तावत् श्वेतगजारूढः, प्रौढच्छत्राभिशोभितः ॥ ४६ ॥ चामरैर्वीज्यमानश्च, पार्श्वयोरुभयोरपि । देवदुन्दुभिवादित्रगीतनृत्योत्सवान्वितः ॥ ४७ ॥ दिव्यरूपधरः कोऽपि, मानवः सुरसेवितः । अकस्मादागतस्तत्रोत्ततार च गजाद्रजात् ॥ ४८ ॥ त्रिभिर्विशेषकम् ॥ तिस्रः प्रदक्षिणा दत्त्वा, नत्वा गुरुमुपाविशत् । धराधवं गुरुः प्राहायं वीरधवलस्तव ॥ ४९ ॥ कोऽयं कीदृग् ? नृपेणोक्तं,

गुरुराह निशम्यताम् । सिन्धौ वीरपुरं रम्यं, तत्र सिंहशिखो नृपः ॥५५०॥ प्रिया प्रेमवती तस्य, सत्प्रेमरसपद्मिनी । वीराख्यो
वीरधवलो, नामतोऽभूत्सुतस्तयोः ॥ ५१ ॥ मृगयाव्यसनासक्तो, गर्भिणीं सोऽन्यदा वने । मृगीं बाणेन विव्याध, तद्गर्भ-
श्चापतद् बहिः ॥ ५२ ॥ स्फुरन्तं वीक्ष्य भ्रूणं तं, सदयोऽसौ व्यचिन्तयत् । धिग्मां येन कृतं निन्द्यं, कर्म्मैतद्बालहत्यया
॥ ५३ ॥ यतः—रसातलं यातु यदत्र पौरुषं, कुनीतिरेषा शरणो ह्यदोषवान् । निहन्यते यद्बलिनापि दुर्बलो, हहा महा-
कष्टमराजकं जगत् ॥ ५४ ॥ स्वं निन्दन् जीवघातस्य, नियमं ( व्रतं ) जग्राह सर्व्वदा । पापर्धेश्च निवृत्तोऽसौ, दयालुर्गृह-
मागतः ॥ ५५ ॥ अन्यदा नागरनरैर्विज्ञप्तो नरनायकः । नगरं मुषितं चौरैः, स्वामिन्नित्यवधारय ॥ ५६ ॥ आरक्षकस्य
राज्ञोक्तं, पुररक्षां करोषि न ? । तेनोक्तं क्रियते देव ! दुर्ग्राह्यस्तस्करः परम् ॥ ५७ ॥ पौराणां कथितं राज्ञाऽद्याहं बध्नामि
तस्करम् । हर्षिता वालिताः पौराः, सायं मुक्ताश्चतुष्किकाः ॥ ५८ ॥ राज्ञादिष्टः कुमारोऽथ भटयुक्तः पुरेऽभ्रमत् । भटा-
स्त्रिकचतुष्केषु, चरवृत्त्या चरन्ति के ॥ ५९ ॥ ततो दैववशात्कोऽपि, सुभटैस्तस्करो धृतः । आनीतश्च कुमाराग्रे, बद्धः
सुदृढबन्धनैः ॥ ५६० ॥ चौर्यपापद्रुमस्येह, वधबन्धादिकं फलम् । जायते परलोके तु, फलं नरकवेदना ॥ ६१ ॥ कुमारोऽ-
चिन्तयच्चौरं, राजा प्रातर्हनिष्यति । पञ्चेन्द्रियवधात्पापं, निश्चितं मे भविष्यति ॥ ६२ ॥ विचिन्त्यैवं कुमारेण, चौरं प्रतीति
भाषितम् । अरे त्वामद्य मुञ्चामि, मा कार्षीश्चौरिकां पुनः ॥ ६३ ॥ ओमित्युक्ते विमुक्तोऽसौ, तत्क्षणादगमत् क्वचित् । चौरो
मुक्तो नृपाग्रे न, वक्तव्यो वारिता भटाः ॥ ६४ ॥ प्रभाते भूभुजा पृष्टं, न प्राप्तः किं मलिम्लुचः ? । भटैरुक्तं न लब्धोऽद्य,
विलक्षोऽभूत्तदा नृपः ॥ ६५ ॥ तद्दिने भूभुजा रात्रौ, छन्नं विचरता पुरे । चौरो मुक्तः सुतेनेति, स्वरूपं ज्ञातमात्मना

॥ ६६ ॥ कुपितेन सुतस्तेन देशान्निष्कासितो द्रुतम् । स वीरधवलो भ्राम्यन्, गतो भद्दलके पुरे ॥ ६७ ॥ क्षुधाक्षामः स भिक्षार्थं, प्रविष्टो रङ्कवत्पुरे । किं न कुर्य्यान्नरो वामे, विधौ जाते ह्यपुण्यतः ॥ ६८ ॥ काव्यम्—यस्य पादयुगपर्युपासना, नो (न्नो) कदापि रमया विरम्यते । सोऽपि यत्परिदधाति कम्बलं, तद्विधेरधिकता(तो)ऽधिकं बलम् ॥ ६९ ॥ भिक्षायै भ्रमता तेन, कस्मिन्पर्व्वणि तद्दिने । संप्राप्ताः सक्तवः पश्चात्तान्नीत्वाऽगात्सरोवरे ॥ ५७० ॥ सक्तून् गुडाम्बुना कृत्वा, मिश्रितान् स व्यचिन्तयत् । यद्येति साम्प्रतं पात्रं, तस्मै सक्तून् ददाम्यहम् ॥ ७१ ॥ तावत्तद्भाग्ययोगेन, कोऽपि मासोपवासकृत् साधुरागाच्चरन्मार्गे, तं दृष्ट्वा सोऽब्रवीन्मुदा ॥ ७२ ॥ अद्य पूर्वसुकृतं फलितं मे, लब्धमद्य वहनं भववार्धौ । अद्य चिन्तितमणिः करमागाद्वीक्षितो यदि भवान्मुनिराजः ॥ ७३ ॥ इत्युक्त्वा सक्तुपिण्डं तमुत्पाट्य प्रासुकं ददौ । गृहीत्वा तं ययौ साधुः, शेषपिण्डमभुक्त सः ॥ ७४ ॥ धन्योऽहं यन्मया दत्तं, यावदेवमचिन्तयत् । तावच्छासनदेव्यागात्, स्वप्नस्ते दर्शितो यया ॥ ७५ ॥ सा वीरधवलं प्रोचे, धन्योऽसि त्वं च भाग्यवान् । दत्तं तुभ्यं मया राज्यं, श्रीचन्द्रधवलस्य हि ॥ ७६ ॥ ततो देवतयाऽत्रैष, आनीतः सुरसेवितः । श्रीवीरधवलः सोऽयं, तस्मै राज्यं ददौ नृपः ॥ ७७ ॥ जग्राहाथ व्रतं राजा, धर्म्मदत्तश्च सप्रियः । श्रीवीरधवलो राजा, चक्रे तेषां व्रतोत्सवम् ॥ ७८ ॥ तेषां गृहीतदीक्षाणां, व्रतशिक्षां ददौ गुरुः । धर्म्मशिक्षां च भूपस्य, प्राप्तराज्यस्य पुण्यतः ॥ ७९ ॥ धर्म्मो यस्य पिता क्षमा च जननी भ्राता मनःसंयमः, सूनुः सत्यमिदं दया च भगिनी नीरागता गेहिनी । शय्या भूमितलं दिशोऽपि सदनं (वसनं) ज्ञानामृतं भोजनं, यस्यैतानि सखे ! कुटुम्बमनघं तस्येह कष्टं कथम् ? ॥ ५८० ॥ यतः—धर्म्मादवाप्यते राज्यं, धर्म्मात्सुखफलोदयः । धर्म्मादवाप्यते

सिद्धिस्तस्माद्धर्म्मं समाचर ॥ ८१ ॥ मर्कट्यपि गुरून् दृष्ट्वा, दृष्ट्वा धनवतीव्रतम् । जातिस्मरणयोगेन, प्रबुद्धा गुरुवाक्यतः
॥ ८२ ॥ दयाधर्म्मं समाराध्य, सौधर्म्मे साऽभवत्सुरी । तेषामेव गुरूणाञ्च, जाता सांनिध्यकारिणी ॥ ८३ ॥ नवीनाशिष्य-
संयुक्तो, विजहार क्षितौ गुरुः । श्रीचन्द्रधवलः साधुः, जातः सिद्धान्तपारगः ॥ ८४ ॥ प्राप सूरिपदं सोऽथ, क्रमाज्जज्ञे च
केवली । धर्मदत्तयुतो विश्वे, स भव्यान् प्रत्यबोधयत् ॥ ८५ ॥ श्रीवीरधवलो राजा, प्रविवेशोत्सवात् पुरम् । अभिषेकः
शुभे लग्ने, चक्रेऽस्य सचिवादिभिः ॥ ८६ ॥ तत्स्वरूपं पिता तस्य, विज्ञाय बहुमानतः । निजं राज्यं ददौ तस्मै, सोऽभूद्रा-
ज्यद्वयेश्वरः ॥ ८७ ॥ श्रीचन्द्रधवलः सूरि-रागाच्चन्द्रपुरीं कदा । श्रीवीरधवलो ज्ञात्वा, वन्दनाय ययौ रयात् ॥ ८८ ॥
वन्दित्वा विधिना सूरिमुपविश्य च तत्पुरः । सद्धर्म्मदेशनां पाप-नाशिनीमशृणोदिति ॥ ८९ ॥ देहस्पृशां दुर्गतिपातुकानां,
धर्त्ता ततो धर्म्म इति प्रतीतः । दानादिभेदैः स चतुष्प्रकारः, संसारविस्तारहरश्चतुर्धा ॥ ५९० ॥ यतः—जं जं इट्ठं लोए,
तं तं साहूण देइ सद्धाए । थोवं पि कुणइ सुकयं, तस्स कयं नो पणासेइ ॥ ९१ ॥ इहार्थे श्रूयतां राजन्, सम्बन्धो
दानसत्फलः । काम्पील्ये ब्रह्मदत्ताह्वश्चक्री राज्यमपालयत् ॥ ९२ ॥ तस्मिन्पुरे वरो विप्रो, विप्रकर्म्मरतः सदा । देवशर्म्मा-
भिधस्तस्य, देवदत्ता च वल्लभा ॥ ९३ ॥ जातास्तयोः सदाचाराश्चत्वारो नन्दनोत्तमाः । ततः परं सुते जाते, उभे
सर्व्वगुणैः शुभे ॥ ९४ ॥ गौरीति किल गान्धारी, चेति नामयुगं तयोः । मुदा पित्रादिभिश्चक्रे, क्रमाद्वृद्धिञ्च ते
गते ॥ ९५ ॥ पाणिग्रहणयोग्ये ते, दृष्ट्वा तातो व्यचिन्तयत् । केनाप्युत्तमविप्रेण, सनाथे प्रकरोम्यमू ॥ ९६ ॥
कोऽपि नैमित्तिकः प्राप्तो, विदेशात्तस्य सद्मनि । तातेन दर्शिता तस्मै, सुतयोर्जन्मपत्रिका ॥ ९७ ॥ स बभाषे च तां

दृष्ट्वा, धूनयन् निजमस्तकम् । एते तत्र सुते भिल्लवल्लभे भो भविष्यतः ॥ ९८ ॥ श्रुत्वैवं देवशर्म्मापि, चिन्तयामास दुःखितः । धिग् धिग्मे यत् सुते एते, कुलीने तत्प्रिये कथम् ? ॥ ९९ ॥ ततस्तेन धरापीठे, बहवश्चिन्तिता वराः । तयोः कर्मानुभावेन, वरः कोऽपि न मन्यते ॥ ६०० ॥ काव्यम्—पातालमाविशतु यातु सुरेन्द्रलोक-मारोहतु क्षितिधराधिपतिं च मेरुम् । मन्त्रौषधैः प्रहरणैः प्रकरोतु रक्षां, यद्भावि तद्भवति नात्र विचारहेतुः ॥ १ ॥ तातेन मातृशालायाः, प्रेषिते मातुलालये । शुभेऽह्न्यचलतां मार्गे, भिल्लधाट्यमिलत्तयोः ॥ २ ॥ गृहीत्वा ते स्त्रियौ भिल्लैः, पल्लीशाय समर्पिते । तस्य प्रिये उभे जाते, विप्रधर्म्मं न मुञ्चतः ॥ ३ ॥ अन्यदाऽऽगात्फलाहारः, कश्चिद्व्रतादिनो जने । वनान्तरे स्थिते ते द्वे, स्नानं कृत्वा सरोवरे ॥ ४ ॥ सहकारफलान्येका, निर्बीजीकृत्य तस्थुषी । अन्या रम्भाफलान्याशु, भोक्तुं सज्जीचकार च ॥ ५ ॥ ततस्ते दध्यतुश्चित्ते, जन्म जातं निरर्थकम् । ब्राह्मणानां कुले भूत्वा, भिल्लपत्न्यौ बभूविव ॥६॥ यदि कोऽपि समायाति, भिक्षुः चक्षुःपथेऽधुना । पुनाति तत्फलाहारमस्मदीयमनुग्रहात् ॥ ७ ॥ मुनिर्मासोपवासस्य, पारणे पुण्यकारणे । धर्म्मदत्ताभिधस्तत्र, भाग्ययोगात्तदाऽऽगमत् ॥ ८ ॥ फलानि तानि तस्मै ते, ददते स्म मुदा तदा । तयोः कुलादिकं सर्वं, जानानो मुनिरग्रहीत् ॥ ९ ॥ गते मुनौ फलाहारं, चक्रतुस्ते अपि स्वयम् । कुर्वाणे च गृहं प्राप्ते, चिरं चित्तेऽनुमोदनाम् ॥ ६१० ॥ मृत्वा चान्ते समाधाय, प्रतिष्ठानाभिधे पुरे । पद्मभूपप्रियापद्मावतीकुक्षौ समागते ॥११॥ तयोर्जन्मनि भूपालः, कृत्वा प्रौढमहोत्सवम् । कमलावतीश्च (च) लीलावतीत्याख्यां पिता व्यधात् ॥ १२ ॥ वर्धमाने कलाः सर्व्वास्ते अधीते मनोहरम् । यौवनं प्राप्य नो कस्य, लोकस्याहरतां मनः ? ॥ १३ ॥ अद्भुतं भाग्यरूपादि, संप्रेक्ष्य गुणसञ्चयम् । तयोर्वीक्ष्य मुदा भूपः, प्रकरोति स्वयंवरम् ॥ १४ ॥ अत्रानेकनरेन्द्राणां, मण्डले

मिलिते सति । ताभ्यां वव्रे पद्मपुराधीशः सिंहनरेश्वरः ॥ १५ ॥ प्राप्ते स्वस्वपुरं राजमण्डले निखिले नृपः । सिंहोऽपि सहितस्ताभ्यां, ययौ पद्मपुरं महान् ॥ १६ ॥ अन्यदा ते गवाक्षस्थे, मुनिमुत्पन्नकेवलम् । वीक्ष्य जातिस्मृतिं प्राप्ते, अद्राष्टां च निजं भवम् ॥ १७ ॥ फलदानं ददे यस्मै, स एवायं मुनीश्वरः । दृक्पथे भाग्ययोगेन, संप्राप्तो विद्यतेऽधुना ॥ १८ ॥ ततस्ते चेलतुस्तस्य, वन्दनाय वनं प्रति । रथारूढे परीवारयुक्ते ताभ्यां नतो मुनिः ॥ १९ ॥ घृतेक्षुरसदुग्धादि, मोदक फलकान्यपि । स दानं वर्णयामास, तीर्थकृद्गोत्रदायकम् ॥ ६२० ॥ पूर्वे जन्मनि किं विप्रकुले जाते अपि ध्रुवम् । अभूव पत्न्यौ भिल्लस्य, दुष्कृतं किं कृतं पुरा ? ॥ २१ ॥ इति पृष्टो मुनिः प्रोचे, विशालाख्या पुरी वरा । दत्ताभिधोऽभवत्तत्र, श्रेष्ठी श्रीद इवापरः ॥ २२ ॥ लक्ष्मीवती प्रिया तस्य, प्रशस्यगुणशालिनी । तत्कुक्षिजे हेममालारत्नमालाभिधे सुते ॥ २३ ॥ विवाहावसरे ते द्वे, सखीभिः परिवारिते । कामदेवाभिधं यक्षमर्चितुं जग्मतुर्वने ॥ २४ ॥ कायोत्सर्गस्थितं तत्र, मुनिं वीक्ष्य तदालये । प्रोचे सखीक्ष्यतां साधुर्मूर्त्तपुण्यमिवाद्भुतम् ॥ २५ ॥ ताभ्यां शृङ्गारसाराभ्यां, प्रोचे संवीक्ष्य तं मुनिम् । अहो मलिनता कापि भिल्लोऽयं मूर्तिमान्भवेत् ॥ २६ ॥ एवं परस्परं स्मित्वा, यक्षं नत्वा गृहङ्गते । किञ्चिद्दानफलेनापि, मृत्वा जाते द्विजाङ्गजे ॥ २७ ॥ भिल्लपत्न्यौ युवां जाते, साधुनिन्दोत्थकर्म्मणा । फलदानप्रभावेणाधुना जाते नृपप्रिये ॥ २८ ॥ श्रुत्वेति ते मुदा साधुं, नत्वा धर्म्मं जिनोदितम् । आदृत्य स्वगृहे प्राप्ते, सदा प्रीतिपरायणे ॥ २९ ॥ प्रासादौ कारितौ ताभ्यां, जिनबिम्बविभूषितौ । आम्ररम्भातरू स्वर्णमयौ संस्थापितौ पुरः ॥ ६३० ॥ एतयोः फलदानेन, जातं नौ राज्यमद्भुतम् । जिनं नत्वा च तौ वृक्षौ, दृष्ट्वैवं ते जहृषतुः ॥ ३१ ॥ अन्ते गत्वा जिनागारे, गृहीत्वाऽनशनं शुभम् । जैनश(भ)क्तिभवप्राप्त्यै, निदानं ते

बबन्धतुः ॥ ३२ ॥ जाते षोडशदेवीषु, रोहिण्यादिषु ते उभे । नवमी दशमी देव्यौ, गौरीगन्धारीनामतः ॥ ३३ ॥ जिनशासनसान्निध्यकारिण्यौ कामितप्रदे । महावीर्यधरे ते द्वे, दानपुण्याद्बभूवतुः ॥ ३४ ॥ पर्व्वतानां यथा मेरुः, यथेन्द्रः स्वर्ग्गेवासिनाम् । सर्व्वेषामपि धर्म्माणां, तथा दानमनुत्तरम् ॥ ३५ ॥ धर्म्मोपदेशं हि निशम्य राजा, गुरुञ्च नत्वा नगरीं जगाम । तस्मिंश्च राज्ये तनयं निवेश्य, पैत्र्यं चिरं राज्यमपालयत्सः ॥ ३६ ॥ श्रीचन्द्रधवलो धर्म्मदत्तयुक्तो महीतले । चिरं प्रपाल्य चारित्रं, संप्राप्तः परमं पदम् ॥ ३७ ॥ भो भव्या धर्म्मकल्पद्रोर्दानशाखा प्रकीर्तिता । मोक्षं गता गमिष्यन्ति, यान्ति जीवाः सुदानतः ॥ ३८ ॥ श्रीनाभेयजिनेश्वरो धनभवे पूर्वं श्रियामाश्रयः, श्रेयांसः स च मूलदेवनृपतिर्ये चक्रिशक्रादयः । धन्योऽयं कृतपुण्यकः शुभगुणः श्रीशालिभद्रो धनः, सर्व्वेऽप्युत्तमपात्रदानविधिना जाता जगत्युत्तमाः ॥ ३९ ॥ दातव्यं शिवहेतवे निजधनं पात्राय तच्चार्हतां, बिम्बं सद्म च पुस्तकं निगदितं सङ्घश्चतुर्धा तथा । दीनाद्युद्धृतिपुण्यशालकरणं साधारणं चेत्यहो, सत्त्वेभ्योऽप्यनुकम्पया तु गृहिणा देयं यथाशक्तितः ॥६४०॥ दानाल्लक्ष्मीर्विशाला वरमतुलसुखं निर्मला कीर्त्तिरुच्चैः,–रौदार्यं धैर्यमायुर्वपुरपि विगदं रूपलावण्ययुक्तम् । सौभाग्यं वीर्यमुग्रं त्रिभुवनविभुता शक्रचक्रेश्वरत्वं, विज्ञानं जातिरुच्चा कुलमपि विपुलं धर्म्मसंसिद्धिरित्थम् ॥ ४१ ॥ पात्रे पुण्यनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं, भृत्ये भक्तिभरावहं नरपतौ सन्मानसंपादकम् । मित्रे प्रीतिकरं सदा रिपुजने वैरापहारक्षमं, भट्टादौ च यशस्करं वितरणं न क्वाप्यहो निष्फलम् ॥ ४२ ॥ नो शीलं प्रतिपालयन्ति गृहिणस्तप्तुं तपो न क्षमा, आर्त्तध्याननिराकृता जडधियस्तेषां कुतो भावना ? । इत्येवं निपुणेन हन्त मनसा सम्यग् मया निश्चितं, नोत्तारो भवकूपतोऽपि सुदृढं दानावलम्बात्परः ॥ ४३ ॥ महानन्दपदं दत्ते, विधत्ते या सुखश्रियः ।

९

भव्यजीवौघसंसेव्या, दानशाखा श्रियेऽस्तु वः ॥ ४४ ॥

इति श्रीवीरदेशनायां श्रीधर्म्मकल्पद्रुमे चतुःशाखिके दानशाखायां धर्म्मदत्तकथान्विते श्रीचन्द्रधवलनृपाख्याने तृतीयः पल्लवः समाप्तः ॥ ३ ॥

## ॥ समाप्ता चेयं प्रथमदानशाखा ॥

---

## ॥ अथ चतुर्थः पल्लवः ॥

ब्रह्माल्पायुर्गिरीशो विषयपरिचितः श्रीपतिर्गर्भवासी, चन्द्रः क्षीणः प्रतापी भ्रमति दिनकरः शेषनागोऽभिमानी। कामः कायेन हीनश्चलगतिरनिलो विश्वकर्म्मा दरिद्री, शक्राद्या दुःखपूर्णाः सुखनिधिसुभगाः पान्तु वः श्रीजिनेन्द्राः ॥ १ ॥ चिन्तारत्नं मणीनामिव दिविजकरी सिन्धुराणां ग्रहाणा-मिन्दुः कल्लोलिनीनां सुरसरिदमरद्माधरः पर्व्वतानाम्। कल्पद्रुः पादपानां हरिरदितिभुवां चक्रवर्ती नराणां, धर्म्माणां जैनधर्म्मोऽप्ययमपि हि तथा राजते ह्युत्तमत्वे ॥ २ ॥ अथोवाच महीभर्त्ता, सहर्षो नन्दिवर्धनः। भगवंस्त्वत्प्रसादेन, दानधर्म्मफलं श्रुतम् ॥ ३ ॥ इदानीं शीलमाहात्म्यं, श्रोतुमस्मि समुत्सुकः। त्वद्देशनाऽमृतं पीत्वा, किं तृप्यन्ति मनीषिणः ? ॥ ४ ॥ शीलव्याख्यामथारेभे, श्रीमान् वीरजिनेश्वरः। अहार्यं भूषणं

शीलं, शीलं मूलं शिवश्रियः ॥ ५ ॥ शीलेन रक्षितो जन्तुर्न केनाप्यभिभूयते । महाह्रदप्रविष्टस्य, किं करोति दवानलः ? ॥६॥ यतः—पीयूषमौषधिषु शाखिषु कल्पशाखी, चिन्तामणिर्मणिषु धेनुषु कामधेनुः । ध्यानं तपस्सु सुकृतेषु कृपा व्रतेषु, ब्रह्मव्रतं क्षितिपतित्वमुरीकरोति ॥ ७ ॥ काव्यम्—शीलं कीर्तिसितातपत्रकलशः शीलं श्रियः कार्म्मणं, शीलं भावपयोधिशीतकिरणः शीलं गुणानां निधिः । शीलं संसृतिकानने कदलिका शीलं खानिः श्रेयसां, शीलं सत्त्वलतावसन्तसमयः शीलं तु मुक्तिप्रदम् ॥ ८ ॥ तीर्थानि वा व्रजतु तिष्ठतु चैकपादं, तोये निमज्जतु पतत्वथ वाऽद्रिशृङ्गात् । नैवास्ति शीलरहितस्य नरस्य सिद्धि—र्बीजाच्छिलातलगतादिव सस्यवृद्धिः ॥ ९ ॥ न मुक्ताभिर्न माणिक्यैर्न वस्त्रैर्न परिच्छदैः । अलङ्क्रियेत शीलेन, केवलेनैव मानवः ॥ १० ॥ धर्म्मकल्पद्रुमे दानशाखैषा वर्णिता पुरा । अधुना शीलशाखा तु, कथ्यते पुण्यपादपे ॥ ११ ॥ सुराः शीलेन सान्निध्यं, सदा कुर्व्वन्ति मानवे । रत्नपालस्य कान्तावत्, यान्ति विघ्नानि शीलतः ॥ १२ ॥ अपृच्छद्भूपतिः केयं, रत्नपालप्रिया प्रभो ! । समग्रं श्रोतुमिच्छामि, तस्या अपि कथानकम् ॥ १३ ॥ स्वामी योजनगामिन्या, वाण्योचे शृणु भूपते ! । सर्वभूतहितं वच्मि, तच्चरित्रं यथातथम् ॥ १४ ॥

अस्त्यत्र मध्यगो द्वीपो, जम्बूद्वीपाभिधानतः । वर्त्तुलः स्थालसङ्काशो, लवणोदधिनाऽऽवृतः ॥ १५ ॥ तन्मध्येऽस्ति गिरिर्मेरुर्यत्रासन्नवनान्तरे । जबूवृक्षोऽस्ति यन्नाम्ना, जम्बूद्वीपोऽयमुच्यते ॥ १६ ॥ मेरोर्दक्षिणदिग्भागे, लवणोदधिपार्श्वगम् । क्षेत्रं भरतनामैतत्पवित्रं पुण्यकर्म्मणा ॥ १७ ॥ तत्रास्ति भूमिभामिन्या, ललाटे तिलकोपमम् । विख्यातं पूर्वदेशे च, नगरं पाटलीपुरम् ॥ १८ ॥ परितो वरवापीभिः, कूपारामसरोवरैः । यत्पुरं शोभते नित्यं, नररत्नैरलङ्कृतम् ॥ १९ ॥ गवाक्षमण्ड-

पस्तम्भद्वारतोरणशोभिताः । आवासा यत्र शोभन्ते, तुङ्गाः शिखरिशृङ्गवत् ॥ २० ॥ यदायामपृथुत्वेन, नवद्वादशयोजनम् । राजितं तुङ्गवप्रेण, गङ्गातटसमाश्रितम् ॥ २१ ॥ यतः—स्थाने च यत्रास्ति जिनेन्द्रचैत्यं, साधर्म्मिकाः साधुसमागमश्च । प्रायेण लोकोऽपि च धर्म्मशीलः, सभद्रकः पातकतोऽतिभीरुः ॥ २२ ॥ निखिलेऽपि पुरे यत्र, द्वे एते वसतः स्त्रियौ । देहेषु भारती देवी, गेहेषु कमला पुनः ॥ २३ ॥ अभूद्विनयपालाह्वो, भूपतिस्तत्र पावनः । नयादिकगुणैर्युक्तो, विरक्तः पापकर्मतः ॥ २४ ॥ न हीतयः क्षेत्रभुवः फलोत्तरा, अनिर्गलाः सन्ति सुखं कुटुम्बिनः । वियोगरोगानुभवः प्रजानां, न जायते नीतिधुरन्धरे नृपे ॥ २५ ॥ तत्प्रियाऽनङ्गसेनाह्वा, लज्जाविनयशालिनी । राज्ञीसप्तशतीमुख्या, दक्षा धर्म्मकलासु च ॥ २६ ॥ यतः—जवो हि सप्तेः परमं विभूषणं, त्रपाऽङ्गनायाः कृशता तपस्विनः । विजस्य ( छात्रस्य ) वैद्यस्य मुनेरपि क्षमा, पराक्रमः शस्त्रबलोपजीविनाम् ॥ २७ ॥ काव्यम्—स्वाध्यायाध्ययनं जिनेन्द्रमहनं शुश्रूषणं सत्पतेः, पात्रे दानविधि-स्तपोऽप्यनुपमं साधर्म्मिके बन्धुधीः । संवेगाधिगमो मनः शममयं सत्त्वेषु नित्यं कृपा, प्रायेणोत्तमधर्म्मकर्म्म तदिदं स्त्रीणां सतीनां भवेत् ॥ २८ ॥ बुभोज विपुलान् भोगान्, तया सार्धं महीपतिः । दिनानि गमयामास, लीलया सुकृतेन च ॥ २९ ॥ अथान्यदा सुखं सुप्ता, देहबाधाविवर्जिता । निशीथसमये स्वप्नमेवं देवी ददर्श सा ॥ ३० ॥ उत्तुङ्गशृङ्गसदृशो, दृष्टो रत्नोच्चयो महान् । मुखे प्रविश्यमानोऽथ, जजागार च तत्क्षणात् ॥ ३१ ॥ प्रभातसमये राज्ञी, पत्युरग्रे न्यवेदयत् । एवं स्वप्नो मया दृष्टस्तत्फलं कथय प्रभो ! ॥ ३२ ॥ उवाच मतिकौशल्यान्निजचित्ते विचिन्त्य सः ।

१ 'तोषश्च' इति चेत् साधु.

स्वप्नस्यास्य प्रभावात्ते, देवि ! पुत्रो भविष्यति ॥ ३३ ॥ स सर्व्वगुणसंपूर्णो, रत्नराशिसमद्युतिः । प्रतापप्रबलो भावी, दृष्टः स्वप्नो यदीदृशः ॥ ३४ ॥ एवं स्वप्नफलं श्रुत्वा, गता प्रमुदिता गृहे । गर्भं बभ्रे च सा देवी, निधानमिव मेदिनी ॥ ३५ ॥ क्रमेण ववृधे गर्भ, उत्पन्नाः शुभदोहदाः । पूर्यन्ते पुण्ययोगेन, यथा राज्ञ्याः सुखं भवेत् ॥ ३६ ॥ गर्भानुभावतो राज्ञी, चित्ते जानाति चैकदा । गजारूढा जगत्सर्व्वं, साम्प्रतं साधयाम्यहम् ॥ ३७ ॥ दुष्पूरं दोहदं ज्ञात्वा, तं नृपेणाथ मन्त्रिणः । आकार्योचे कथं राज्ञ्या, दोहदो ह्येष पूर्यते ? ॥ ३८ ॥ तैस्तु विंशतियोजन्यां, कृत्वा देशान् पृथक् पृथक् । भ्रामिता तत्र राज्ञी दिग्जयदोहदपूरणे ॥ ३९ ॥ पूर्णेषु गर्भमासेषु, स्फुरत्कान्तिसुलक्षणम् । सा राज्ञी सुषुवे सूनुं, यथा प्राची दिवाकरम् ॥ ४० ॥ पुत्रे जातेऽभवद्राजा, हर्षादुत्फुल्लमानसः । पुत्रो हि जननीपित्रोः, परमानन्दकारणम् ॥ ४१ ॥ यतः—नेपथ्यैर्विविधै रसैर्बहुविधैरुल्लापनैः क्रीडनै—र्नामस्थापनचूलिकादिकरणैरालिङ्गनैर्वाहनैः । विद्याध्यापनकर्म्मकौशलगुणारोपैश्च यो नन्दनं, स्वस्मादप्यधिकं करोति स पिता कैर्नाम न श्लाघ्यते ? ॥ ४२ ॥ राजा विनयपालोऽसौ दानगानादिभिर्भृशम् । सुतजन्मोत्सवश्चक्रे, करान् देशे मुमोच च ॥ ४३ ॥ भोज्यालङ्कारवस्त्राद्यैर्गोत्रजा गोत्रिणो गुरून् । सन्तोष्य तत्पुरो राजा, बभाषे रचिताञ्जलिः ॥ ४४ ॥ अस्मिन्गर्भस्थिते मात्रा, दृष्टः स्वप्ने मणिव्रजः । रत्नपालोऽस्तु नाम्नाऽयं, ततः स्वप्नानुसारतः ॥४५॥ लाल्यमानोऽथ धात्रीभिर्ववृधेऽसौ दिने दिने । पित्रोर्मनोरथैः सार्धं, शुक्लपक्षे शशाङ्कवत् ॥४६॥ जन्मपत्र्यां बुधैर्दृष्टो, राजयोग इति स्फुटः । केन्द्रस्था गुरुशुक्रज्ञा, दशमो भूमिनन्दनः ॥ ४७ ॥ बुधभार्ग्गवजीवानामेकोऽपि केन्द्रसंस्थितः । स्थानानि लभते नित्यं, महीभोक्ता भवेत् ध्रुवम् ॥ ४८ ॥ कर्म्मस्थाने यदा सौम्या, नीचस्था क्रूरगा ग्रहाः । स्वगृहस्थाः शुभैर्दृष्टाः, स

नरः सर्वकार्यकृत् ॥ ४६ ॥ पुत्रस्यैवं ग्रहबलं, श्रुत्वा ज्योतिर्विदां मुखात् । राजा रङ्गभराद्भूयो, विप्रं विदुरमाह्वयत् ॥ ५० ॥ विप्रोऽष्टाङ्गनिमित्तज्ञ, आगतो हस्तपुस्तकः । दत्वाऽऽशीस्तेन भूपस्य, महाराज ! चिरञ्जय ॥५१॥ आसनादिकसन्मानं, दत्वा मुक्त्वाऽग्रतः फलम् । प्रणामपूर्व्वकं राजा, पप्रच्छ सुतलक्षणम् ॥ ५२ ॥ विप्रोऽवादीन्महाराज ! शृणु सामुद्रिके यथा । उक्तानि लक्षणान्यङ्गे, तदहं कथयामि ते ॥ ५३ ॥ इह भवति सप्तरक्तः, षडुन्नतः पञ्चसूक्ष्मदीर्घश्च । त्रिविपुललघुगम्भीरो, द्वात्रिंशल्लक्षणः स पुमान् ॥ ५४ ॥ नखचरणपाणिरसनादशनच्छदतालुलोचनान्तेषु । स्याद्यो रक्तः सप्तसु, सप्ताङ्गां स भजते लक्ष्मीम् ॥ ५५ ॥ षट्कं कक्षा वक्षः, कृकाटिका नासिका नखास्यमिति । यस्येदमुन्नतं स्यादुन्नतयस्तस्य जायन्ते ॥ ५६ ॥ दन्तत्वक्केशाङ्गुलिपर्व्वनखश्चेति पञ्च सूक्ष्माणि । धनलक्ष्माण्येतानि, प्रभवन्ति प्रायशः पुंसाम् ॥ ५७॥ नयनकुचान्तरनाशाहनुभुजमिति यस्य पञ्चकं दीर्घम् । दीर्घायुर्वित्तपरः, पराक्रमी जायते स नरः ॥५८॥ भालमुरो वदनमिति, त्रितयं भूमीश्वरस्य विपुलं स्यात् । ग्रीवा जङ्घा मेहनमिति त्रयं लघु महीशस्य ॥ ५६ ॥ यस्य स्वरोऽथ नाभी, सत्त्वमितीदं त्रयं गभीरं स्यात् । सप्ताम्बुधिकाञ्चेरपि, भूमेः स करग्रहं कुरुते ॥ ६० ॥ इति द्वात्रिंशल्लक्षणानि । छत्राकारं शिरो यस्य, विस्तीर्णं हृदयं तथा । कटी यस्य विशाला च, स सौख्यधनपुत्रवान् ॥ ६१ ॥ मयूरगजहंसाश्वच्छत्रतोरणचामरैः । सदृशा यत्करे रेखाः, स भोगान् लभते घनान् ॥ ६२ ॥ प्रासादपर्व्वतस्तूपपद्माङ्कुशरथोपमाः । ध्वजकुम्भसमा रेखा, हस्तपादे शुभावहाः ॥ ६३ ॥ नरस्य दक्षिणे पार्श्वे, तिलकं मण्डलं शुभम् । वामे शुभं च नारीणां, ज्ञातव्यं हि नराधिप ! ॥ ६४ ॥ शास्त्रोक्तलक्षणान्येवं, पुत्राङ्गे वीक्ष्य भूभुजा । जातहर्षेण विप्रोऽसौ, विसृष्टो दानपूर्व्वकम् ॥ ६५ ॥ राज्ञाऽसौ लेखशालायां, मुक्तो वर्षेऽथ

सप्तमे । नरो हि शोभते नित्यं, कलाविद्यादिकैर्गुणैः ॥ ६६ ॥ यतः—यद्यपि भवति विरूपो, वस्त्रालङ्कारवेषपरिहीणः । सज्जनसभाप्रविष्टः, शोभामनुभवति सद्विद्यः ॥ ६७ ॥ काव्यम्—संपूर्णकुम्भो न करोति शब्दमर्धो घटो घोषमुपैति यस्मात् । विद्यावतां नो भवतीह गर्वो, विद्याविहीना बहुभाषकाः स्युः ॥ ६८ ॥ शास्त्रं प्रज्ञावशात्तेनाधीतं स्तोकदिनैर्घनम् । षट्त्रिंशदायुधाभ्यासः, कृतश्चानेन लीलया ॥ ६९ ॥ रूपसौभाग्यसंपन्नो, द्विसप्ततिकलानिधिः । युवराजपदे पित्रा, स्थापितो रत्नपालकः ॥ ७० ॥ मित्रैः परिवृतो नित्यं, विविधक्रीडया स च । शस्त्रशास्त्रविनोदेन, गमयामास वासरान् ॥ ७१ ॥ इतश्च कन्यकुब्जाख्ये, देशे हंसपुरे पुरे । वीरसेनो नृपो वीरो, महासेन इवाभवत् ॥ ७२ ॥ प्रिया वीरमती तस्य, शीलसौभाग्यशालिनी । शृङ्गारसुन्दरी पुत्री, तयोः सुगुणमण्डिता ॥ ७३ ॥ यतः—वक्त्रं चन्द्रविडम्बि पङ्कजपरीहासक्षमे लोचने, वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानां चयः । वक्षोजा इभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली, वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥ ७४ ॥ चतुष्षष्टिकलापात्रं, रूपयौवनमिश्रिता । तातेन पाठिता साऽभूद्द्वितीया भारती भुवि ॥ ७५ ॥ सद्वृत्ता शीलसंयुक्ता, लावण्यरसवाहिनी । किं बहुनाऽभवद्भूयो, द्वात्रिंशत्स्त्रीगुणान्विता ॥ ७६ ॥ यथा—सुरूपा सुभगा शान्ता, सुवेषा हि सुनेत्रका । सुगन्धश्वासभृत् दक्षा, विशिष्टा च सुखाश्रया ॥ ७७ ॥ नातिमाना नातिनम्रा, मधुराक्षरभाषिणी । सलज्जा रसिका गीतनृत्यज्ञा वाद्यकोविदा ॥ ७८ ॥ सुस्वराऽलोभिनी पीनस्तनी वृत्तानना पुनः । प्रेमवती स्फीतिमती, पतिभक्ता विनीतका ॥ ७९ ॥ सत्यवाक् सुव्रतोदारा, ससन्तोषा च धार्मिकी । दोषाच्छादनका क्षान्तियुक्ता स्त्रियो गुणा अमी ॥ ८० ॥ महाकाव्यम्—शुष्काङ्गी कूपगण्डा प्रविरलदशना श्यामताल्वोष्ठजिह्वा । पिङ्गाक्षी वक्रनाशा



खरपरुषनखा वामना चातिदीर्घा । श्यामाङ्गी सन्नतभ्रूः कुचयुगविषमा रोमजङ्घाऽतिकेशी, सा नारी वर्जनीया धनसुतरहिता षोडशालक्षणाढ्या ॥ ८१ ॥ पीनोरूः पीनगण्डा लघुसमदशना पद्मनेत्रान्तरक्ता, बिम्बोष्ठी तुङ्गनाशा गजगतिगमना दक्षिणावर्त्तनाभिः । स्निग्धाङ्गी वृत्तवक्त्रा पृथुमृदुजघना सुस्वरा चारुकेशा, भर्त्ता तस्याः क्षितीशो भवति च सुभगा पुत्रमाता च नारी ॥ ८२ ॥ तां प्राप्तयौवनां दृष्ट्वा, चिन्तां भूपोऽकरोदिति । कस्मिन् स्थाने कुले कस्मिन्, कस्मै देया सुता मम ? ॥ ८३ ॥ यतः—जातेति शोकं महतीति चिन्तां, करोति या कस्य वरस्य देया । दत्ता सुखं प्राप्स्यति वा न वेति, कन्यापितृत्वं खलु नाम कष्टम् ॥८४॥ मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् । त्रिगुणाधिकवर्षाणां, तेषां देया न कन्यका ॥८५॥ यतः—अत्यद्भुतधनाढ्यानामतिशान्तातिरोषिणाम् । सरोगविकलानाञ्च, तेषां देया न कन्यका ॥ ८६ ॥ यतः—कुलजातिविहीनानां, पितृमातृवियोगिनाम् । गेहिनां पुत्रयुक्तानां, तेषां देया न कन्यका ॥ ८७ ॥ कुशीलचौर्ययुक्तानां, मद्यपद्यूतकारिणाम् । वैदेशिकस्वगोत्राणां, तेषां देया न कन्यका ॥ ८८ ॥ खञ्जान्धजडचित्तानां, सदैवोत्पन्नभक्षिणाम् । बहुवैरापवादानां, तेषां देया न कन्यका ॥ ८९ ॥ काव्यम्—कुलं च शीलं च सनाथता च, वित्तं च विद्या च वपुर्वयश्च । एतान्गुणान्सप्त निरीक्ष्य देया, ततः परं भाग्यवशा च कन्या ॥ ९० ॥ अनुरूपो वरः पुत्र्याः, को भविष्यति सद्गुणैः ? । स्वयंवरेऽथवा कन्या, वृणुतां स्वेच्छया वरम् ॥ ९१ ॥ ध्यात्वेति कारितो राज्ञा, स्वयंवरणमण्डपः । दूतैराकारिताः सर्व्वे, समाजग्मुर्महीभुजः ॥ ९२ ॥ समित्रो रत्नपालोऽपि, पित्रादेशात्समागतः । महान्तो मिलितास्तत्र, मण्डलीकाः सहस्रशः ॥ ९३ ॥ रम्येषु हर्म्येषु निवेशनेषु, प्रियोक्तिदानादरनम्रताद्यैः । शय्यासनैस्तत्र नरेन्द्रचक्रमुपाचरच्चारु स भूमिनाथः ॥ ९४ ॥ हिमालयकृतस्पर्धास्तत्र पक्वान्न-



राशयः । वैताढ्यशृङ्गवत्तुङ्गाः, सन्ति शाल्यादिसञ्चयाः ॥ ९५ ॥ अथ लग्नदिने प्राप्ते, सर्व्वाभरणभूपिता । आगता मण्डपे तत्र, कन्या शृङ्गारसुन्दरी ॥ ९६ ॥ रूपेण विजिता रम्भा, शास्त्रेण च सरस्वती । गुणेन जितगौरी च लक्ष्मीर्लक्षणलक्षिता ॥९७॥ एवंविधगुणैर्युक्ता, साक्षान्मोहनवल्लिका । वरमालां करे कृत्वा, स्थिता साऽत्र स्वयंवरे ॥९८॥ आगता ये नृपास्तत्र, प्रतिहार्या निवेदिताः । पूर्वप्रेमानुभावेन, रत्नपालो वरो वृतः ॥ ९९ ॥ ततोऽन्ये क्षत्रियाः क्रुद्धाः, सङ्ग्रामाय समुत्थिताः । त्रिंशदक्षौहिणीसंख्या, वाहिन्यो मिलितास्तदा ॥ १०० ॥ यतः—दश नागसहस्राणि, नागे नागे शतं रथम् । रथे रथे शतं अश्वं, अश्वे अश्वे शतं नरम् ॥ १ ॥ काव्यम्—अयुतं गजानां प्रयुतं रथानां, नवलक्षयोधा दशलक्षवाजिनाम् । उदारभृत्याः षट्त्रिंशलक्षाः, अक्षौहिणीसैन्यं मुनयो वदन्ति ॥ २ ॥ संभूय रिपवः सर्वे, समुदायेन लक्षशः । एकेन रत्नपालेन, सार्धं युद्धाय चागताः ॥ ३ ॥ सज्जीबभूव युद्धाय, रत्नपालोऽपि विक्रमी । तदैवं वीरसेनोऽपि, चिन्तयामास चेतसि ॥ ४ ॥ अहो कथमनर्थोऽयं, संजातः शुभवासरे ? । भोजनावसरे युद्धं, हे अकाण्डेऽद्य जायते ॥ ५ ॥ यतः—पुष्पैरपि न योद्धव्यं, किं पुनर्निशितायुधैः । युद्धे विजयसन्देहः, प्रधानपुरुषक्षयः ॥ ६ ॥ रौद्रे प्रवर्तिते युद्धे, भूभुजा सन्धिपालकान् । संप्रेष्य वारिता युद्धात्, न्यवर्त्तन्त परं न ते ॥ ७ ॥ तदा शृङ्गारसुन्दर्या, चिन्तितं चेति चेतसि । मदर्थे जायते युद्धमभूवं कालरात्र्यहम् ॥ ८ ॥ विषवल्लीसमा जाता, कुलेऽहं कुलनाशनी । पितृमातृमतिर्भग्ना, भग्ना भाग्यलता मम ॥ ९ ॥ हिंसादिकं महापापं, सङ्ग्रामाज्जायते मम । चन्द्रवल्लाञ्छनं मेऽद्य, सञ्जातं कर्म्मदोषतः ॥ ११० ॥ अहो मे निर्म्मला जातिः, सञ्जाता समलाऽधुना । निष्कलङ्कं कुलञ्चाभूत्कलङ्ककलितं किल ॥ ११ ॥ इति चिन्तापरा सा च, यतिवन्मौनमाश्रिता । उपायं चिन्तया-

भास, सर्व्वेषां क्षेमहेतवे ॥ १२ ॥ तदा तत्रागतो मन्त्री, सुबुद्धिस्तस्य कन्यया । कथितं कोऽप्युपायोऽस्ति ?, वक्ष्यन्ते
यन्नृपा अमी ॥ १३ । उपायेन प्रकर्तव्यं, न शक्यं यत्पराक्रमैः । समीहितानि सिध्यन्ति, जने हास्यं न जायते ॥ १४ ॥
यथा पुराऽपि केनापि, मन्त्रिणा बुद्धियोगतः । निजभर्तुर्गतं राज्यं, वालितं तत्क्षणादपि ॥ १५ ॥ नरवाहनराजाऽभूत्पुरे
क्षितिप्रतिष्ठिते । मन्त्री च ज्ञानगर्भोऽस्य, बुध्ध्या देवगुरूपमः ॥ १६ ॥ तस्य राज्ञोऽन्यदा गेहे, नन्दनप्रसवोऽभवत् । प्रार-
ब्धोऽस्य यदा षष्ठीरात्रिजागरणोत्सवः ॥ १७ ॥ सचिवेन तदाऽचिन्ति, विधिचेष्टा विलोक्यते । किङ्करोति लिखेत्किं वा,
ध्यात्वैवं गुप्तवृत्तितः ॥ १८ ॥ मध्यरात्रे स्थितो दीपच्छायायां स सुधीर्यदा । तावदागत्य दैवेन, लिखित्वा प्रोक्तमीदृशम्
॥ १९ ॥ युग्मम् ॥ आखेटक्रिययैवासौ, प्राणवृत्तिर्विधास्यति । चटिष्यत्येकजीवोऽस्य, सदाऽन्यो न चटिष्यति ॥ १२० ॥
श्रुत्वैवं शङ्कितोऽमात्यश्चेतसीति व्यचिन्तयत् । अहो भूपसुतस्यापि, किमिदं कर्म्मचेष्टितम् ? ॥ २१ ॥ द्वितीयोऽथ सुतो
राज्ञो, जज्ञे तस्यापि पूर्ववत् । षष्ठीरात्रौ प्रधानेन, विधिनोक्तमिति श्रुतम् ॥ २२ ॥ पृष्ठवाह्यगवैकेन, पुत्रोऽसौ घासविक्रयी ।
भविष्यति सदा नान्यं, बलीवर्दमवाप्स्यति ॥ २३ ॥ तृतीया तु सुता जाता, तद्भाले चैवमक्षराः । विधिना लिखिता एषा,
नूनं वेश्या भविष्यति ॥ २४ ॥ एकमेव नरं दैवादवाप्स्यति दिनं प्रति । त्रयाणामिति दुष्कर्म्म, मन्त्री विज्ञाय दुःख्यभूत्
॥ २५ ॥ कियत्यपि गते काले, हत्वा तं गोत्रिभिर्नृपम् । तद्राज्यं जगृहे नष्टाः, पुत्रीपुत्रादयः पुरात् ॥ २६ ॥ ते त्रयोऽपि
पृथक् कर्म्म, कुर्व्वन्ति विधिनोदितम् । सचिवो ज्ञातसंबन्धो, वीक्षणार्थं विनिर्गतः ॥ २७ ॥ भ्रमन्नेकपुरेऽपश्यत्तमाखेटकरं
नरम् । उपलक्ष्याब्रवीन्मन्त्री, किमिदं त्वङ्करोषि भोः ! ॥ २८ ॥ तेनोक्तमेकजीवेन, कष्टेनाजीविका भवेत् । मन्त्री बुद्धि-

बलेनोचे, शृणु भो ! मे हितं वचः ॥ २९ ॥ भद्रजातिं विना जीवो, न हन्तव्यस्त्वया यतः । महामुक्ताफलप्राप्तिर्गजकुम्भस्थलाद्भवेत् ॥ १३० ॥ ललाटलिखितं जीवमेकं ते दास्यते विधिः । एवमुक्त्वा क्षितीशस्य, शोधनार्थं गतः सुधीः ॥ ३१ ॥ चतुष्पथे पुरे कस्मिन्, तृणभारयुतः स्थितः । दृष्टोऽसौ मन्त्रिणा ज्ञात्वा, तत्स्वरूपश्च भाषितम् ॥ ३२ ॥ प्रत्यहं पृष्ठकं वत्स !, विक्रीणाहि पुनर्विधिः । विक्रीते लिखितं भाले, वृषभं ते प्रदास्यति ॥ ३३ ॥ मन्त्री तु राजपुत्र्यर्थे, भ्रमन्कस्मिन्पुरे ययौ । वेश्याभिर्वेष्टिता दृष्टा, तेन सा तत्र दैवतः ॥ ३४ ॥ नेत्रे नीरेण संपूर्णे, मन्त्र्युचे बालिकां प्रति । वत्स ! का तव चेष्टैषा ? सा प्रोचे कर्म्मयोगतः ॥ ३५ ॥ पुनरेकः पुमानेति, स्वल्पोत्पत्तिस्ततो मम । मन्त्री जगाद हे वत्से !, ममैकं वचनं शृणु ॥ ३६ ॥ त्वद्गृहे यः पुमानेति, दीनाराणां शतं त्वया । तस्मात् याच्यं सदा दैववशादेष्यति चेदृशः ॥ ३७ ॥ शिक्षां दत्त्वा त्रयाणां स, सचिवोऽगाद् गृहे निजे । अन्यदा निशि सुप्तोऽस्ति, तदा स विधिरागतः ॥ ३८ ॥ धीसखं प्रति स प्राह, भोस्त्वं निश्चिन्ततां गतः । मह्यं शकटकं दत्त्वा, दण्डैस्तुरो हि बाध्यते ॥ ३९ ॥ मुञ्च मां बन्धनान्मित्र !, प्रदीयन्ते कुतो मया । हस्तिगोशतदीनारदायकाः सर्व्वदा यतः ॥ १४० ॥ मन्त्री जगाद हे देव !, जनभाषा कृता मया । वक्रकाष्ठे वक्रवेधो, दीयते तत्तवोचितम् ॥ ४१ ॥ विधिरूचे महाबुद्धे !, कार्यं कथय मेऽपरम् । तत्करोमि यथा शीघ्रमस्मात्कष्टाद्विमुञ्च माम् ॥ ४२ ॥ मन्त्र्युचे भूपपुत्राणां, तेषां वेगेन हे विधे ! । ददस्व पैतृकं राज्यं, पश्चात्त्वं स्वेच्छया चर ॥ ४३ ॥ भ्रातरौ भगिनीयुक्तावानीय मन्त्रिणेऽर्पितौ । मन्त्रिणा विधियोगेनारयो निष्कासिताः पुरात् ॥ ४४ ॥ राज्ञो ज्येष्ठसुतो राज्ये, स्थापितो मन्त्रिणा ततः । उक्त्वैवं लौकिकीं वार्त्तां, प्रोचे शृङ्गारसुन्दरी ॥ ४५ ॥

नष्टं राज्यं यथा बुद्ध्या, वालितं तेन मन्त्रिणा । तथा त्वं कुरु मन्त्रीश !, प्रपञ्चं शत्रुनिग्रहे ॥ ४६ ॥ गुप्तं कोऽपि न वेत्तीति, विवरं सचिवस्तथा । अकारयद्बहिर्विप्रात्, तस्योपरि चिता कृता ॥ ४७ ॥ स्थापिता तत्र सा कन्या, बहुचेटीभिरावृता । आकारिता नृपाः सर्व्वे, मन्त्रिणा चेति जल्पितम् ॥ ४८ ॥ भो भूपा ! यस्य वाञ्छा स्यात्कन्यायाः स हुताशने । प्रविशत्वनया सार्धं, तस्मै कन्याऽथ दास्यते ॥ ४९ ॥ अधोमुखा नृपा जाताः, सर्वेषां पश्यतां पुनः । रत्नपालः समं नार्या, चितामध्याद्बिले ययौ ॥ १५० ॥ चेटीभिर्ज्वालितो वह्निर्द्वितीयेऽह्नि सकन्यकः । कुमारः प्रकटो जातः, महत्सत्त्वं जना विदुः ॥ ५१ ॥ आगता ये नृपाः सर्व्वे, स्फालभ्रष्टप्लवङ्गवत् । हताशाः श्यामवक्रास्ते, गता निजनिजं पुरम् ॥ ५२ ॥ ततः शुभे दिने भूपो, विवाहं महदुत्सवात् । तयोश्चक्रे च राज्यार्धं, दत्तवान्करमोचने ॥५३॥ दशाहस्थितितस्तत्र, स्थित्वा दश दिनान् वरः । भूपं विज्ञपयामासानुज्ञां देहि चलाम्यहम् ॥ ५४ ॥ राज्ञाऽथ तस्य सार्थाय, दत्त्वा दानं यथोचितम् । सर्व्वं सन्तोष्य जामाता, पुरे संप्रेषितो निजे ॥ ५५ ॥ राजा कति प्रयाणानि, जामात्रा सार्धमागतः । वलमानेन तातेन, शिक्षेति दुहितुर्ददे ॥ ५६ ॥ यतः—निर्व्याजा दयिते ननान्दृषु नता श्वश्रूषु भक्ता भवेः, स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि । पत्युर्म्मित्रजने विनर्म्मवचना रुष्टा च तद्द्वेषिषु, स्त्रीणां संवननं तदद्भुतमिदं वीतौषधं भर्तृषु ॥५७॥ हे वत्से ! निजनाथस्य, न मोक्तव्यं पदाम्बुजम् । इष्टं दैवतवद्ध्येयं, न धेयं दुर्म्मनः कदा ॥ ५८ ॥ चन्द्रयुक्ता निशा भाति, प्रिया पत्यनुगामिनी । पतिचित्तानुवृत्त्यैव, स्थातव्यं हि त्वया सुते ! ॥ ५९ ॥ मितं ददाति हि पिता, मितं भ्राता मितं सुतः । अमितस्य हि दातारं, भर्त्तारं को न पूजयेत् ? ॥ १६० ॥ इत्यादिविविधां शिक्षां, प्रदत्त्वा

( प्रदाय ) वलितो नृपः । कुमारः कान्तया युक्तः, संप्राप्तो निजपत्तनम् ॥ ६१ ॥ पुरप्रवेशोऽथ वरस्य तस्य, पृथ्वीभुजा कारित उत्सवेन । वध्वा समं मङ्गलभाग्वरोऽसौ, ननाम भक्त्या पितृमातृपादान् ॥ ६२ ॥ श्वश्रूपादयुगं प्रणम्य विधिना तस्थौ वधूः प्राङ्गणे, तस्या रूपविलोकनाय वनितास्तत्रागतास्तावता । दृष्ट्वा तां जगदुर्मिथः सुरवधूः किं वाप्यसौ खेचरी, किं वा नागकुमारिकाऽथ कमला किं किंनरी पार्व्वती ॥ ६३ ॥ नैषा सुरी न नागश्रीः, किंनरी खेचरी शिवा । रत्नपालस्य योग्या च, भोग्यैषा वरकन्यका ॥ ६४ ॥ वर्षन्तीव सुधारसं मधुरया वाचा प्रसन्नानना, नम्रा सद्विनयेन शीलसरला सौभाग्य-लावण्यभूः । पत्युर्जीवितसंनिभा सुतवती चान्तर्धना संपदा, पुण्याढ्यां सुवधूः पुनाति चरणाम्भोजैर्गृहं श्रीरिव ॥ ६५ ॥ कुमारः प्रियया सार्धं, भुञ्जानः सुरवत्सुखम् । मातापित्रोः पदाम्भोजं, सेवते भृङ्गवत् सदा ॥ ६६ ॥ यतः—ते पुत्रा ये पितुर्भक्ता, मातुर्वचनकारकाः । कुलशीलरता नित्यं, शेषा उदरकीटकाः ॥ ६७ ॥ वस्तु द्योतयते दीपः, प्रत्यचं निजतेजसा । निष्कलङ्कः पुनः पुत्रः, परोत्तानपि पूर्वजान् ॥ ६८ ॥ स्वजनाम्भोरुहोल्लासी, रविवत्कुलदीपकः । पितृकीर्तिञ्च धर्म्मञ्च, गुणं च परिवर्धयेत् ॥ ६९ ॥ मातृपितृषु ये भक्ता, ये भक्ता गुरुगोत्रिषु । दुर्भिक्षे चान्नदातारस्ते पार्थ ! पुरुषोत्तमाः ॥१७०॥ यतः—दयैव धर्म्मेषु गुणेषु दानं, प्रायेण चान्नं प्रथितं प्रियेषु । मेघः पृथिव्यामुपकारकेषु, तीर्थेषु मातापितरौ तथैव ॥ ७१ ॥ अन्यदा नगरे तत्र, सुमित्रः सूरिरागतः । वनपालेन विज्ञप्तो, वन्दनाय नृपो ययौ ॥ ७२ ॥ वन्दित्वा विधिवत्सूरिमुपविष्टो महीपतिः । गुरुर्वैराग्यसंपूर्णां, प्रददौ पुण्यदेशनाम् ॥ ७३ ॥ भोः ! भव्या भवपाथोधिरगाधो दृश्यते महान् । तत्पारं प्राप्यते नैव, पुण्यप्रवहणं विना ॥ ७४ ॥ विद्यया तपसा तीर्थयात्रया वा न निर्वृतिः । विना श्रीसाम्यधर्म्मेण, विकल्पैरपरैः किमु ?

॥ ७५ ॥ यतः—हूयते न तप्यते न, दीयते वा न किञ्चन । अहो अमूल्यक्रीतेयं, साम्यमात्रेण निर्वृतिः ॥ ७६ ॥ कन्या किल यथा विद्यातीर्थकष्टकृतामपि । नासीदासीत् स्थितस्यापि, तन्मर्म्मोहारदायिनः ॥ ७७ ॥ तथाहि–श्रीपुरे चन्दन-श्रेष्ठिपुत्री नन्दा गुणैकभूः । प्रदीपकलिकेवासीद्बालाऽपि कुलमण्डनम् ॥ ७८ ॥ पाणिग्रहणयोग्याया, ग्रामान्तरगतैः समम् । तस्याः पित्रादिभिश्चक्रे, संप्रदानं पृथक्पृथक् ॥ ७९ ॥ पित्रैकस्मिन् पुरे दत्ता, महेभ्यतनुजन्मनः । पितृव्येन पुनर्भिन्नपुत्रस्याऽन्यत्र पत्तने ॥ १८० ॥ स्वपितुर्नगरे मात्राऽभीष्टसख्याः सुतस्य च । ददे भ्रात्रा पुरेऽन्यत्र, महागुणवते तु सा ॥ ८१ ॥ सर्वेऽपि स्वपुरं प्राप्ताः, कन्यादानं निजं निजम् । निर्मितं कथयामासुरन्योऽन्यं हर्षनिर्भरम् ॥ ८२ ॥ विसंवादेषु सर्व्वेषां, स्पर्द्धाबन्धो महानभूत् । यदस्माभिः कृतं कार्यं, प्रलयेऽपि किमन्यथा ? ॥ ८३ ॥ यथावृतवराणाञ्च, लग्नमेकं प्रहित्य तैः । संवाहं कर्तुमारेभे, विवाहाय सविस्तरम् ॥ ८४ ॥ अथो लग्नदिने प्राप्ते, चत्वारोऽपि वराः समम् । तत्रागता वाहिस्तस्थुर्महा-यानपरिग्रहाः ॥ ८५ ॥ परिणेतुञ्च तां सर्व्वे, सममाजग्मुरुद्धताः । विवदमाना युद्धाय, संनद्धाश्च रुषाऽभवन् ॥ ८६ ॥ तेषाञ्च युद्धसंरम्भं, पुरुषक्षयकारणम् । पित्रादीनां विरोधञ्च, वीक्ष्य नन्दा व्यचिन्तयत् ॥ ८७ ॥ धिग्मां यस्याः कृतेऽमीषां, महानर्थो समुत्थितः । मृतायां मयि सर्व्वेषां, श्रेयो भवति नान्यथा ॥ ८८ ॥ विचिन्त्यैवं चितां बाह्ये, रचयित्वैकमानसा । सा वह्निं साधयामास, सदुःखं वीक्षिता जनैः ॥ ८९ ॥ तेषामेको वरो वह्निं, प्रविवेश तया सह । द्वितीयस्तु विरागेण, दूरदेशान्तरं ययौ ॥ १९० ॥ तृतीयोऽपि तदङ्गान्यादाय तीर्थे प्रतास्थिवान् । तुर्यस्तु तस्याः शेषाङ्गोपरि स्थण्डिलकं व्यधात् ॥ ९१ ॥ याचित्वा च पुरे भिक्षां, भुक्त्वा तत्रान्नपिण्डकम् । स्वयं भुङ्क्ते प्रियामोहात्तत्रास्ते च दिवानिशम् ॥ ९२ ॥

कियत्यपि गते काले, देशान्तरगतो वरः । कापि सञ्जीविनीं विद्यां, प्राप्य तत्राययौ मुदा ॥ ९३ ॥ आकृष्य स्थण्डिलात् शेषास्थीनि विद्यानुभावतः । चक्रे पुनर्नवां कन्यां, नव्यः सहमृतोऽप्यभूत् ॥ ९४ ॥ तीर्थान्तरगतोऽप्यागात्, तदानीं तत्र दैवतः । कन्यार्थं विवदन्ते स्म, चत्वारोऽपि तथैव ते ॥ ९५ ॥ मिलिताः स्वजनाः सर्व्वे, सपौरा राजपूरुषाः । कन्याविवादः किं त्वेषां, न केनापि निवर्तितः ॥ ९६ ॥ तदैकप्रवया ज्ञाततत्स्वरूपो महामतिः । तेषां वचनमादाय, स्फुटं निर्णीतवानिदम् ॥ ९७ ॥ तीर्थेऽस्थिन्यासकृत्पुत्रः, पुनर्जन्मप्रदः पिता । सहोत्पन्नः पुनर्भ्राता, स भर्त्ता यस्तु भक्तदः ॥ ९८ ॥ तदस्यैव प्रियाऽस्त्वेषा, यः सदा भोजनं ददौ । लोकेऽपि श्रूयते भर्ता भार्याभरणपोषकृत् ॥ ९९ ॥ इत्युक्ते मुक्तवैरास्ते, सर्वे स्वस्वास्पदं ययुः । परिणीता तु सा तुर्यवरेण जनसंमतम् ॥ २०० ॥ यथाऽसौ नाभवद्विद्यातीर्थकष्टकृतामपि । भक्तदानं विना तद्वद्विना साम्यं न निर्वृतिः ॥ १ ॥ तत्त्वज्ञानं विना विद्या, तपस्या शमवर्जिता। तीर्थयात्रा मनःस्थैर्यवन्ध्या वन्ध्येव कामिनी ॥ २ ॥ प्रणिहन्ति क्षणार्द्धेन, साम्यमालम्ब्य कर्म्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ ३ ॥ वीतरागं हृदि ध्यायन्, वीतरागो यथा भवेत् । मुक्त्वाऽखिलमपध्यानं, आमरं ध्यानमाश्रयेत् ॥ ४ ॥ स्थाने याने जनेऽरण्ये, सुखे दुःखे तथा मनः । अभ्यासं ( अभ्यसेत् ) वीतरागत्वे, लयलीनं यथा भवेत् ॥ ५ ॥ गन्धः पुष्पे घृतं दुग्धे, तेजः काष्ठे यथा स्थितम् । ज्ञानं जीवे तथा किन्तु, व्यक्तीस्यात्परिकर्म्मणा ॥ ६ ॥ अघदवौघघनाघनमण्डली, सुकृतसन्ततिकल्पलतावनी । विशदधर्मजनन्यमितस्फुरत्गुणगणा करुणा जयताच्चिरम् ॥ ७ ॥ देशनान्ते नृपोऽपृच्छत्सत्वरं भगवन्वद । विद्यते कियदायुर्मे, तदहं श्रोतुमुत्सुकः ॥ ८ ॥ गुरुरूचे महाराज ! कार्यं साधय सत्वरम् । मासमेकं भवदायुश्चिरायुर्नास्ति ते नृप ! ॥ ९ ॥ एवं मुनिमुखाच्छ्रुत्वा, नत्वा

गत्वा च वेश्मनि । राज्ये संस्थाप्य पुत्रञ्च, शिक्षामित्थं ददौ नृपः ॥२१० ॥ यतः—द्यूतादिव्यसनं खलाभिगमनं विश्वस्तविप्लावनम्, वेषाडम्बरमण्डनं कलहनं शक्तैः श्रिते कोपनम् । अन्याये कथनं कृतापलपनं दोषानृतख्यापनम्, स्वश्लाघाघनमन्यदारगमनं त्याज्यं त्वया निन्दनम् ॥ ११ ॥ शिक्षामुक्त्वेति भूमीन्द्रो, दत्त्वा दानं यथाविधि । सचिवादीननुज्ञाप्य, ततो जग्राह संयमम् ॥ १२ ॥ सुचिरं तीव्रचारित्रं, स प्रपाल्य शिवं ययौ । रत्नपालस्ततो राजा, प्रजाः सुखमपालयत् ॥ १३ ॥ शृङ्गारसुन्दरीमुख्यास्तस्य राज्यः सहस्रशः । अजायन्त समन्ताभिर्भोगान् बुभोज सोऽष्टधा ॥ १४ ॥ यतः—सुगन्धं वनिता वस्त्रं, गीतं ताम्बूलभोजनम् । वाहनं मन्दिरं शय्या, अष्टौ भोगाः प्रकीर्त्तिताः ॥ १५ ॥ सुभोज्यं गीतकाव्यञ्च, कथाकौश्चनकामिनी । उत्तमानां विशेषेण, साधारणसुखानि षट् ॥ १६ ॥ विषयार्णवमग्नोऽसौ, किञ्चित् जानाति नापरम् । निश्चिन्त एव नारीषु, गीतनृत्यादितत्परः ॥ १७ ॥ स्थापितो राज्यचिन्तायां, सचिवो जयसञ्ज्ञकः । तस्मिन्भारं समारोप्य, तस्थौ शक्र इव स्वयम् ॥ १८ ॥ सार्धं शृङ्गारसुन्दर्य्या, भुञ्जन् वैषयिकं सुखम् । वासरान् गमयामास, स दोगुन्द इवामरः ॥ १९ ॥ अपत्यमङ्गशुश्रूषा, भोगः स्वजनगौरवम् । गृहकर्म्मनियोगश्च, स्त्रीवल्ल्याः फलपञ्चकम् ॥ २२० ॥ गुणरत्नाकरस्यापि, भृशं विषयसेवनम् । रत्नपालस्य दोषोऽभूत्, निर्म्मलः को हि सर्व्वथा ? ॥ २१ ॥ यतः—चन्द्रे लाञ्छनता हिमं हिमगिरौ सिन्धौ जले क्षारता, अर्कस्तीक्ष्णकरः कटुर्मलयजः पङ्कं जले विद्यते । नो दुग्धा करिणी तथाऽहिलतिका पुष्पैः फलैर्वर्जिता, दुर्दैवेन विडम्बितं जगदिदं रत्नं सदोषीकृतम् ॥ २२ ॥ समता सर्वकार्येषु, संसारे हि शुभावहा । सभ्यैरिति निषिद्धोऽपि, नात्यजद्व्यसनं नृपः ॥ २३ ॥ पुण्यपापानुभावेन, सुखदुःखस्य संभवः । कर्म्मानुसारिणी बुद्धिः, सिद्धिर्भ-

वति तादृशी ॥ २४ ॥ राज्ये लुब्धः पुरा मन्त्री, किं पुनस्तत्समर्प्पणे । सत्य आभाणको जातो, बिडाले दुग्धरक्षणम् ॥२५॥ अन्यदा सचिवो लोलो, राज्ञीरूपविमोहितः । न विवेद क्षुधां तृष्णां, कामार्तः आप नो रतिम् ॥ २६ ॥ एकदा तस्य भाग्येन, मिलितः सिद्धपूरुषः । तेन दत्ता वरा विद्या, अवस्वापनिकाभिधा ॥ २७ ॥ ग्रासस्य वृद्धिकरणात्, स्वीकृता राजसेवकाः । स्वामिद्रोहो धृतस्तेन, पापिना राज्यलोभतः ॥ २८ ॥ निद्राञ्च स्वापिनीं दत्त्वा, पल्यङ्कस्थो नृपो निशि । आनीतो मन्त्रिणाऽरण्ये, यावन्मारयते च सः ॥ २९ ॥ तावत्तस्य नरेन्द्रस्य, दृढायुरनुभावतः । व्योम्नि वाणी समुत्पन्ना, मा मा भो भो इति स्फुटा ॥ २३० ॥ नष्टो वाणीभयान्मन्त्री, सेवकाश्च दिशो दिशम् । मन्त्रिणाऽधिष्ठितं राज्यमन्तःपुरसमन्वितम् ॥३१॥ शृङ्गारसुन्दरीमेकां, विना राज्योऽपरा बलात् । सर्व्वा बिडम्बितास्तेन, कामान्धेन कुकर्म्मणा ॥ ३२ ॥ शृङ्गारसुन्दरी बाढं, शीलव्रतपरायणा । बहुधाऽभ्यर्थ्यमानापि, न मेने तस्य तद्वचः ॥ ३३ ॥ कामक्रोधवशात्तस्या, अङ्गे पञ्च शतान्यथ । कशाघातान्स दुष्टात्मा, मोचयामास सर्व्वदा ॥ ३४ ॥ तस्या रूपे मोहितस्य, कामिनस्तस्य नो दया । न लज्जा न च सौन्दर्यं, न दाक्षिण्यं न धर्म्मधीः ॥ ३५ ॥ यतः—कामी न लज्जति न पश्यति नो शृणोति, नोऽपेक्षते गुरुजनं स्वजनं परं वा । गच्छाग्रतः कमलपत्रविशालनेत्रे !, विन्ध्याटवीप्रतिदिशो मम राजमार्गः ॥ ३६ ॥ सलज्जः सदयस्तावत्सुविद्यः सुगुणः सुधीः । यावत्कामवशो नाङ्गी, अहो कामो जगज्जयी ॥ ३७ ॥ विविधा वेदनास्तेनाधमेनास्याः कृता भृशम् । न तु द्विधा कृतं चित्तं, स्थिरीभूतं निजं व्रते ॥ ३८ ॥ सन्दंशैर्मांसखण्डानि, त्रोटितानि दुरात्मना । मासमेकं महाकष्टे, सती सैवं कदर्थिता ॥ ३९ ॥ तथापि सा तद्वचनं न मेने, प्राणाधिकं शीलधनं त्वरक्षत् । वातैर्घनैः किं कनकाद्रिशृङ्गं, तुङ्गं पतत्यत्र कदा धरित्र्याम् ॥ २४० ॥

अन्यदा तस्य दुष्टस्य, कोऽपि दत्तोऽवदत्सुहृत्। हे मित्र! ते हितं वच्मि, किं हंसि त्वं सतीमिमाम्? ॥ ४१ ॥ अस्या रोषानलाद्रे रे, त्वं भविष्यसि भस्मसात्। मुनीनाञ्चापि देवानां, सतीशापो हि दुस्सहः ॥ ४२ ॥ सतीशीलस्य माहात्म्यात्, ज्वलनो जलतां व्रजेत्। सर्प्पः सुपुष्पमालाभो, विषं भवति चामृतम् ॥ ४३ ॥ सिंहव्याघ्रपिशाचाश्च, यक्षव्यन्तरराक्षसाः। नश्यन्त्येव सतीनाम्ना, तद्रेखां लङ्घयन्ति न ॥ ४४ ॥ सतीशीलप्रभावं तं, शृणु त्वं सावधानतः। सत्याः शापाद्विपन्नं हि, विद्याधरकुटुम्बकम् ॥ ४५ ॥ तथा च–पुरा रत्नपुरे राजा, रामो राज्यमपालयत्। धनदत्तोऽभवत्तत्र, श्रेष्ठीशो राजमानितः ॥ ४६ ॥ धनश्रीरिति तद्भार्या, लावण्यजलकूपिका। सती शीलरता नित्यं, पतिभक्ता प्रियंवदा ॥ ४७ ॥ तया समं सदा श्रेष्ठी, बुभोज विविधं सुखम्। तयोर्देवीसमा जाता, सुता सौभाग्यदीपिका ॥ ४८ ॥ लालिता पालिताऽत्यन्तं, पाठिता भारतीव या। संप्राप्तयौवना साथ, सञ्जाता जनमोहिनी ॥ ४९ ॥ पुरे कनकसंज्ञेऽभूत्तदा श्रेष्ठी धनावहः। नराणां गुणिनां मुख्यस्तत्पुत्रो नरकुञ्जरः ॥ २५० ॥ सोऽभूत्सर्वकलायुक्तो, विरक्तः परदारतः। तस्मै वराय सा दत्ता, धनदत्तेन नन्दिनी ॥ ५१ ॥ गता श्वशुरगेहे सा, गवाक्षे संस्थिताऽन्यदा। विद्याधरेण केनापि, दृष्टा व्योमनि गच्छता ॥ ५२ ॥ तत्राययौ स रागान्धश्चाटुवाक्यैर्जजल्प च। स्वरूपं बहुभङ्गीभिर्दिव्यशक्त्या च दर्शितम् ॥ ५३ ॥ मनसाऽपि वचस्तस्य, न मेने सा मनस्विनी। न ददौ चोत्तरं किञ्चित्, पुनरूचे स पापधीः ॥ ५४ ॥ अहं कामभुजङ्गेन, दष्टो दुष्टेन मर्मणि। वचोऽमृतेन मां स्वस्थं, कुरु त्वं विषनाशनात् ॥ ५५ ॥ पञ्चबाणप्रहारस्य, व्यथा जाता घना मम। संश्लेषं तव देहस्य, करिष्येऽहं बलादपि ॥ ५६ ॥ यावदुक्त्वेति विद्याभृत्, शीलभङ्गङ्करोत्यसौ। तावत्तया

बभाषेऽथ, रे पापिन् ! शृणु मद्वचः ॥ ५७ ॥ सत्याः शीलव्रतस्य त्वं, भङ्क्तुं समुद्यतः । तेन पापेन शापेन, क्षयं यास्यसि तत्क्षणात् ॥ ५८ ॥ तव राज्यश्च राष्ट्रश्च, पुत्रप्रियतमायुतम् । प्रयातु प्रलयं सर्व्वं, मम शापेन वेगतः ॥ ५९ ॥ इति तस्या वचः श्रुत्वा, भूयो विद्याधरोऽब्रवीत् । दिवसोऽस्त्यधुना मुग्धे !, समेष्यामि पुनर्निशि ॥ २६० ॥ तदाऽहं त्वां हरिष्यामि, यास्यामि निजपत्तने । त्वया सह रमिष्ये च, तदा त्वं किङ्करिष्यसि ? ॥ ६१ ॥ ततः सोहगदेव्याह, मदीयवचनाद्रविः । नास्तं यास्यति तत् श्रुत्वा, गतो विद्याधरःपुरे ॥ ६२ ॥ तावत्तत्र गृहे तस्याकस्मादासीत्प्रदीपनम् । जज्वाल क्षणमात्रेण, कुटुम्बसहितं गृहम् ॥ ६३ ॥ विनष्टास्तत्क्षणादेव, गजाश्वरथपत्तयः । संभूय वैरिसैन्येन, देशोऽस्य जगृहेऽखिलः ॥ ६४ ॥ जाते तत्रैवमुत्पाते, स विलक्षो व्यचिन्तयत् । अहो किमिति सञ्जातं, अभाग्यं वर्तते मम ॥ ६५ ॥ स एकाक्युपविष्टोऽस्ति, तावत्तत्रैकखेचरः । आगत्येत्यवदन्मित्राश्चर्यं दृष्टं मया महत् ॥ ६६ ॥ अहं सुतीर्थयात्रार्थं, गच्छन्हेमपुरे गतः । दिनत्रयं बभूवाद्य, यात्यस्तं तत्र नो रविः ॥ ६७ ॥ जनास्तत्र प्रकुर्व्वन्ति, शान्तिकं पौष्टिकं पुनः । तथैव तत्र मार्त्तण्डो, निश्चलोऽस्ति भयावहः ॥ ६८ ॥ श्रुत्वैवमश्ङ्कितो विद्याधरः चित्ते व्यचिन्तयत् । नूनं सत्या वचः सत्यं, सर्वनाशे करोमि किम् ? ॥ ६९ ॥ यतः—किं मुण्डिते मूर्ध्नि मुहूर्त्तपृच्छा, गतोदके किं खलु सेतुबन्धः । प्राणे विशीर्णे द्विदलं त्यजेत किं, किं पृच्छ्यते वेश्म निपीय नीरम् ? ॥ २७० ॥ तथापि तत्र गत्वाऽहं, नत्वा सतीं स्वदूषणम् । क्षमयामि महाशापादात्मानं मोचयामि च ॥ ७१ ॥ ततो गत्वा सतीं नत्वा, क्षमयित्वा च सोऽब्रवीत् । शापस्यानुग्रहं मातः !, कुरु सन्तो न रोषिणः ॥ ७२ ॥ यतः—पीड्यमानोऽपि माधुर्यमुद्गिरत्येव सज्जनः । छिन्नो निपीलितः क्राथीकृतोऽपीक्षुतरुर्यथा ॥ ७३ ॥ मेलयित्वा

ततः सर्वान्, लोकांस्तत्पुरवासिनः। तेषां पुरो जगादेति, भो भोः! शृणुत मद्वचः ॥ ७४ ॥ वचसापि मया चक्रे, पापं तत्फलितं क्षणात्। मम भस्मीकृतं सर्व्वं, अनया स्तम्भितो रविः ॥ ७५ ॥ सौभाग्यदीपिकावृत्तं, प्रोक्त्वा(क्त्या)ऽसौ तत्पदेऽपतत्। शापमोक्षस्तथा चक्रे, आतर्याहि निजं पुरम् ॥ ७६ ॥ तत्र राज्यञ्च लक्ष्मीञ्च, प्राप्स्यसि त्वं मदाशिषा। विनयात्तव तुष्टाऽहं, विनयो हि महागुणः ॥ ७७ ॥ यतः—मूलं धर्म्मद्रुमस्य द्युपतिनरपतिश्रीलतामूलकन्दः। सौन्दर्याह्वानविद्या निखिलगुणनिधिर्वश्यताचूर्णयोगः। सिद्धाज्ञामन्त्रयन्त्राधिगममणिमहारोहणाद्रिः समस्ता–नर्थप्रत्यर्थितन्त्रं त्रिजगति विनयः किं न किं साधु धत्ते ? ॥ ७८ ॥ खेचरः स्वपुरे प्राप्तो, राज्यं लब्ध्वाऽभवत्सुखी। अस्तङ्गतो रविः सत्या, जातो जयजयारवः ॥ ७९ ॥ सा विख्याता जने जाता, सती शीलेन शीलतः। राजानः किङ्करायन्ते, देवा निर्देशकारिणः ॥२८०॥

इति श्रीसौभाग्यदीपिकाकथा समाप्ता।

अतस्ते कथ्यते मित्र! यदि शृङ्गारसुन्दरी। धरिष्यति मनाक्कोपं, नो तदा तव शोभनम् ॥ ८१ ॥ महासतीमिमां राज्ञीमावर्जयितुमर्हसि। परस्त्रीगमनेन त्वं, क्षितिं यास्यसि सप्तमीम् ॥ ८२ ॥ यतः—व्यसनैकनिवासमन्दिरं, कुलमालिन्यविधानकज्जलम्। जनतावचनीयतास्पदं, परनारीगमनं न शोभनम् ॥ ८३ ॥ स्वाधीनेऽपि कलत्रे, नीचः परदारलम्पटो भवति। संपूर्णेऽपि तटाके, काकः कुम्भोदकं पिबति ॥ ८४ ॥ उक्तम्—लङ्केशोऽपि दशाननोऽपि विजिताशेषत्रिलोकोऽपि सन्, रक्षोलक्षयुतोऽपि सेन्द्राजिदपि व्यापाद्यते रावणः। निःस्वेनैव सुखेन काननजुषा सर्वेण मर्त्येन यत्, रामेणामिततेजसा जनकजाशीलस्य तद्वल्गितम् ॥ ८५ ॥ एवं मित्रमुखात् श्रुत्वा, मुक्त्वा शृङ्गारसुन्दरीम्। महच्छीलं तवेत्युक्त्वा, जयमन्त्री

ननाम ताम् ॥ ८६ ॥ विडम्बनावारिधिपारमागता, पष्ठाष्टमाचाम्लतपस्सु तत्परा । सत्कुङ्कुमस्नानविलेपनादिकं, सा वर्जयन्ती यतिनीव संस्थिता ॥ ८७ ॥ यतः—अन्येद्युरेकं सुनिमित्तविज्ञं, पप्रच्छ राज्ञी निजभर्तृयोगम् । मिलिष्यतीत्येप जगाद वार्त्तां, तयाऽऽशया सा हि बभार देहम् ॥ ८८ ॥ जयनामाथ सोऽमात्यो, रत्नपालपदे स्थितः । राज्यङ्करोति पापात्मा, स्वामिनो द्रोहकारकः ॥ ८९ ॥ यतः—उपकृतिरेव खलानां, दोपस्य गरीयसो भवति हेतुः । अनुकूलाचरणेन हि, कुप्यन्ति व्याधयोऽत्यर्थम् ॥ २९० ॥ रत्नपालस्तदाऽरण्ये, निद्राऽवस्वापिनीक्षये । यस्यां सुष्वाप वेलायां, तद्वेलायामजागरीत् ॥ ९१ ॥ शय्यास्थः सर्वतो यावद्विलोकयति चक्षुपा । वनमेव महत्ता-वन्महारौद्रं ददर्श सः ॥ ९२ ॥ सिंहव्याघ्रशिवाघूकगृध्रशूकरकेकिनाम् । सारसक्रौञ्चकाकानां, श्रूयन्ते यत्र निःस्वनाः ॥ ९३ ॥ मृगसैन्यानि दृश्यन्ते, कपियूथानि कुत्रचित् । सरांसि चोच्चसेतूनि, विविधा यत्र पादपाः ॥ ९४ ॥ एवं वीक्ष्य वनं राजा, चकितो हृद्यचिन्तयत् । मन्येऽहं राज्यलोभेन, मोचितो मन्त्रिणा वने ॥ ९५ ॥ भक्तं ज्ञात्वा मया तस्मै, राज्यभारः समर्पितः । विश्वस्तस्य कृतो घातस्तेन धूर्त्तेन पापिना ॥ ९६ ॥ अङ्कमारुह्य सुप्तस्य, शिरश्छेदोऽमुना कृतः । वञ्चयित्वा महाकूपे, प्रक्षिप्तोऽहं तु मुग्धधीः ॥ ९७ ॥ दुर्म्मन्त्री कर्म्मचाण्डालः, कृतघ्नः स्वामिघातकृत् । मह्यं दत्त्वेदृशावस्थां, कियद्राज्यं करिष्यति ? ॥ ९८ ॥ अथ धीरत्वमाश्रित्य, पुनश्चित्ते व्यचिन्तयत् । किङ्करिष्यत्यसौ रोरः, कर्म्मणः सर्व्वकारणम् ॥ ९९ ॥ यस्मिन्देशे यदा काले, यन्मुहूर्त्ते च यद्दिने । हानिर्वृद्धिः सुखं दुःखं, यद्भाव्यं तत्तदा भवेत् ॥ ३०० ॥ न मन्त्रा न तपो दानं, न मित्राणि न बान्धवाः । शक्नुवन्ति परित्रातुं, नरं कालेन पीडितम् ॥ १ ॥ उक्तञ्च—अकारणं सत्त्वम-

कारणं गुणा, रूपं यशो वीर्यधनान्यकारणम्। अकारणं शीलमकारणं कुलं, पुरा हि चीर्णं नृषु कर्म्म कारणम् ॥ २ ॥
इत्यादि बहुधा ध्यात्वा, समुत्तस्थौ स सत्त्ववान्। मन्दं मन्दं चचालाग्रे, पर्वतोऽग्रे च वीक्षितः ॥ ३ ॥ आरुरोह गिरेः शृङ्गं,
नरं बद्धं ददर्श च। मृतावस्थागतं दृष्ट्वा, कृपयाऽच्छोटयत्स तम् ॥ ४ ॥ वालिता चेतना वातै, राज्ञा पृष्टश्च मानवः। भद्र!
त्वं केन बद्धोऽत्र? स्ववृत्तं ब्रूहि मूलतः ॥ ५ ॥ कृत्वाऽञ्जलिं पुमान्प्रोचे, शृणु मे बन्धकारणम्। वैताढ्ये दक्षिणश्रेण्यां, पुरे
गगनवल्लभे ॥ ६ ॥ सुगन्धवल्लभो राजा, प्रौढो विद्याधरेश्वरः। हेमाङ्गदोऽहं तत्पुत्रो, विलसामि महासुखम् ॥ ७ ॥
नन्दीश्वरस्य यात्रार्थमन्यदा सह कान्तया। चलितोऽहं रिपुर्व्योम्न्यमिलद्विद्याधरः परः ॥ ८ ॥ तदाऽत्र राक्षसीविद्याबलतस्तेन
पापिना। बद्धोऽहं मम भार्याञ्चापहृत्य स ययौ रयात् ॥ ९ ॥ अधुना मम भाग्येनागतस्त्वं सत्त्ववान्नरः। अन्यथा मे कुतः
स्वामिन्! जीवितं दृढबन्धनात्? ॥ ३१० ॥ अत्रान्तरे स विद्याभृत्, तत्पत्नीसंयुतः पुनः। आगतस्तत्र तत्पार्श्वे, रोषारुण
उवाच च ॥ ११ ॥ अरे नरो मया बद्धो, मुक्तोऽसौ केन मानिना?। अकार्यकारिणस्तस्य, जीवितं न जरत्यहो ॥ १२ ॥
इत्युक्त्वा धावितः खड्गमाकृष्य नृपतिं प्रति। महाबाहुस्ततो राजा, सम्मुखः सङ्गरेऽभवत् ॥ १३ ॥ खड्गाखड्गि तयोर्युद्धं,
कियद्वेलां तदाऽभवत्। लाघवाद्रत्नपालेन, हत्वाऽसौ भुवि पातितः ॥ १४ ॥ राक्षसीशक्तिविद्या सा, मुक्त्वा राटिं गता
क्वचित्। हृष्टो हेमाङ्गदः कान्ताप्राप्त्या च रिपुघातनात् ॥ १५ ॥ राज्ञे प्रत्युपकारत्वान्मित्रत्वाच्चौषधीद्वयम्। दत्त्वा
तयोर्जगादेति, महिमानं स खेचरः ॥ १६ ॥ सर्प्पस्यैषा विषहरा, परा च जनमोहिनी। इत्युक्त्वा च नृपं नत्वा, सप्रियः
स्वपुरं ययौ ॥ १७ ॥ राजा लात्वौषधीयुग्मं, चचालैकदिशं प्रति। विलोकयन् वनश्रेणीं, वेणीवद्वल्लिगुम्फिताम् ॥ १८ ॥

वृक्षच्छायाऽन्धकारेण, कष्टान्मार्गे व्रजन्नृपः । ददर्श पतितं वृक्षच्छायायां रोगिणं नरम् ॥ १९ ॥ दीनाननं गलन्नेत्रं, पवित्रं धर्म्मकर्म्मभिः । सुभावं श्रावकं ज्ञात्वा, वैदेशिकमरत्तकम् ॥ ३२० ॥ अयं किलान्तिमावस्थां, संप्राप्त इति दृश्यते । विचिन्त्यैवं रत्नपालः, कृपालुस्तमपालयत् ॥ २१ ॥ युग्मम् ॥ पुण्यबुद्ध्या ततस्तस्य, ददौ चाराधनामिति । क्षमयस्वाङ्गिनः सर्व्वान्, स्मर पञ्चनमस्कृतिम् ॥ २२ ॥ अर्हत्सिद्धौ मुनीन् धर्म्मं, चतुरः शरणं श्रय । श्रीसम्यक्त्वं तथा शीलं, भजस्व त्वं सुभावतः ॥ २३ ॥ कलत्रे पुत्रमित्रेषु, बन्धौ धान्ये धने गृहे । अन्येष्वपि ममत्वं यत्तत्सर्व्वं सांप्रतं त्यज ॥ २४ ॥ देहो गृहं कुटुम्बं श्रीः, सर्वं सुलभमाप्यते । अर्हदुक्तः सुधर्म्मोऽयं, दुर्लभो भुवि देहिनाम् ॥ २५ ॥ उपरोधभयक्रोधलोभक्षोभकुतूहलैः । यन्मिथ्या गदितं तत्ते, मिथ्याऽस्त्वालोचनादितः ॥ २६ ॥ जीवितव्यञ्च मृत्युञ्च, द्वयमाराधयन्ति ये । त एव पुरुषाः शेषः, पशुरेव जनः पुनः ॥ २७ ॥ यतः—त्यक्त्वा बन्धुजनादि निर्म्मलमना गृह्यान्तिमालोचना-मुच्चार्य व्रतमालिकामनशनं चादाय वीतस्पृहः । सर्वप्राणिषु निष्कषायहृदयः कृत्वा त्रिधा क्षामणां, धन्यः पञ्चनमस्कृतिस्मृतिपरः कोऽप्युज्झति स्वां तनुम् ॥ २८ ॥ शुभ-ध्यानधरो भूत्वा, मृत्वा श्राद्धः सुरोऽभवत् । कृतस्तस्याङ्गसंस्कारो, राज्ञोपकृतिकारिणा ॥ २९ ॥ यतः—उपकारकराः प्रायो विरला एव सज्जनाः । उपकारमानिनस्तु, परं सन्ति न सन्ति वा ॥ ३३० ॥ रत्नपालस्ततः पूर्वदेशं प्रति कियद्ययौ । अग्रे नगरमद्राक्षीत्साक्षाद्देवपुरं परम् ॥ ३१ ॥ यावन्मनोहरे तस्मिन्नगरे प्रविवेश सः । पटहोद्घोषणां काञ्चित्तावच्छुश्राव दूरतः

१ गृह्य इति ल्यबन्तं चिन्त्यम् ।

॥ ३२ ॥ तच्छ्रुत्वा रत्नपालेन, पप्रच्छे कोऽपि पूरुषः । पटहो वाद्यते कस्मात्ततोऽवादीन्नरोऽपि सः ॥ ३३ ॥ अस्त्यत्रैव पुरे राजा, बलवाहननामतः । तस्य रत्नवती कन्या, धन्या नारीजनेऽखिले ॥ ३४ ॥ यौवने सा समायाता, गता चाद्य सरोवरे । तत्र कृत्वा जलक्रीडां, विनोदाय वनेऽविशत् ॥३५॥ रममाणा सखीयुक्ता, वने सा दैवयोगतः । दष्टा दुष्टेन सर्प्पेण, वेगेन प्राविशत् पुरे ॥ ३६ ॥ उपाया बहवो राज्ञा, विषनाशाय कारिताः । मन्त्रौषधैर्गुणो नासीद्विषेणात्यन्तघारिता ॥ ३७॥ वादयेन्नगरे भूप, इत्युक्त्वा पटहं ततः । जीवापयति यः कन्यामेषा तस्यैव दीयते ॥ ३८ ॥ श्रुत्वेति रत्नपालेन, संस्पृष्टः पटहस्ततः । आनीतः स नृपस्याग्रे, दर्शिता चास्य कन्यका ॥ ३९ ॥ रससेकात्तदौषध्याः, सज्जीचक्रे कनी चणात् । बलवाहनभूपेन, हर्षात्तां स विवाहितः ॥ ३४० ॥ अर्धराज्यं ददे दत्ता, हस्त्यश्वरथपत्तयः । रत्नपालस्तदा भूपो, मार्ग्गणैरुपलाचितः ॥ ४१ ॥ ततः प्रमुदितोऽवादीद्बलवाहनभूपतिः । अहो मे भाग्ययोगोऽयं, घृतं घेवरमध्यगम् ॥ ४२ ॥ पयोमध्ये सिताचोदो, मिलिते मणिकाञ्चने । अनयोः सदृशो योगो, मत्सुतारत्नपालयोः ॥४३॥ राज्यभ्रष्टेन भूपेन, परिणीता नृपाङ्गजा । लब्धं राज्यं विदेशेऽपि, पुण्यैः किङ्कि न संभवेत् ? ॥ ४४ ॥ यतः—धर्म्मसिद्धौ ध्रुवा सिद्धिर्द्युम्नप्रद्युम्नयोरपि । दुग्धोपलम्भे सुलभा, संपत्तिर्दधिसर्प्पिषोः ॥ ४५ ॥ अथान्यदा रत्नपालो, जजागार निशात्यये । सस्मार पैतृकं राज्यं,हृतं यद्दुष्टमन्त्रिणा ॥ ४६ ॥ दूहा—बेटइ जायइ कवण गुण, अवगुण कवण मूएण । जइ बप्पीकी भूंहडी, चंपिज्जइ अवरेण ॥ ४७ ॥ श्वशुरं तमनुज्ञाप्य, रत्नवत्या च संयुतः । चतुरङ्गचमूयुक्तश्चचाल स्वपुरं प्रति ॥ ४८ ॥ स्वराज्यवालनकृते, सोऽविच्छिन्नप्रयाणकैः । वनमध्ये गतः क्वापि, कटकं स्थापितं निशि ॥ ४९ ॥ जजागार निशीथे च, गीतं शुश्राव सुन्दरम् । उत्थाय कौतुकी भूपोऽ-

ऽचालीद्गीतानुसारतः ॥ ३५० ॥ वंशवीणाध्वनिं शृण्वन्, गच्छन्मार्गे ददर्श सः । प्रासादं पुण्ययोगेन, मध्ये यावद्ययौ नृपः
॥ ५१ ॥ विद्याधर्यौ वरास्तावद्विनोदङ्गीतनृत्ययोः । कृत्वा नत्वा जिनान् स्तुत्वा, गताः स्थानं निजं निजम् ॥ ५२ ॥
तन्मध्ये दिव्यवेषैका, रूपरेखाविमोहिनी । विमानस्था च गच्छन्ती, दृष्टा राज्ञा सखीवृता ॥ ५३ ॥ ततो जिनालये राजा,
प्रविश्य विधिवज्जिनम् । ववन्दे परया भक्त्या, स्तुतिमेवञ्चकार च ॥ ५४ ॥ विमुक्ता(च्या)खिलसङ्कल्पमेकतानतया स्थितः ।
सद्ध्यानपरमानन्द, नमस्तेऽस्तु जिनेश्वर ॥ ५५ ॥ केवलादर्शसंक्रान्तलोकालोकाविलोकन । देव ! तुभ्यं नमस्तस्मै, कस्मै-
चित्परमात्मने ॥ ५६ ॥ प्रसीद कुरु वात्सल्यमनुकम्पां विधेहि मे । येन शाम्यन्ति दुर्व्वाराः, सद्यो भावमहारुजः ॥ ५७ ॥
काव्यम्—ये दारिद्र्योपहतवपुषो ये च दौर्भाग्यदग्धा, ये वा शत्रुव्यसनविकला ये च मूर्खत्वतप्ताः । ये वा केचिज्जिनवर !
भृशं पीडिता दुःखभारै–स्तेषामेकस्त्वमसि शरणं तर्पितानामिवाम्भः ॥ ५८ ॥ इत्थं स्तुत्वा जगन्नाथमादिनाथं जिनेश्वरम् ।
मन्यमानः सनाथं स्वं, वलितो नृपतिर्यदा ॥ ५९ ॥ सौभाग्यमञ्जरीनामसंयुतं वलयं तदा । दृष्ट्वैकं मण्डपे राजा, गृहीत्वा
कटके ययौ ॥ ३६० ॥ सौभाग्यमञ्जरी कासौ, लब्धं यद्वलयं मया । एवं चिन्तयतो राज्ञो, विभाता यामिनी चिरात्
॥ ६१ ॥ प्रातश्चचाल सेनायुक्, स्वदेशान्तर्गतो रयात् । जयस्य प्रेषितो दूतः, पाटलीपुरपत्तने ॥ ६२ ॥ तेनोक्तं हे जया-
मात्य ! तव स्वामी समागतः । त्वं गत्वा संमुखो राज्यढौकनेन भजस्व तम् ॥ ६३ ॥ क्रोधी मानी जयोऽवादीत्, कः स्वामी
कस्तु सेवकः । वीरभोग्या धरेत्युक्त्वाययौ युद्धाय संमुखः ॥ ६४ ॥ जातं युद्धं तयोर्घोरं, भग्नं सैन्यं जयस्य च । क्षुद्रचित्तो
जयोऽमुञ्चन्निद्रां वस्वापिनीं ततः ॥ ६५ ॥ निद्रया घुर्म्मितान् दृष्ट्वा, स्वभटान्प्रबलानपि । रत्नपालोऽपि भूपालस्तदा चिन्ता-

तुरोऽभवत् ॥ ६६ ॥ इतश्चाराधना यस्य, राज्ञा दत्ता पुरा वने । स वृद्धश्रावको मृत्वा, समुत्पन्नः सुरालये ॥ ६७ ॥
सोऽवधिज्ञानतो ज्ञात्वा, राज्ञश्चिन्तां समागतः । प्रकटीभूय चावादीद्वेत्सि मां रत्नपाल ! भोः ॥ ६८ ॥ रत्नपालः सचिन्त-
त्वाददृष्टसुरदर्शनात् । नोपलक्षति तं तेन, न किञ्चिदुत्तरं ददौ ॥ ६९ ॥ कृत्वा श्रावकरूपं तद्देवः प्रोचेऽथ मित्र किम् ।
उपलक्षसि मां वा नोपलक्ष्योचे नृपस्तदा ॥ ३७० ॥ हुं ज्ञातं त्वं मया पूर्व्वं, ग्लानत्वे प्रतिपालितः । श्राद्धमित्रं भवान्
दृष्टो, देवरूपोऽद्य पुण्यतः ॥ ७१ ॥ तस्य देवस्य माहात्म्यान्नष्टा निद्राऽखिला क्षणात् । भटाः सर्व्वे प्रबुद्धास्ते, जाता युद्धाय
सोद्यमाः ॥ ७२ ॥ युध्यमानो हतो मृत्वा, जयोऽगात् सप्तमावनौ । ततश्च्युत्वाऽभवत्सर्प्पः, पञ्चमीमगमत्पुनः ॥ ७३ ॥
तेन भूरिभवेष्वेवं, भुक्तं पापफलं महत् । प्रायः क्षिपति पापात्मा, कष्टतः कर्म्मसञ्चयम् ॥ ७४ ॥ रत्नपालोऽथ भूपालः,
कृपालुः सज्जने जने । प्रविवेश प्रहर्षेण, पाटलीपुरपत्तने ॥ ७५ ॥ आकार्यमाणा नवतूर्यनादैर्नार्य्यः स्वकार्यं सकलं
विमुच्य । महीन्द्रमालोकयितुं विलोला, जालान्तरालाभिमुखं प्रचेलुः ॥ ७६ ॥ रवेरुपरि किन्तेजो, वायोरुपरि को बली ।
मोक्षस्योपरि किं सौख्यं, कश्च शूरस्तवोपरि ॥ ७७ ॥ यतः—पुण्यं पूर्व्वकृतं पुनः प्रकटितं जातं जगन्मङ्गलम्, स्वं राज्यं
स्वबलेन वालितमहो ध्वस्तो जयो येन च । देवो मित्रमभूत्ततोऽस्य बलतः कुर्व्वन्ति सेवां नृपा, अन्येऽपि प्रबलास्तदा हि
मिलिता लोका इति प्रोचिरे ॥ ७८ ॥ हृष्टचित्ता तदा जाता, सती शृङ्गारसुन्दरी । महातपः प्रकुर्व्वन्ती, दृढा ब्रह्मव्रते निजे
॥ ७९ ॥ पतिं दृष्ट्वा तया चक्रे, विकृत्यादेः सुपारणम् । सुशृङ्गारा पुनः पट्टराज्ञी सा स्थापिता सती ॥ ३८० ॥
देवसांनिध्यतो राज्ञाप्यनम्राः सर्व्वभूभुजः । नामिता निजपादाग्रे, चक्रे राज्यं त्वकण्टकम् ॥ ८१ ॥ सुवर्णरत्नकोटीनां,

शतसप्तकसङ्ख्यया । नृपगेहेऽकरोद्देवो, वृष्टिं पुण्यात्सुरा वशाः ॥ ८२ ॥ इत्थमेकातपत्रत्वं, प्राज्यं राज्यं प्रपालय । एवं राज्ञे वरं दत्त्वा, देवो देवालयं ययौ ॥ ८३ ॥ रत्नपालनरेन्द्रोऽथ, पूर्वपुण्यानुभावतः । इन्द्रराज्यसमं राज्यं, पालयामास धर्म्मधीः ॥ ८४ ॥ एकदा च सभासीनो, राजा केन नरेण तु । विज्ञप्तो विनयाद्देवागतोऽस्त्येको गजो वने ॥ ८५ ॥ प्रेषिताः सुभटा राज्ञा, यत्रास्ति वनवारणः । गृहीत्वा गजराजस्तैर्ढौकितो नृपतेः पुरः ॥ ८६ ॥ ततो राजा गजारूढो, ययौ यावद्वनं प्रति । तावता व्योममार्गेणोत्पपात नृपयुग्गजः ॥ ८७ ॥ न तिष्ठति करी क्वापि, व्योम्नि दूरे गतः कियत् । तदा चिन्तातुरो भूपोऽपतत्क्वापि सरोवरे ॥ ८८ ॥ जलमुत्तीर्य सेतौ स, गतोऽग्रे तावदीक्षितम् । हेमरत्नमयं सौधं, साश्चर्यं च सुतोरणम् ॥ ८९ ॥ विनोदाय गतो मध्ये, सुसौधे सप्तभूमिके । तत्र चन्द्रशालायां द्वौ, भस्मपुञ्जौ ददर्श सः ॥ ३९० ॥ तदग्रे कुंपकश्चैको, गजदन्तेऽवलम्बितः । दृष्टो रसभृतो राज्ञा, हृदि चैवं व्यचिन्तयत् ॥ ९१ ॥ उत्तमं दिव्यसौधं किं, कोऽसौ वा रसकुम्पकः । भस्मपुञ्जौ च कावेतौ ? कौतुकं दृश्यते महत् ॥ ९२ ॥ कौतुकाद्रसबिन्दूंस, करे कृत्वा व्यलोकयत् । पतिता बिन्दवस्तावद्भस्मपुञ्जद्वयोपरि ॥ ९३ ॥ भस्मपुञ्जद्वयोत्पन्ने, दिव्यरूपधरे स्त्रियौ । तदा दृष्ट्वा नृपः प्रोचे, के युवां भस्मसंभवे ? ॥ ९४ ॥ किं शक्ती स्वयमुत्पन्ने, किन्किन्नर्यौ च देवते । खेचर्यौ किञ्च भूचर्यौ, नार्यौ किङ्कथ्यतामृतम् ? ॥ ९५ ॥ तयोरेकाऽवदत् स्वामिन्नस्मद्वार्त्तां विनोदिनीम् । शृणु श्रुत्वा यथा याति, संशयस्तव चेतसः ॥ ९६ ॥ वैताढ्ये वरचन्द्रायां, पुर्यां स्वामी महाबलः । विद्याधरप्रिया प्रेमवत्येतयोः सुते उभे ॥ ९७ ॥ रत्नवल्लीमोहवल्लीसंज्ञके ते उभे अपि । तातेन पाठिते ताभ्यां, संप्राप्तं यौवनं क्रमात् ॥ ९८ ॥ आवां ते नागिलेनाथ, खेचरेण दुरात्मना । हृत्वाऽत्र द्रुतमानीते, कृतं सौधन्तु विद्यया

॥ ९९ ॥ यदि कापि बहिर्याति, तदावां भस्मसात्करेत् (?)। आगतो रससेकेन, पुनः सज्जीकरोति सः॥ ४०० ॥ अस्मत्स्वरूपमेवं
ते, कथितं हे नरोत्तम ! । पूर्वपुण्यानुभावेनास्माकञ्च तव दर्शनम् ॥ १ ॥ अथ तेषां मिथो जातोऽनुरागः स्नेहवार्त्तया । प्रायः
प्राग्भवसंबन्धो मनोमोहनकारणम् ॥ २ ॥ यतः—ए नयणां जाइ सरइ, पुव्वभव समरान्त । अप्पिय दिट्ठइ मुह लीयइ, पिय
दिट्ठइ विहसन्त ॥ ३ ॥ अत्रान्तरे स विद्याभृद्, हर्षपूरितमानसः । लात्वा विवाहसामग्रीं, यावत्तत्रागतो द्रुतम् ॥ ४ ॥
तावता हस्तिना तेन, तत्रागत्य स खेचरः । गृहीतः शुण्डयाऽऽकाशे, स चोत्पपात लीलया ॥ ५ ॥ पातयित्वा कराद्भूमौ,
दन्तघातैः स पीडितः । एवं व्यापादितः कष्टं, गजराजेन नागिलः ॥ ६ ॥ अस्मिन्नवसरे पुत्रीशुद्धिङ्कुर्वन्महाबलः ।
तत्र भ्रमन्भ्रमन्नागात्पुत्र्यौ द्वे ते ददर्श च ॥ ७ ॥ स्वपुत्रीसंयुतं रत्नपालं दृष्ट्वा जहर्ष सः । ऊचे च मधुरां वाणीं, शृणु
सात्त्विकशेखर ॥ ८ ॥ पुरैकदा मया पृष्ट, एको नैमित्तिको वरः । मत्पुत्र्योः को वरो भावी ? तेनेदं कथितं वचः ॥ ९ ॥
नागिलो दुष्टविद्याभृत्, हरिष्यति सुताद्वयम् । विद्यया भस्मसात्कृत्वा, रसान्नार्यौ करिष्यति ॥ ४१० ॥ तत्रैकदा रत्नपाल,
आगत्य रसबिन्दुभिः । तद्भस्मोपरिपातितैर्मूर्त्तिमत्यौ करिष्यति ॥ ११ ॥ त्वत्पुत्र्योः स वरो भावी, यस्य सांनिध्यकृत्सुरः ।
स देवो गजरूपेण, हनिष्यति च नागिलम् ॥ १२ ॥ नैमित्तिकस्य वाण्येषा, सत्या जाताऽद्य दृश्यते । इदं विमानमारुह्य,
वैताढ्यं प्रति चल्यताम् ॥ १३ ॥ आरोहति नृपो यावत्तावत्स श्राद्धदेवता । प्रादुर्भूतोऽमिलद्राज्ञः, प्रोचे च शृणु भूपते !
॥ १४ ॥ अस्य कन्याद्वयस्यापि, तव संप्राप्तिहेतवे । गजरूपं वने कृत्वाऽत्रानीतोऽसि मयाम्बरे ॥ १५ ॥ घातितः स मया
चैव, हस्तिरूपेण नागिलः । हितकारी तवैवाहं, यत्पूर्व्वं पालितस्त्वया ॥ १६ ॥ अथोत्पत्तिं प्रभावञ्च, रसस्यास्य सुहृच्छृणु ।

अनेन नागिलेनैव, साधितो मन्त्र उत्तमः ॥ १७ ॥ चतुर्विंशतिवर्षाणि, कन्दमूलफलानि च । कृत्वाहारमधोवक्त्रो, धूमपानाज्जजाप तम् ॥ १८ ॥ बलिहोमादिके सृष्टे, धरणेन्द्रो ददौ रसम् । एतस्य बिन्दुमात्रेण, लोहं भवति काञ्चनम् ॥ १९ ॥ सर्वा बाधाः प्रशाम्यन्ति, कुष्ठी स्याद्दिव्यरूपभाक् । मूर्च्छिताश्च मृता ये च, ते जीवन्ति क्षणादपि ॥ ४२० ॥ भूतादयो दुष्टदेवा, ग्रहनक्षत्रतारकाः । ते सर्व्वे वशमायान्ति, रसस्पर्शप्रभावतः ॥ २१ ॥ प्रशाम्यति महानग्निर्विषे स्थावरजङ्गमे । व्याधयो रसछट्टाभिर्यान्ति सर्व्वं वशीभवेत् ॥ २२ ॥ कृते तिलकमात्रेऽपि, रसेन रणभूमिषु । शत्रवो मित्रतां यान्ति, शान्ताः स्युः सिंहहस्तिनः ॥ २३ ॥ इत्यादि बहुधा ज्ञेयः, सप्रभावो महारसः । पूर्वपुण्यैस्त्वया प्राप्तो, मया दत्तश्च गृह्यताम् ॥ २४ ॥ स्मर्त्तव्यः समये चाहमित्युक्त्वा स तिरोदधे । दृष्ट्वा सुरस्य सान्निध्यं, चमच्चक्रे महाबलः ॥ २५ ॥ विमाने स्वसुतायुग्मं, नृपं चारोप्य खेचरः । गतो वेगेन वैताढ्ये, सुते द्वे स विवाहितः ॥ २६ ॥ श्रीरत्नपालो नृपतिः स धन्यः, कन्याद्वयं तत्परिणीय तत्र । स्थितो महासौख्यभरं बुभोज, विद्याधरैः सेवितपादपद्मः ॥ २७ ॥ तदा श्रीगगनपुरे, राजा सौगन्धवल्लभः । हेमाङ्गदोऽस्य पुत्रोऽस्ति, सुता सौभाग्यमञ्जरी ॥ २८ ॥ सा च यौवनसम्पन्ना, निष्पन्ना नरमोहना । कुलदेवी ददौ तस्यै, वलयं सर्व्वकामदम् ॥ २९ ॥ तस्या जिनालयेऽन्येद्युर्वने क्वापि निशाभरे । सखीभिः सह नृत्यन्त्याः, पतितं वलयं करात् ॥ ४३० ॥ तद्विना सा महादुःखात्सरसाहारवर्जिता । आचाम्लनिर्विकृत्यादितपसाङ्गं कृशं व्यधात् ॥ ३१ ॥ पृष्टो नैमित्तिको राज्ञा, वलयं क्व चटिष्यति ? । तेनोक्तं त्वं नराधीश !, सत्यं शृणु वचो मम ॥ ३२ ॥ नरो वलयहर्ता स, तव पुत्र्याः स्वयंवरे । मण्डपे मण्डलाधीशः, स्वयमेवागमिष्यति ॥ ३३ ॥ विवाहं चापि ते पुत्र्याः, करिष्यति न संशयः । इत्थं ज्ञानिवचः श्रुत्वा,

कृतो राज्ञा स्वयंवरः ॥ ३४ ॥ आहूताः खेचराः सर्व्वे, स्वयंवरणमण्डपे । सुगन्धवल्लभेनाथाकारितश्च महाबलः ॥ ३५ ॥ संप्राप्तः सोऽपि वेगेन, रत्नपालसमन्वितः । वलयाऽलङ्कृतं रत्नपालं कन्या ददर्श सा ॥ ३६ ॥ निजनामाङ्कितं दृष्ट्वा, वलयं स वृतो वरः । उपलक्ष्य रत्नपालं, हृष्टा हेमाङ्गदादयः ॥ ३७ ॥ तदाऽन्ये खेचराः सर्व्वे, मिथस्ते व्यमृशन्निति । पश्यतां खेचरौघानां, खेचर्या भूचरो धृतः ॥ ३८ ॥ अयुक्तमेतदत्राभूज्जलोत्तारस्तु नोऽभवत् । यदेषोऽस्मासु पश्यत्सु, भूचरः परिणेष्यति ॥ ३९ ॥ एवं विमृश्य संभूय, तेऽथ सर्व्वे रुषारुणाः । जाता युद्धाय सन्नद्धा, रत्नपालं बभाषिरे ॥ ४४० ॥ अरे अज्ञान बालस्त्वं, तव कालः समागतः । भवता भूमिचारेण, वृता विद्याधरी कथम् ? ॥ ४१ ॥ तदाशु रत्नपालेन, रसेन तिलकं कृतम्, युध्यमाना जिताः सर्व्वे, भटाश्च खेचराधिपाः ॥ ४२ ॥ सर्व्वे तिलकमाहात्म्यात्, निजाज्ञापालकाः कृताः । सुगन्धवल्लभेनाशु, विधिना स विवाहितः ॥ ४३ ॥ हेमाङ्गदेन दत्तास्तास्तस्मै विद्याश्च षोडश । रोहिणीप्रमुखास्तेन, साधिताः स्वल्पवासरैः ॥ ४४ ॥ वैताढ्ये चोभयश्रेण्योर्जिताः सर्व्वेऽपि खेचराः । महाबलसुते द्वे ते, तथा सौभाग्यमञ्जरी ॥ ४५ ॥ एवं पत्नीत्रयं नीत्वा, स विद्याधरसेवितः । दिव्यं विमानमारुह्य, संप्राप्तः स्वपुरं ततः ॥ ४६ ॥ युग्मम् ॥ काव्यम्—पुरप्रवेशो महतोत्सवेन, मन्त्र्यादिभिः कारित ईश्वरस्य । गायन्ति रामा निजगेहगेहे, प्रभौ समेते त्रिवधूयुतेऽस्मिन् ॥ ४७ ॥ प्रियाभिः सह सेवे स ( सेवते साकं ), स्वर्ग्गभोगसमं सुखम् । निरातङ्कं निजं राज्यं, पालयामास धर्म्मयुक् ॥ ४८ ॥ काव्यम्—अथान्वहं तस्य नृपस्य हेम्नो, व्ययो भवेत् यः परिकीर्त्त्यते सः । कथामपूर्वां सरसां वदेद्यः, स लक्षमेकं लभते सुवर्णम् ॥ ४९ ॥ गजाश्ववृषभोष्ट्राद्या, दुकूलचीवराण्यपि । दीयते(न्ते) प्रत्यहं ते(स्ते)षां, द्वात्रिंशल्लक्षकाञ्चनम् ॥ ४५० ॥ प्रत्यहं पुण्यकार्येषु, सप्तक्षेत्रेषु

भावतः । दत्तो विंशतिलक्षाणि, वपति स्म महामनाः ॥ ५१ ॥ सेवायां चागता भूपाः, सचिवा ये पुरोहिताः । तेभ्यो लक्षाणि दीयन्ते, षट्त्रिंशत्तेन दानिना ॥ ५२ ॥ आर्त्ते दीने निराधारे, कुब्जान्धेषु च रोगिषु । सदैकादश लक्षाणि, दीयन्ते चानुकंपया ॥ ५३ ॥ इत्थं नित्यं ददौ भूपः स्वर्णकोटीं स्वभावतः । प्रत्यहं प्राप्यते हेम, रसाल्लोहस्य वेधतः ॥ ५४ ॥ आदेशो भूभुजा दत्तः, कोशाधीशस्य निश्चितम् । स्वर्णं यत्नात्त्वया कार्यं प्रष्टव्यो न कदाप्यहम् ॥ ५५ ॥ काव्यम्—लक्ष्मीर्दानविवेकसङ्गममयी श्रद्धामयं मानसम्, धर्म्मः क्षान्तिदयामयः सुचरितश्रेणीमयं जीवितम् । बुद्धिः शास्त्रमयी सुधारसमयं वाग्वैभवोज्जृम्भितम्, व्यापारश्च परार्थसाधनमयः पुण्यैः परं प्राप्यते ॥ ५६ ॥ इत्थं नृपैः सेवितपादपद्मः, करोति राज्यं प्रबलं स्वपुण्यात् । श्रीरत्नपालो नरनायकोऽयं, सत्तेजसा राजति रत्नवत् यः ॥ ४५७ ॥

इति श्रीवीरदेशनायां श्रीधर्म्मकल्पद्रुमे चतुःशाखिके द्वितीयशीलशाखायां श्रीरत्नपालशृङ्गारसुन्दर्याख्याने

चतुर्थः पल्लवः समाप्तः ॥ ४ ॥

## ॥ अथ पञ्चमः पल्लवः ॥

तृष्णां छिन्धि भज क्षमां कुरु दयां पापे रतिं मा कृथाः, सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् । मान्या-न्मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्, कीर्त्तिं पालय दुःस्थिते कुरु दयामेतत्सतां चेष्टितम् ॥ १ ॥ शीलं दुर्गतियायिनामशकुनः शीलं सुभोगाङ्कुरः, शीलं कामशुकस्य पञ्जरनिभं शीलं भवोष्माम्बुदः । शीलं जन्मसरोविभूषण-पयोजाली श्रियामास्पदं, पाल्यं शीलमिदं गुणाम्बुधिसमुल्लासेन्दुबिम्बोपमम् ॥ २ ॥ अथ तत्र पुरे कोऽपि, कितवः कृपयोज्झितः । सत्यशौचविरक्तोऽभूद्रक्तः कपटकोटिषु ॥ ३ ॥ नामतो नरवञ्चाख्यो, रमन्द्यूतं दिने दिने । लब्धद्रव्यं जयत्येष, लोभतो रमते सदा ॥ ४ ॥ स कदा हारयेन्नैव, दैवतो वर ईदृशः । कदापि हारयेत्किञ्चित्, तद्धर्म्मांशं तृतीयकम् ॥ ५ ॥ स पुनर्व्यसनासक्तो, वेश्यागेहेषु तद्धनम् । मूढो निर्गमयत्युच्चैः, स्वेच्छया च पिबेत्सुराम् ॥ ६ ॥ नित्यं मद्यकृतां कुटचां, पाकं निष्पाद्य पूपकान् । लात्वा च चण्डिकागेहे, याति रात्रिसमागमे ॥ ७ ॥ सा चण्डी रौद्ररूपा च, दुर्निरीक्ष्या दुराशया । तस्या अङ्के स निःशूकः, पादं विन्यस्य पापधीः ॥ ८ ॥ द्वितीयं चरणं तस्या, देव्याः स्कन्धे विमुच्य सः । पूपानभक्षयद्दीपतैलेन सह निर्भयः ॥ ९ ॥ युग्मम् ॥ युक्त्याऽनया सदा भुङ्क्ते, स पूपान् तैलमिश्रितान् । तदा चण्डिक-याऽचिन्ति, दर्शयाम्यस्य वै भयम् ॥ १० ॥ विकास्य वदनं देवी, जिह्वां निष्कास्य च स्थिता । द्यूतकारस्तदा देव्याः, पूपखण्डं मुखेऽक्षिपत् ॥ ११ ॥ गिलित्वा तत्पुनर्देवी, तेनैव विधिना स्थिता । पुनर्ददौ पूपखण्डं, गिलित्वा सा तथा

स्थिता ॥ १२ ॥ रुष्टोऽवादीत्स रे रण्डे !, जिह्वां निष्कास्य किं स्थिता । त्वं दर्शयसि मे भीतिमहं तु भयवर्जितः ॥ १३ ॥ द्विवारं पूपके दत्ते, जिह्वां क्षिपसि नो मुखे । लुब्धकेभ्यो जनेभ्यो हि, न दत्ते कोऽपि किञ्चन ॥ १४ ॥ किं न श्रुतं त्वया पूर्व्वं, लोकोक्तं वचनं महत् । न संतोषं विना सौख्यं, दुःखं लौल्यं विना न हि ॥ १५ ॥ अहं पूपं न दास्यामि, जिह्वां गोपय वा न वा । यदा नागोपयज्जिह्वां, तदोचे कितवः पुनः ॥ १६ ॥ रे त्वं मे भोजने लुब्धा, पश्येदानीं ददामि यत् । निश्शूकेन ततो देव्या, जिह्वायां तेन थूत्कृतम् ॥ १७ ॥ विलक्षाऽभूत्सुरी जिह्वां, नापवित्रां मुखेऽक्षिपत् । लोकोक्तिरित्यभूत्सत्या, यद्देवाद्दानवो बली ॥ १८ ॥ प्रभातमथ सञ्जातमागतश्चार्चकस्तदा । तथाभूतां सुरीं वीक्ष्याचिन्तयत् किमिदं नवम् ? ॥ १९ ॥ प्रकृतेर्विकृतिश्चेत्स्यादेतदुत्पातकारणम् । बहिर्निष्कासिता जिह्वा, न भव्या चापि कौतुकम् ॥ २० ॥ कृत्वा दृढं कपाटं स, वलितः शीघ्रमर्चकः । नगरे नागराग्रे च, देवीवार्त्तां न्यवेदयत् ॥ २१ ॥ श्रुत्वा ते तादृशं वाक्यमसंभाव्यं हि मेनिरे । गत्वा व्यलोकयद्यावद्दृष्टं तत्कौतुकं तदा ॥ २२ ॥ कथयन्ति स्म ते पौरा, इदं ह्यदृष्टपूर्वकम् । उत्पातो जायते लोके, विपरीते सति ध्रुवम् ॥ २३ ॥ देवीवक्त्राद्बहिर्दृष्ट्वा, रसनामतिभीषणाम् । नष्टा लोकाः क्षणात्केचिद्भीरवो भयविह्वलाः ॥ २४ ॥ प्रधानपुरुषा ये च, नगरे येऽधिकारिणः । धीरास्तत्र स्थिता ऊचुर्देवीकोपोऽभवत् खलु ॥ २५ ॥ शान्तिकं पौष्टिकं तेऽथ, जपजागरणादिकम् । चक्रुर्होमविधानञ्च, सर्वं जातं हि निष्फलम् ॥ २६ ॥ यत्कृतं तेन निष्ठ्यूतं, तस्माज्जिह्वां न गोपयेत् । तत्कारणं न को वेत्ति, पुनः पौरा मिथोऽवदन् ॥ २७ ॥ अहो उत्पात एषोऽत्र, दृश्यते सबलः खलु । अथ विघ्नस्य शान्त्यर्थं, वाद्यते डिण्डिमं पुरे ॥ २८ ॥ योऽत्र धीमान्पुमान्कोऽपि, सज्जुसरसनां सुरीम् । करोति

लक्षदीनारा, दीयन्ते तस्य निश्चितम् ॥ २९ ॥ पटहोद्घोषणामेवं, श्रुत्वा द्यूतकृताऽमुना । स्पृष्टः पटह इत्युक्त्वा, रसज्ञां गोपयाम्यहम् ॥ ३० ॥ जनैर्देव्यालये नीतो, द्वारं दत्त्वा स मध्यगः । देवीं प्रति जगादैवं, जिह्वां निष्कास्य किं स्थिता ? ॥ ३१ ॥ मत्कृतं नैव जानासि, कुर्व्वेऽहं तद्विलोकय । इत्युक्त्वा लोष्टमुत्पाट्य, दुष्टो देव्याः पुरोऽवदत् ॥ ३२ ॥ रण्डे चण्डे ! त्वमात्मानं, विडंबयसि किं वृथा ? । जिह्वां गोपय मूर्तिं ते, चूर्णयाम्यन्यथाऽधुना ॥ ३३ ॥ इत्युदित्वा दृषत्खण्डं, तुण्डे यावद्विमुञ्चति । तावद्व्यचिन्तयच्चित्ते, सा प्रचण्डापि चण्डिका ॥ ३४ ॥ निःशूकोऽयमनर्थं हि करोति क्रियतेऽस्य किम् ? । ततो झटिति सा देवी, स्वरसज्ञामगोपयत् ॥ ३५ ॥ तदाऽथ मुदिता लोका, गतचिन्ताभयासुखाः । कितवञ्च प्रशंसन्ति, जने जातो जयारवः ॥ ३६ ॥ दत्तं दीनारलक्षं तत्कितवाय जनैस्तदा । ततस्तद् द्यूतकारेण, व्यसनेन विनाशितम् ॥ ३७ ॥ यतः—वेश्यासक्तस्य चोरस्य, द्यूतकारस्य पापिनः । अन्यायोपार्जकस्यैव, पुंसो लक्ष्मीः स्थिरा न हि ॥ ३८ ॥ दिनेनैकेन तेनापि, लक्षं लब्धं विनाशितम् । द्यूतं वेश्या विवादश्च, विपरीते विधौ खलु ॥ ३९ ॥ यतः—कौपीनवासा रजसाऽवकीर्णः, कपालपाणिर्विरसान्नभोजी । द्यूतक्रियां चण्डिकयादृतो यः, स्यादीश्वरः श्रीरहितोऽपि मर्त्यः ॥ ४० ॥ कितवः पूर्वयुक्त्यैव, निश्यागत्य सुरीगृहे । भक्षयेत्सर्वदा पूपान्, ततो देवी व्यचिन्तयत् ॥ ४१ ॥ कथं निवारयाम्येनं, किं वोपायं करोम्यहम् । अग्रे विडम्बिताऽनेन, चिन्ता मे महती हृदि ॥ ४२ ॥ हुं ज्ञातं च मयोपायो, लब्धो दिव्यानुभावतः । अस्यागमनवेलायां, दीपो निष्कास्यते बहिः ॥ ४३ ॥ गते दीपे कुतस्तैलं, भयं चास्य भविष्यति । ध्यात्वैवं सा स्थिता यावत्तावत् कितव आगतः ॥ ४४ ॥ दीपं प्रति गतो यावत्तावद्दीपो विनिर्ग्गतः । तदा चकितचित्तोऽयं, कितवो हृद्यचिन्तयत्

॥ ४५ ॥ अहो दीपः कथं याति, गगने चन्द्रबिम्बवत्। मां वा भापयते देवी, किं भयं निर्भयस्य मे ? ॥ ४६ ॥
किन्तु मद्भयभीतोऽसौ, दीपो याति गृहाद्बहिः। रूक्षान्पूपान् कथं भुञ्जे, मत्तो दीपः क यास्यति ? ॥ ४७ ॥
विचार्यैवं ततो दीपपृष्ठे लग्नः स निर्ययौ। दीपं प्रति जगादैवमरे त्वं क प्रयास्यसि ? ॥ ४८ ॥ यत्र यास्यसि तत्राहमाग-
मिष्यामि पृष्ठतः। तव तैलं हि गृह्णामि, भोक्ष्ये पूपानहं ततः ॥ ४९ ॥ इत्थं वदन्नसौ दीपपृष्ठलग्नो ययौ द्रुतम्। यत्र यत्र
व्रजेद्दीपस्तत्र तत्राप्ययं भ्रमेत् ॥ ५० ॥ मुखे पुनर्वदत्येवं, तिष्ठ तिष्ठ प्रदीप भोः। कथं कातरवद्यासि, प्रणष्टस्तेजसान्वितः
॥ ५१ ॥ तदा देवीप्रभावेण, प्रोचे दीपोऽपि रे शृणु। किञ्चिन्मयाऽस्ति देयं ते, पृष्ठौ लग्नोऽसि किं मम ? ॥ ५२ ॥
रे कुमानुष रे धूर्त्त, रूक्षान् भक्षय पूपकान्। अपि वार्द्धितटे यामि, तैलं दास्यामि नो परम् ॥ ५३ ॥ तदा द्यूतकरोऽ-
वादीत्, भो भो गेहमणे ! शृणु। अहं स हि कपित्थो न, यो वातेन प्रपात्यते ॥ ५४ ॥ कूपपारापतो नाहं, मठपारापतोऽपि
न। प्रतिच्छन्देन ये भीता, नश्यन्ति मठकूपतः ॥ ५५ ॥ इति श्रुत्वाऽव्रजद्दीपः, क्षणं नैव प्रतीक्षते। कितवः पृष्ठसंलग्नः,
शीघ्रगत्या चचाल च ॥ ५६ ॥ ततो दीपः पुनः प्रोचे, रे जनाचारवर्जित !। मूर्ख ! नो वेत्सि किं नृणां, सत्त्वं दैवैः समं
भवेत् ? ॥ ५७ ॥ स्वसामर्थ्यं विना वादं, यः कुर्यान्महता सह। स विनश्यति वेगेन, वदन्ति विबुधा इति ॥ ५८ ॥
पश्चाद्याहि ततोऽहं तु, यास्यामि किल सागरम्। तैलबिन्दुं न दास्यामि, वृथा भोः खिद्यसे कथम् ? ॥ ५९ ॥ कितवः स्माह
रे दीप !, किं जल्पसि पुनः पुनः। तत्र तत्रागमिष्यामि, यत्र यत्र गमिष्यसि ॥ ६० ॥ किं दुःसाध्यं सत्त्ववतां, दुस्तरो न
महोदधिः। मेरुरुच्चैस्तरस्तावन्नारोहेद्यावदुद्यमी ॥ ६१ ॥ विवादं कुर्व्वतोरेवं, तयोर्मार्ग्गे च गच्छतोः। जगाम सकला

रात्रिरुदयं प्राप भास्करः ॥ ६२ ॥ सूर्यकान्त्या गतोद्योतो, दीपो घनवने क्वचित् । वञ्चयित्वा धूर्त्तदृष्टिमदृष्टी(श्यी)भूय संस्थितः ॥ ६३ ॥ कितवोऽचिन्तयत्तावत्, यावद्दीपं ददर्श न । मामप्यहो वञ्चयित्वा, गतो गृहमणिः क्वचित् ॥ ६४ ॥ धूर्त्तोऽहं वञ्चितोऽनेन, सत्यश्च स्ववचः कृतम् । सबला दैवती शक्तिर्लोकोक्तिरिति नान्यथा ॥ ६५ ॥ शिक्कात्पतितो ह्योतुर्यूथभ्रष्टो यथा मृगः । घातभ्रष्टो यथा शूरस्तालत्यक्तो यथा नटः ॥ ६६ ॥ च्युतः सत्पुरुषः सत्यात्, शाखाभ्रष्टो यथा कपिः । यथा स्फालच्युतः सिंहः, कितवः खेदभाक् तथा ॥ ६७ ॥ युग्मम् ॥ सोऽचिन्तयत्तदा धूर्त्तोऽप्यहं दीपेन वञ्चितः । काकोऽपि वञ्च्यते केन, सत्या जातेति लोकवाक् ॥ ६८ ॥ निष्कास्य दीपपृष्ठे हि, दूरं नीत्वाऽत्र कानने । क्षिप्तोऽहं चण्डिकादेव्या, दत्तं निःशूकताफलम् ॥ ६९ ॥ दध्यौ दीपागमे चण्डी, मया वैरी विडंबितः । तैलादानाद्यवज्ञां स, न करिष्यत्यतः परम् ॥ ७० ॥ अथ द्यूतकरश्चिन्तापरस्तस्मिन् वने भ्रमन् । अग्निकुण्डं ज्वलद्दिव्यं, ददर्श क्वापि चित्रकृत् ॥ ७१ ॥ दृष्टं तेन च तत्पार्श्वे, नारीयुग्मं मनोहरम् । नवयौवनसंपन्नं, तर्जयत्रिदशस्त्रियः ॥ ७२ ॥ तदग्रे तु नरो दृष्ट, एको विकलमूर्त्तिभाक् । दीनाननः कृशश्चित्रं, तद् दृष्ट्वा कितवोऽवदत् ॥ ७३ ॥ हे भद्रे ! के युवां नार्यौ, वनस्थे नरसंयुते ? । मदग्रे निजवृत्तान्तः, कथ्यतां मेऽस्ति कौतुकम् ॥ ७४ ॥ धूर्त्ताकृतिं नरं दृष्ट्वा, न नार्यौ किञ्चिदूचतुः । तस्थतुर्मौनमाश्रित्य, कितवः प्राप नोत्तरम् ॥ ७५ ॥ ततो मार्गेण तेनात्मपदश्रेण्यनुसारतः । स्वस्थानं प्रति चलितः, संप्राप्तश्च निजं पुरम् ॥७६॥ सभायां कितवो गत्वा, रत्नपालनरेशितुः । कथयामास तां वार्त्तामपूर्व्वां कन्ययोर्द्वयोः ॥ ७७ ॥ अपूर्वां यो वदेद्वार्त्तां, स्वर्णलक्षं स भूपतिः । तस्मै दत्ते ततो हेमलक्षं द्यूतकृते ददौ ॥ ७८ ॥ अथ तेन समं राजा,

कौतुकी तत्र कानने । ययौ च कन्यकायुग्मं, दृष्ट्वा पप्रच्छ सादरम् ॥ ७९ ॥ वनस्थे के युवां नार्यौ ? कोऽयं विकलमानवः ? । किमेतदग्निकुण्डञ्च, पार्श्वे यूयं कथं स्थिताः ? ॥ ८० ॥ कथ्यतां निजवृत्तान्तो, ममास्ति कौतुकं महत् । राजाऽहं रत्नपालाह्वः, पाटलीपुरनायकः ॥ ८१ ॥ इत्थं पृष्टे नृपेणाथ, किञ्चिद् ध्यात्वा निजे हृदि । तयोरेकाऽवदत्कन्या, शृण्वस्माकं कथां नृप ! ॥ ८२ ॥ वैताढ्ये चोत्तरश्रेण्यां, विश्वावसुपुरे वरे । वसुगन्धर्व्वनामाऽस्ति, राजा खेचरनायकः ॥ ८३ ॥ सुरसेना प्रिया तस्य, शीलादिगुणशालिनी । देवसेना च गन्धर्व्वसेना च द्वे तयोः सुते ॥ ८४ ॥ ज्ञात्वा विवाहयोग्ये ते, पित्रा पृष्टो निमित्तवित् । मत्पुत्र्योः को वरो भावी ?, ज्ञानेन वद कोविद ॥ ८५ ॥ नैमित्तिकस्ततोऽवादीत्, शृणु राजन् ! यथा वरः । यो भविष्यति ते पुत्र्योस्तथैव कथयाम्यहम् ॥ ८६ ॥ श्रीपाटलीपुरासन्ने, प्राच्यां दिशि महावने । वह्निकुण्डं ज्वलद्वह्नि, प्रचण्डं प्रकटीकुरु ॥ ८७ ॥ तस्योपकण्ठमेते द्वे, प्रकुर्व्वन्त्यौ महातपः । वने तस्मिन्महाराज !, तव पुत्र्यौ निवेशय ॥ ८८ ॥ मणीमन्त्रौषधादीनां, सान्निध्येन विना नरः । योऽग्नौ स्नास्यति सत्त्वेन, त्वत्पुत्र्योः स वरो मतः ॥ ८९ ॥ एवं विज्ञमुखात् श्रुत्वा, नीत्वा चावां द्रुतं वने । तेनेदं निर्मितं कुण्डं, देवताधिष्ठितं वरम् ॥ ९० ॥ असौ विद्याधरः कश्चिदस्मत्प्राप्तिं समीहते । झम्पां वह्नौ परं दातुमशक्तः सत्त्ववर्जितः ॥ ९१ ॥ तेनायं विकलो दीनो, जातो दिव्यानुभावतः । सत्त्वं विना कथं सिद्धिर्जन्तूनां जायते खलु ? ॥ ९२ ॥ ततो विद्याधरः कन्यावचः श्रुत्वेति लज्जितः । गतश्चाधोमुखीभूय, स्वस्थाने सिद्धिवर्जितः ॥ ९३ ॥ अथ सत्त्वनिधानं स, राजा श्रीरत्नपालकः । अदात् झम्पां सुवेगेन, वह्निकुण्डेऽपि दारुणे ॥ ९४ ॥ सुधारससमं सत्त्वादग्निकुण्डं तदाऽभवत् । स्नात्वा तत्र नृपः कुण्डात्सिद्धकार्यो विनिर्गतः ॥ ९५ ॥ तस्मिन्नवसरे ज्ञात्वा, वृत्तान्तं ज्ञानयोगतः । आग-

तस्तत्र वैताढ्यात्, वसुगन्धर्वखेचरः ॥ ९६ ॥ कृत्वा सकलसामग्रीं, विवाहं सुतयोर्द्वयोः । सार्धं श्रीरत्नपालेन, चकार सम-होत्सवम् ॥ ९७ ॥ युग्मम् । विद्याधरेशा अपरेऽपि तत्रागता मिथस्ते विमृशन्ति कोपात् । न युक्तमेतत्परिणीतमेतत्, कन्या-द्वयं भूचरभूभुजा यत् ॥ ९८ ॥ ऊचेऽथ वसुगन्धर्वः, श्रूयतां खेचराधिपाः ! नैमित्तिकेन मे पूर्वमिदं ज्ञानेन भाषितम् ॥ ९९ ॥ स्नात्वा रुच्चात् महावह्नौ, रत्नपालनरेश्वरः । तव पुत्रीद्वयस्यापि, भविष्यति वरो वरः ॥ १०० ॥ युष्माकं कथ्यते तेन, न कार्यमसमञ्जसम् । कुर्व्वते रङ्गभङ्गं ये, ते हि मूढा दुराशयाः ॥ १ ॥ अस्माकं रोचते चैष, वरैर्नान्यैः प्रयोजनम् । श्रुत्वैतरखेचरा वाक्यं, मौनमाश्रित्य संस्थिताः ॥ २ ॥ वसुगन्धर्व्वभूपोऽथ, कन्याद्वययुतं वरम् । नीत्वा विद्याधरैः सार्धं, निजे राज्ये समागतः ॥ ३ ॥ विवाहस्योत्सवं तेन, पुनः कृत्वा नृपोऽथ सः । विद्याधरशतैर्युक्तः, प्रेषितो निजपत्तने ॥ ४ ॥ विवाहे यद्धनं लब्धं, तन्मध्यात् द्यूतकारिणे । ददौ षोडश लक्षाणि, दानशौण्डतया नृपः ॥ ५ ॥ ये च विद्याधरास्तत्र, भूभुजा सार्धमागताः । तान्सन्तोष्य निजे स्थाने, विससर्ज नराधिपः ॥ ६ ॥ भटानां कोटिभिर्युक्तः, खेचरैर्भूचरैर्नतः । रत्न-पालो रराजोच्चैरहो पुण्यस्य वैभवम् ॥ ७ ॥ अन्यदा स धराधीश, ईशलीलाविराजितः । सुरेन्द्र इव शोभाढ्यः, सभां संपूर्य संस्थितः ॥ ८ ॥ तदा श्राद्धस्य तस्यैव, वन्दापनकृते कृती । सभायां व्योममार्गेण, चारणर्षिः समागतः ॥ ९ ॥ तदाऽऽ-सनात्समुत्थाय, निवेश्य मुनिमासने । विधिना तञ्च वन्दित्वा, भूपोऽवादीत्कृताञ्जलिः ॥ ११० ॥ अद्य जातः कृतार्थोऽहं, सफलं मेऽद्य जीवितम् । पूर्व्वपुण्योदयो जातो, यज्जातं तव दर्शनम् ॥ ११ ॥ काव्यम्—अद्याचिन्त्यमहाफलेन फलितो मत्पु-

ण्यकल्पद्रुमः, संसाराम्बुधिमज्जनोविकलितं सद्यानपात्रं मया । विद्याऽद्याम्बरगामिनी शिवपुरे गन्तुञ्च लब्धाऽथवा, सत्साधुर्य-दयं तपःकृशवपुः प्राप्तो मदीये गृहे ॥ १२ ॥ काव्यम्–हरत्यघं सम्प्रति हेतुरेष्यतः, शुभस्य पूर्वाचरितैः कृतं शुभैः । शरीर-भाजां भवदीयदर्शनं, व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ १३ ॥ नाभ्युत्थानक्रिया यत्र, नालापमधुरा गिरः । गुणदोषकथा नैव, तस्य हर्म्ये न गम्यते ॥ १४ ॥ जडोऽपि सज्जने दृष्टे, जायते तोषनिर्भरः । उदिते विकसत्येव, शशाङ्के कुमुदाकरः ॥ १५ ॥ अभ्युत्तिष्ठन्ति सन्तोऽपि, सद्वृत्तागमने सति । सुधारुचि समायाते, यथा जलनिधिर्जलैः ॥ १६ ॥ किन्तपोभिर-पर्यन्तैः, किं दानैः कीर्तिडम्बरैः । किं वा जलभृतैस्तीर्थैर्दर्शने त्वादृशां सति ॥ १७ ॥ एवं राज्ञा स्तुतः साधुः, प्रारेभे धर्म्म-देशनाम् । शृण्वन्ति श्रद्धया युक्ताः, सभासीना नृपादयः ॥ १८ ॥ आरोग्यं भोगसंपत्तिरवियोगः प्रियैः सह । अयोगो दुःख-पङ्क्त्येति, स्वर्गलक्षणमक्षयम् ॥ १९ ॥ कल्पद्रुरिव वृक्षेषु, विवेकः सुगुणेष्विव । ग्रहेष्विव दिवानाथो, ब्रह्मचर्यं व्रतेष्विव ॥ १२० ॥ धर्म्मेष्विव दयाधर्म्मो, यथा विद्यासु लक्षणम् । सारा श्रावकधर्म्मेषु, देवपूजा तथा मता ॥ २१ ॥ युग्मम् ॥ काव्यम्–दौर्भाग्यं दीनभावं परगृहगमनं नैव विन्देत्कथञ्चिद्वैरूप्यं वा शरीरे न च भवति गतौ नैव शोकादिदुःखम् । प्रोत्तुङ्गवंशे स भवति विभवी रूपलावण्ययुक्तो, यः कुर्याद्वीतरागे भगवति विनतः पूजनं भक्तियुक्तः ॥ २२ ॥ जिनेन्द्र–पूजनं नित्यं, ये कुर्व्वन्ति शुभाशयाः । ध्रुवं नश्यन्ति पापानि, तेषां वृद्धाकुमारवत् ॥ २३ ॥ तथाहि–अस्त्यत्र वारिधेस्तीरे, सुत्रिशालपुरं वरम् । पद्मविलाससद्धर्म्मैः, स्वर्गखण्डमिवागतम् ॥ २४ ॥ तत्राभूत् क्षितिपश्चन्द्रश्चन्द्र-

१ नादिक० प्रत्यन्तरम्.

वन्निर्मलोगुणैः । तस्य राज्ञः प्रियः श्रेष्ठी, जिनदासाभिधः सुधीः ॥ २५ ॥ परमः श्रावकः सोऽभूद्, भार्या तस्य मनोरमा । जिनधर्म्मे रता सा च, जिनपूजापरायणा ॥ २६ ॥ कर्म्मान्तराययोगत्वादपुत्रत्वे तयोः सति । प्रभूतः प्रययौ कालो, वृद्धत्वेऽथ सुतोऽभवत् ॥ २७ ॥ वृद्धत्वे नन्दने प्राप्ते, विधाय विविधोत्सवान् । वृद्धाकुमार इत्यस्य, पित्राद्यैर्नाम निर्मितम् ॥ २८ ॥ ववृधेऽसौ क्रमेणाथ, पाठितः प्राप्तयौवनः । कस्यचिच्छ्रेष्ठिनः पुत्रीं, तातेन परिणायितः ॥ २९ ॥ सोऽन्यदा कौमुदीक्रीडां, वने कर्तुं जनैर्वृतः । रथारुढो व्रजन्मार्गेऽशृणोद्वार्त्ता जनाननात् ॥ १३० ॥ निष्पुण्यवत्कुमारोऽसौ, वित्तं नार्जयति स्वयम् । जननीस्तन्यवल्लक्ष्मीं, भुनक्त्यद्यापि पैतृकीम् ॥ ३१ ॥ श्रुत्वैवं मातापितरौ, मुत्कलाप्य शुभेऽहनि । चचाल सार्थयुक्तोऽसौ, पोतमारुह्य वारिधौ ॥ ३२ ॥ पार्वतीयमहावर्त्तेऽपतत् पोतः कुवायुतः । तदावर्त्तात्कथमपि, बोहित्थं निस्सृतं न तत् ॥ ३३ ॥ जना वृद्धाकुमारश्च, ततः पोतं विमुच्य तम् । प्रत्यासन्नगिरौ गत्वा, स्थिता आम्रतरोरधः ॥ ३४ ॥ कीरस्तदाम्रशाखायामुपविष्टोऽस्ति सप्रियः । शुकं प्रति शुकी प्रोचे, शृणु वल्लभ ! मद्वचः ॥ ३५ ॥ दृष्ट्वैतान्दुःखिनो लोकान्, किं तिष्ठसि निरुद्यमः ? । दुर्लभोऽवसरो ह्येष, परोपकृतिसाधकः ॥ ३६ ॥ यतः—परप्राणपरित्राणं, स्वप्राणैः केऽपि कुर्वते । लवणं दह्यते वह्नौ, परदोषोपशान्तये ॥ ३७ ॥ एषां सकाशाल्लेखं च, गृहीत्वा सिंहलेशितुः । शीघ्रमर्पय पश्चात्तु, शुभं सर्व्वं भविष्यति ॥ ३८ ॥ ततः कीरः कुमारस्योत्सङ्गे गत्वा क्षणात्स्थितः । सर्वं वृद्धाकुमारेण, ज्ञातं शुक्या निवेदितम् ॥ ३९ ॥ कीरकण्ठे ततो बद्धो, लेखो वृत्तान्तसूचकः । शुकेन सिंहलेशस्य, दत्तो लेखः स वेगतः ॥ १४० ॥ ज्ञात्वा भूपेन लेखार्थं, पटहोद्घोषणा कृता । यानपात्रं महावर्त्तान्निष्कासयति यो नरः ॥ ४१ ॥ लक्षं तस्मै प्रदीयन्ते, दीनारा

देवसाक्षिकम् । कल्पवेत्ता नरः कश्चिदस्पृशत् पटहं तदा ॥ ४२ ॥ गृहीत्वा हरिणीपुच्छं, षण्मासांस्तैलभावितम् । नृपादेशान्नरः सोऽगात्, वृद्धाकुमारसन्निधौ ॥ ४३ ॥ विना वृद्धाकुमारं को, नास्त्यन्यः सात्त्विकाग्रणीः । विवरं कल्पशास्त्रोक्तं, तस्य तत्तेन दर्शितम् ॥ ४४ ॥ दत्त्वा वृद्धाकुमारस्य, मृगपुच्छस्य दीपिकाम् । कल्पप्रोक्तविधिं सर्व्वं, कथयामास मानवः ॥ ४५ ॥ नरेण सत्त्वसारेण दीपिकायाः प्रकाशतः । प्रवेशो विवरे कार्यो, गम्यं तत्र कियद् द्रुतम् ॥ ४६ ॥ आयात्यग्रे वरोद्यानं, वापीप्रासादसुन्दरम् । तन्मध्ये वर्त्तते स्वर्णमयं देवगृहं वरम् ॥ ४७ ॥ तन्मध्ये श्रीयुगादीशदेवं नत्वा च पूजयते । तत्पूर्वद्वारदेशस्था, सद्घण्टा वाद्यते बलात् ॥ ४८ ॥ तस्य नादेन सर्वाणि, वादित्राण्यपि तत्क्षणात् । देवताधिष्ठितान्येवं, नदन्ति स्वयमेव हि ॥ ४९ ॥ श्रुते तेषां सुनिर्घोषे, खगा भारण्डपक्षिणः । उड्डीयन्ते तदा त्रासात्, कोटिशो गिरिवासिनः ॥ १५० ॥ तत्पक्षपवनेनाशु, जलं प्रोच्छलति क्षणात् । तदम्बुप्रेरिताः पोता, आवर्त्तान्निस्सरन्त्यथ ॥ ५१ ॥ ततः स्युर्यानपात्राणि, मार्गवर्त्तीनि वारिधौ । एषा कुमार ! कल्पोक्ता, वार्त्ता ते कथिता मया ॥ ५२ ॥ श्रुत्वा वृद्धाकुमारेण, वार्त्तां तां नरभाषिताम् । प्रविश्य विवरं चक्रे, तत्सर्व्वं सत्त्वतस्तदा ॥ ५३ ॥ पोतेऽथ निर्गते लोकाः, कल्पज्ञनरसंयुताः । संप्रापुः सिंहलद्वीपं, कुमारस्तु बिले स्थितः ॥ ५४ ॥ ते पृष्टा भूभुजा वृद्धाकुमारः किं न दृश्यते ? । विवरस्थः स तैरुक्तस्तदाऽसौ कुपितो नृपः ॥ ५५ ॥ कुमारो मुक्त इत्येते, वणिजो गुप्तमन्दिरे । क्षिप्ता राज्ञाऽथ दुःखेन, कालं निर्गमयन्ति ते ॥ ५६ ॥ इतश्च वृद्धाकुमारो, देहं वस्त्राणि चात्मनः । प्रक्षाल्य वापिकामध्ये, पुष्पाण्यानीय काननात् ॥ ५७ ॥ श्रीमद्युगादिदेवं तं, भक्त्या नित्यमपूजयत् । पूजयत्यन्यदा तस्मिन्, तत्रागात् कापि कन्यका ॥ ५८ ॥ कुमारं प्रेक्ष्य तद्रूपमोहिता सा गृहं गता

। स्वाभिप्रायो मातुरुक्तो, भर्तुस्तयापि भाषितः ॥ ५९ ॥ श्रुत्वा विद्याधरेणैतत्, गत्वा च जिनसद्मनि । सम्मानेन कुमारः स, आनीतो निजमन्दिरे ॥ १६० ॥ स्नानभोजनवस्त्राद्यैः, कृत्वा सत्कारमुत्तमम् । विद्याधरप्रिया प्रोचे, प्रस्तावे तं प्रति स्फुटम् ॥ ६१ ॥ देवताधिष्ठिता मूलखड्गा श्वशुरपार्श्वतः । वरराज ! त्वया याच्या, विवाहे करमोचने ॥ ६२ ॥ अथ विद्याधरोऽवादीद्भद्र ! त्वं शृणु मे वचः । ममाग्रे पूर्वमित्युक्तं, नैमित्तिकनरेण हि ॥ ६३ ॥ एत्यैकाकी नरः कश्चित्, रूपाढ्यः साहसान्वितः । कृत्वा देवालये पूजां, यो घण्टां वादयिष्यति ॥ ६४ ॥ वृद्धाकुमारनामासौ, ध्रुवं तव सुतापतिः । भविष्यतीति तेनोक्तमद्य तन्मिलितं मम ॥६५॥ अतस्त्वं तेन कार्येणात्रानीतोऽसि महाशय ! । मानितं तद्वचस्तेन, कृतः पाणिग्रहोत्सवः ॥ ६६॥ वराय स्वर्णरत्नानि, भूपोऽदात्करमोचने । वरेण कामदा खड्गा, याचिता भूभुजाऽर्पिता ॥ ६७ ॥ गन्तुकामः कुमारोऽभूत्तमनुज्ञाप्य खेचरम् । खेचरः स्माह मे मूलस्थितिर्वैताढ्यपर्वते ॥ ६८ ॥ तत्रास्ति धनभाण्डारः, स्वल्पमत्रास्ति मे धनम् । क्रीडाकृते कृतं चात्र, गृहमेतन्मनोहरम् ॥ ६९ ॥ तेन ते कथ्यते तत्रागन्तव्यं ह्येकदा त्वया । यथा द्रविणविद्याभिः, सत्कारः क्रियते महान् ॥ १७० ॥ तथेत्युक्त्वा कुमारोऽथारुह्य शय्यां प्रियायुतः । गृहीत्वा स्वर्णरत्नानि, चचाल गगनाङ्गणे ॥ ७१ ॥ स प्राप क्षणमात्रेण, सिंहलद्वीपमुत्तमम् । वीक्ष्य वृद्धाकुमारं तं, भूपतिस्तत्र हर्षितः ॥ ७२ ॥ तान् पोतवणिजः कारागृहाद्भूपो मुमोच सः । शुल्कमोक्षः कुमारस्य, चक्रे तद्गुणरञ्जितः ॥७३॥ पृष्टो राज्ञाऽथ विवरप्रवेशाद्यं कुमारराट् । तेनाप्युक्तं नृपस्याग्रे, स्वरूपं सकलं निजम् ॥ ७४ ॥ ज्ञातो वृद्धाकुमारोऽसौ, महाभाग्यः क्षमाभुजा । ततो दत्ता कुमाराय, सुता कर्पूरमञ्जरी ॥ ७५ ॥ विवाहे तस्य सञ्जातो, द्वितीयोऽप्युत्सवो महान् । तत्रापि गौरवादानं, संप्राप्तं पाणिमोचने ॥ ७६ ॥ दिनान्यत्र कति स्थित्वा,

सोऽन्यंदोचे नृपं प्रति । अहं निजपुरे यामि, यद्याज्ञा भवतो भवेत् ॥ ७७॥ पत्नीद्वययुतो दिव्यखट्वामारुह्य सोऽचलत् । चेलुः संपूर्य पोतं च, वणिजः स्वगृहं प्रति ॥ ७८ ॥ द्वितीये दिवसे वृद्धाकुमारो वणिजः प्रति । स्वाभिप्रायं जगादेति, वैताढ्ये गम्यते मया ॥ ७९ ॥ ततस्तत्र गतः शय्यामारुह्य सुविमानवत् । श्वशुरस्य कुटुम्बं तन्मिलितं बहुमानितः ॥ १८० ॥ दत्ताः प्रभूतकन्याश्च, तैस्तैर्विद्याधरैः पुनः । मणिमुक्तासुवर्णैश्च, सत्कृतः स्नेहपूरितैः ॥ ८१ ॥ दत्ता विविधविद्याश्च, तस्मै साधनपूर्विकाः । संप्राप्य वरवस्तूनि, स हृष्टः खेचरान्जगौ ॥ ८२ ॥ यास्यामि स्वपुरेऽथाहमनुज्ञा मे प्रदीयते । ततो विमानमारुढश्चचाल सह खेचरैः ॥ ८३ ॥ तद्यानपात्रतः पूर्वमाययौ स्वपुरे रयात् । बहुकन्यामहालक्ष्मीयुक्तश्चागात् स्वमन्दिरे ॥ ८४ ॥ मातापित्रादयो हृष्टा, वालितास्तेन खेचराः । क्रमेण यानपात्रं चागतं क्षेमेण तत्पुरे ॥ ८५ ॥ पृथक् विभज्य तद् द्रव्यं, तेनानीतं निजं गृहे । सुखेनागमयत्कालं, पुण्यैः किं नाम दुष्करम् ? ॥ ८६ ॥ एकदा तत्पुरोद्याने, सूरिर्ज्ञानी समागतः । वन्दनाय गतो वृद्धाकुमारः पितृसंयुतः ॥ ८७ ॥ श्रुते धर्म्मोपदेशेऽस्य, जिनदासोऽवदत्पिता । प्रभो ! वृद्धाकुमारेण, पूर्व्वं किं सुकृतं कृतम् ? ॥ ८८ ॥ येनैताः खेचरीकन्या, धन्या यः प्राप भूरिशः । गुरुरूचे कुमारोऽभूत्, पूर्व्वं त्वद्गृहकर्म्मकृत् ॥ ८९ ॥ त्वच्छरीरेऽन्यदा श्रेष्ठिन् !, व्याधिः कश्चिदजायत । अशक्तितो भवान् जातो, देवार्चां कर्तुमक्षमः ॥ १९० ॥ एवं विज्ञाय भृत्योऽसौ, कृत्वाऽञ्जलिमदोऽवदत् । अहं त्वदाज्ञया तात !, करोमि जिनपूजनम् ॥ ९१ ॥ तावकीनः कर्म्मकरः, कृत्यं सर्व्वं करोम्यहम् । आदेशं देहि मे देवान्, तवार्थे पूजयामि यत् ॥ ९२ ॥ भवता कथिते भक्त्या, जिनपूजां चकार सः । त्वद्भार्या

सुविचाराऽथ, चक्रेऽस्य सुतवत् हितम् ॥ ९३ ॥ क्रमाद्भवान्पटुर्जातश्चक्रे देवार्चनं स्वयम् । ततः कर्म्मकरः क्षीणदेहो जातो दिने दिने ॥ ९४ ॥ त्वयैवं भणितं वत्स !, कथं क्षीणं वपुस्तव । शरीरं बाध्यते किञ्चिदाधिव्याध्यादिभिः किमु ? ॥९५॥ सोऽवोचत्तात ! मे बाधा, शरीरे नास्ति काऽपि हि । परं मे बाधते चित्तं, देवपूजामकुर्व्वतः ॥ ९६ ॥ अतो ममारतिर्देहे, वर्त्तते महती विभो ! । ततः श्रेष्ठिंस्त्वया प्रोक्तं, भोस्त्वं पूजां पृथक् कुरु ॥ ९७ ॥ ततोऽसौ सर्वदा पूजामकार्षीच्छुभभावतः । तदा त्वया सुतत्वेन, स्थापितः स्वगृहान्तरे ॥ ९८ ॥ क्रमेण कालयोगेन, शूलरोगाद्विपद्य सः । त्वद्गृहे सुतभावेन, समुत्पन्नः स्वपुण्यतः ॥ ९९ ॥ श्रुत्वेति वृद्धाकुमारो, जातिस्मृतिमवाप सः । गुरूक्तं सकलं सत्यं, ज्ञातं देवार्चनाफलम् ॥ २०० ॥ एवं जिनेन्द्रपूजायाः, कृतायाः पूर्वजन्मनि । फलं ज्ञात्वा कुमारोऽगात्, स्वगेहे पितृसंयुतः ॥ २०१ ॥ क्रमेण तत्पुरे वृद्धाकुमारोऽभूद्धराधिपः । जिनार्चादानमुख्यानि, चक्रे पुण्यान्यनेकधा ॥ २ ॥ इत्थं पूजाप्रभावेण, भुक्त्वा राज्यादिकं सुखम् । राजा प्रान्ते गुरोः पार्श्वे, व्रतं प्राप्य शिवं ययौ ॥ ३ ॥ उक्तश्च-श्रेयः करोति दुरितानि निराकरोति, लक्ष्मीं तनोति शुभसञ्चयमातनोति । मान्यत्वमानयाति कर्मरिपून्निहन्ति, पूजा जिनस्य विहिता बहुसौख्यदा च ॥ ४ ॥

इति वृद्धाकुमारकथा समाप्ता ।

भो राजन् रत्नपाल ! त्वं, प्रत्यहं जिनपूजनम् । कुरुष्वैकाग्रचित्तेन, महासौख्यं यथा भवेत् ॥ ५ ॥ जिनार्चाफलमाकर्ण्य, जहृषुर्भव्यजन्तवः । गृहीतो नियमः सर्वैर्मुनिपार्श्वे जिनार्चने ॥ ६ ॥ वन्दित्वा तं गुरुं राजा, रत्नपालो ययौ गृहे ।

१ तव वाचाऽथ इति प्रत्यन्तरम् ।

जगामान्यत्र भव्यानां, प्रतिबोधाय सद्गुरुः ॥ ७ ॥ अथ श्रीरत्नपालोऽपि तद्दिनात्सुविशेषतः । जिनपूजादिकं सर्व्वं, चक्रे पुण्योद्यमं महत् ॥ ८ ॥ ग्रीष्मकालेऽन्यदा राजा, गङ्गायां जलकेलये । गतनाम्नावमारुह्य, तत्रैकाकी विवेश सः ॥ ६ ॥ क्रीडां प्रकुर्व्वतस्तस्य, यज्जातं तन्निशम्यताम् । तावदाकस्मिको वायुरजायत महाबलः ॥ २१० ॥ वातेन प्रेरिता सा नौश्चलिता त्वरितं तदा । उभयोस्तटयोर्ग्रामान्, भ्रमतो दृष्टवान्नृपः ॥ २११ ॥ अनेकनगरद्वीपपर्वतालिद्रुमादिकम् । चक्रारूढमिवापश्यन्नावः शीघ्रगतेर्वशात् ॥ १२ ॥ गतं मुहूर्त्तमात्रेण, बोहित्थं पूर्वसागरे । तटं प्राप्य स्वयं तस्थौ, स्वस्थोऽभून्नृपतिस्तदा ॥ १३ ॥ पोतादुत्तीर्य राजाथ, बहिर्नीराद्विनिर्गतः । तावत्तत्र पुमानेक, आगतः संमुखो रयात् ॥ १४ ॥ स प्रोवाच महाराज !, मा विषादं करिष्यसि । विदेशे चागते दूरं, नाभव्यं भावि किञ्चन ॥ १५ ॥ अत्राहं ग्रामसीमानि, जनान्जनपदानपि । किञ्चिचान्यत्र जानामि, किं करोमि क याम्यहम् ? ॥ १६ ॥ इत्थं त्वया विचिन्त्यं न, कदाचिदपि मानसे । सर्वत्र सर्वदा सर्वं, भविष्यति शुभं तव ॥ १७ ॥ युग्मम् ॥ अहं तव सहायोऽस्मि, साम्प्रतं स्वस्तिकारकः । परिणामे शुभं सर्व्वं, भवेद् भवादृशां भुवि ॥ १८ ॥ शृणु सुन्दर ! मे तथ्यं, पुनर्वचनमुत्तमम् । यस्मिन् श्रुते तवाश्वासो, महान् चित्ते भविष्यति ॥ १६ ॥ पूर्वसागरदेशोऽयं, तत्र रत्नपुराभिधम् । स्वर्निवाससमा भूमिर्यत्रास्ति जनसौख्यदा ॥ २२० ॥ महासेनाभिधोऽत्रास्ति, ज्ञातो दिक्षु दशस्वपि । समस्तपूर्वदिक्स्वामी, चामीकरसमप्रभः ॥ २१ ॥ पत्नी प्रेमवती तस्य, साध्वीजनशिरोमणिः । प्रियापञ्चसहस्रेषु, मुख्या दत्ता च वर्तते ॥ २२ ॥ राज्ञोऽस्य नगरग्रामपुराणि दश कोटयः । दश लक्षा गजरथाः, कोटिर्विंशतिः पत्तयः ॥ २३ ॥ त्रिंशल्लक्षास्तुरङ्गाणां, कोशे संख्या धनस्य न । परमेकः सुतो नास्ति, कुलराज्यधुरन्धरः ॥ २४ ॥ ततः

कृता नरेन्द्रेण, महोपाया अनेकशः । पुत्रप्राप्तिर्न तस्याभूत्परं कर्मानुभावतः ॥ २५ ॥ मणिमन्त्रौषधीयन्त्रदेवताराधनादिकम् । सर्व्वं सिध्यति पुण्येन, तद्विना नास्ति किञ्चन ॥ २६ ॥ आलक्ष्यदन्तमुकुलाननबद्धहासा–नव्यक्तवर्णरमणीयवचःप्रवृत्तीन् । अङ्कागतान्प्रणयिनस्तनयान्वहन्तो, धन्यास्तदङ्गरजसा परुषीभवन्ति ॥ २७ ॥ वन्ध्यत्वं हि कुरण्डत्वं, मूकत्वं चाङ्गहीनता । कुष्ठपण्ढादिकं सर्व्वं, भवेयुः पापयोगतः ॥ २८ ॥ पुण्यकर्म्म तदारब्धं, सन्तानार्थं नृपेण तु । दीयते दीनदुःस्थेषु, दयादानं दिने दिने ॥ २९ ॥ देवार्चां कुरुते दानं, दत्ते पात्रे विशेषतः । तस्येत्थं कुर्व्वतः कर्म्मान्तरायमभवल्लघु ॥२३०॥ तस्य प्रेमवती राज्ञी, सगर्भाऽभवदन्यदा। राजा राज्ञी च लोकाश्च, सहर्षा जज्ञिरे भृशम् ॥ ३१ ॥ समये सुषुवे राज्ञी, युगपत्पुत्रिकाद्वयम् । महोत्साहात्तदा राजा, वर्द्धापनमकारयत् ॥ ३२ ॥ असन्तानतया राजा, सुताजन्मनि हर्षितः । महारण्ये जले प्राप्ते, तृषार्त्त इव मानवः ॥ ३३ ॥ यथा ग्रामेष्ववृक्षेष्वेरण्डोऽपि मन्यते महान् । असुतत्वे सुताजन्म, शतपुत्रान्स मन्यते ॥ ३४ ॥ कृत्वा जन्मोत्सवं रम्यमाद्या कनकमञ्जरी । इत्थं पित्रा कृतं नाम, द्वितीया गुणमञ्जरी ॥ ३५ ॥ शुक्लपक्षे यथा चन्द्रः, कलाभिर्वर्धतेऽधिकम् । चेटीभिर्लाल्यमाने ते, द्वे पुत्र्यौ वर्धिते तथा ॥ ३६ ॥ ताभ्यां बुद्धिगुणाढ्याभ्यां, शिक्षिताः सकलाः कलाः । क्रमात्प्राप्तं च तारुण्यं, रूपलावण्यमन्दिरम् ॥ ३७ ॥ नयनानन्ददायिन्यौ, नन्दिन्यौ वीक्ष्य ते उभे । सचिन्तो नृपतिर्यावत्, तद्विवाहकृतेऽभवत् ॥ ३८ ॥ तावत्प्राचीनदुष्कर्म्मप्रभावात् हे नराधिप ! । उभयोः कन्ययोर्देहे, यज्जातं तन्निशम्यताम् ॥ ३९ ॥ गलत्कुष्ठाऽभवत् ज्येष्ठा, कनिष्ठाऽन्धीबभूव च । ततो व्यचिन्तयद्राजा, दुःखपूरेण पूरितः ॥ २४० ॥ अहो इत्थं कथं जातं, युगपत्कन्ययोर्द्वयोः ? । दैवेन दूषितं रत्नं, कं पृच्छामि करोमि किम् ? ॥ ४१ ॥ इति

दुःखं धरन् चित्ते, राज्यचिन्तां करोति न। प्रधानपुरुषैः सोऽथ, विज्ञप्तो नरनायकः ॥ ४२ ॥ अलं राजन्! विषादेन, विषमा कर्म्मणां गतिः। दैवस्य किमुपालम्भैः?, सुदृढं क्रियते मनः ॥ ४३ ॥ उद्यमः क्रियतां राजन्!, वैद्यानाहूय पृच्छ्यताम्। तदुक्ता विविधा कार्या, चिकित्सा रोगशान्तये ॥ ४४ ॥ ऋणं रिपुस्तथा रोग, उदितारश्छेदिता न यैः। ते नरा निश्चितं पश्चाद्विनश्यन्ति न संशयः ॥ ४५ ॥ ततः स्वस्थं मनः कृत्वा, संप्रेष्य निजपूरुषान्। भूपोऽथाकारयामास, वैद्यान्विद्याविशारदान् ॥ ४६ ॥ नृपाज्ञया ततस्तत्रागता वैद्या अनेकशः। तैर्विचार्य समारब्धा, चिकित्सा कन्ययोर्द्वयोः ॥ ४७ ॥ उपायाश्चक्रिरे वैद्यैरनेकेऽपि पृथक् पृथक्। ते सर्व्वे निष्फला जाता, गुणः कश्चिदभूत्र न ॥ ४८ ॥ मन्त्रयन्त्रग्रहादीनां, पूजा पृच्छा च मण्डले। बलिहोमविधानञ्च, शान्तिकं पौष्टिकं तथा ॥ ४९ ॥ इत्यादिकं कृतं राज्ञा, सर्व्वं जातं निरर्थकम्। तदा भूमिपतिर्जातो, निराशः सपरिच्छदः ॥ २५० ॥ तद्दुःखान्मन्यमानश्चाधन्यमात्मानमात्मना। राजा राज्ञीयुतोऽत्यन्तं, विलपन्नेवमवोचत् ( मूचिवान् ) ॥ ५१ ॥ प्राग्जन्मनि किमस्माभिः, पुत्रीभ्यामथवा महत्। पातकं दारुणं चक्रे?, येनेदं दुःखमागतम् ॥ ५२ ॥ वियोगो मातुरुत्सङ्गाद्बालानां विहितः पुरा। अथवा मुनिवर्गेषूपसर्गश्च कृतो महान् ॥ ५३ ॥ किंवा वत्साश्च धेनूनां, पयःपानान्निवारिताः। सरःशोषः कृतोऽस्माभिर्दत्तो वह्निर्वने किमु? ॥ ५४ ॥ एवं हि बहुधा राजा, शोचत्युच्चैर्दिने दिने। राजवर्गोऽखिलो राजपुत्रीदुःखेन दुःख्यभूत् ॥ ५५ ॥ इतश्च कन्यके ते द्वे, मर्तु-कामे बभूवतुः। यैर्भुक्तं हि सुखं पूर्व्वं, तैर्दुःखं सह्यते कथम्? ॥ ५६ ॥ सरोगो यस्य देहः स्यान्निष्फलं तस्य जीवितम्। स हि जीवन्मृतो ज्ञेयो, यस्य गर्हा जनेऽजनि ॥ ५७ ॥ अथ गत्वा नृपस्याग्रे पुत्रीभ्यामिति भाषितम्। हे तात! कुरु

सामग्रीं, देहि नौ काष्ठभक्षणम् ॥ ५८ ॥ किं हि राज्यसुखेनापि, जीवितेन किमावयोः[1] ? । यद्यङ्गे दूषणं जातं, ततो वै मरणं वरम् ॥ ५९ ॥ तच्छ्रुत्वा नृपतिर्दध्यौ, हाहा जातं किमीदृशम् ? । अकाण्डे दुःखदो विश्वे, वक्रोऽयं दृश्यते विधिः ॥ २६० ॥ पुत्रीमोहो महान्मेऽस्ति, स मुक्तोऽपि न यास्यति । पुत्र्यौ विना न जीवामि, न जीवेन्मां विना प्रिया ॥ ६१ ॥ कुटुम्बस्य विनाशो मे, समकालं समागतः । किं वा राज्येन कोशेन, किं पुरैः पत्तनैर्मम ? ॥ ६२ ॥ किं गजैश्च हयैः किं वा, किं रथैः किमु पत्तिभिः । किं ममान्तःपुरेणापि, मन्त्रिभिर्बहुभिः किमु ? ॥ ६३ ॥ एकापत्यविहीनत्वात्सर्वमेतन्निरर्थकम् । साम्प्रतं सह पुत्रीभिर्मर्त्तव्यं मयका खलु ॥ ६४ ॥ एवं संशोच्य भूपालो, मरणाय समुद्यतः । आहूय च महामात्यं, गदिता चित्त-कल्पना ॥ ६५ ॥ मन्त्री प्रोवाच हे स्वामिन् !, मा वादीरसमञ्जसम् । त्वदाधारे जगत्सर्वं, वर्त्तते विश्वनायक ! ॥ ६६ ॥ हे नाथ ! त्वां विना राज्यं, शून्यं तिष्ठेत्कथं क्षितौ ? । विना त्वाञ्च नियोगित्वमयोग्यं मम सर्वथा ॥ ६७ ॥ अतः कारणतो नाथ !, न वचो वाच्यमीदृशम् । राजा प्रोचे चिकित्साद्यै, रोगौ पुत्र्योर्गतौ न हि ॥ ६८ ॥ तद्दुःखपीडिते पुत्र्यौ, मर्तुकामे बभूवतुः । पूर्वमेकं न मेऽपत्यं, दुःखमेतत्कथं सहे ? ॥ ६९ ॥ मन्त्री प्रोचे सुतारोगशान्त्यर्थं मे वचः शृणु । राज्यरक्षाकरीं शक्तिमाराधय स्वशक्तितः ॥ २७० ॥ भविष्यति यदा तुष्टा, सा शक्तिः भक्तवत्सला । तदा सेत्स्यति ते कार्यं, नन्दिनीरोगनाशतः ॥ २७१ ॥ पुनरेकं वचः स्वामिन् !, श्रूयतां स्त्रीजनोचितम् । मरणं शरणं दुःखे, कातरस्य परस्य न ॥ ७२ ॥ यतः—संपदि यस्य न हर्षो, विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं, जनयति जननी सुतं विरलम् ॥ ७३ ॥

१ मान्यार्थे द्विवचनस्थाने बहुवचनं ज्ञायते ।

ये नराः सत्यसंयुक्ताः, सुधैर्याः सर्व्वकर्मसु । कुकर्म्मरहिताः कष्टे, तैरियं मण्डिता मही ॥ ७४ ॥ अतो नाथ ! स्थिरीभूय, गोत्रजाराधनं कुरु । कातरत्वं परित्यज्य, भजस्व हृदि धीरताम् ॥ ७५ ॥ इदं प्रधानवचनं, श्रुत्वा भूपो व्यचिन्तयत् । असौ हितकरो मन्त्री, वर्त्तते मम सर्व्वदा ॥ ७६ ॥ एष मे साम्प्रतं सत्य, उपायः कथितोऽमुना । इत्यालोच्य नृपोऽवादीत्, प्रमोदभरनिर्भरम् ॥ ७७ ॥ हे मन्त्रिन् ! मम सांनिध्यं, कुरु त्वं सुरसाधने । यथा मेऽभीष्टदेवस्याराधने चोभणा नहि ॥ ७८ ॥ असहायः समर्थोऽपि, तेजस्व्यपि करोति किम् ? । निर्वाते ज्वलितो वह्निः, स्वयमेवोपशाम्यति ॥ ७९ ॥ ततस्त्वया मन्त्रिन् !, साहाय्यं कार्यमादरात् । सुरीसाधनसामग्रीं, प्रगुणीकुरु सत्वरम् ॥ २८० ॥ राज्यशिक्षां ततो दत्त्वा, सचिवेषु पृथक् पृथक् । शुचीभूय सदाचारो, देवताग्रे नृपो ययौ ॥ ८१ ॥ शुभध्यानपरो भूत्वा, कृत्वा निश्चलमासनम् । त्यक्त्वाऽऽहारं च निद्रांश्च, भूपतिस्तत्र संस्थितः ॥ ८२ ॥ महाध्यानी महामौनी, मायामानविवर्जितः । स्थिरचित्तो धराधीशो, यतीश इव चाभवत् ॥ ८३ ॥ अमात्योऽप्यग्रतः स्थित्वा, तत्रैव स्थिरमानसः । कर्प्पूरागुरुकस्तूरीवस्तुभिर्भोगमातनोत् ॥ ८४ ॥ जपं होमं बलिं कृत्वा, दत्त्वा पूर्णां महाहुतिम् । देवीं नत्वा च भूपालः, स्तुतिमेवं विनिर्म्ममे ॥ ८५ ॥ आदिशक्ते नमस्तुभ्यं, विश्वविघ्नौघहारिणि ! । त्वं विश्वपालिका देवी, भक्तानां सिद्धिदायिनी ॥ ८६ ॥ भोगदा सर्वसत्त्वेषु, सर्व्वभूते जयप्रदा । सर्व्वज्ञा सर्व्वगा नित्यं, सर्वकल्याणकारिणी ॥ ८७ ॥ त्वमेका सर्व्वभूतानां, देहे देहे पृथक् स्थिता । इन्द्रियाणामधिष्ठात्री, त्वमेका किल गीयसे ॥ ८८ ॥ अणिमादिकलब्धीनां, प्राप्तौ त्वमेव कारणम् । तुष्टा त्वमेव लोकेऽत्र, महाराज्यप्रदायिनी ॥ ८९ ॥ पादलेपाञ्जनादीनि, निधानौषधिधातवः । गुटिका कामदा चेति, सिध्यन्ति त्वत्प्रसादतः ॥ २९० ॥ चिन्तामणिः

कल्पवृक्षः, कामधेनुघटादयः। माहात्म्येन त्वदीयेन, पूरयन्ति मनोरथान् ॥ २९१ ॥ क्षोभणं परसैन्यानां, स्वसैन्यानाञ्च रक्षणम्। स्खलनं परशस्त्राणां, करोति त्वदुपासकः ॥ ९२ ॥ योगदा योगिनां नित्यं, ज्ञानदा ज्ञानमिच्छताम्। पुत्रदापि च वन्ध्यानां, त्वमेवैकासि भूतले ॥ ९३ ॥ अतीतानागतं ज्ञानं, वर्त्तमानं विशेषतः। उपद्रवादिशमनं, ग्रहाणां निग्रहस्तथा ॥ ९४ ॥ उत्थापनञ्च दुष्टानामार्त्तानामार्त्तिनाशनम्। इत्यादिकं च यत्किञ्चित्, स्फुरेत्सर्वं त्वदाश्रयात् ॥ ९५ ॥ इत्थं संस्तूयमाना सा, सप्तभिर्दिवसैर्निशि। देवी बभूव प्रत्यक्षा, खे स्थिता दिव्यरूपभाक् ॥ ९६ ॥ तद्रूपं प्रेक्ष्य भूपालः, प्रोत्फुल्ल-नयनाम्बुजः। कृत्वा प्रणाममित्यूचे, संयोज्य करसंपुटम् ॥ ९७ ॥ अद्य मे सफलं जन्म, ममाद्य सफलं तपः। अद्य मे सफलं ध्यानं, हे देवि ! तव दर्शनात् ॥ ९८ ॥ किं देवि ! बहुनोक्तेन, सारमेकं वचः शृणु। वाञ्छितं देहि मे शीघ्रं, व्यग्रं स्वस्थी-कुरुष्व माम् ॥ ९९ ॥ वचनामृतसंतृप्ता, सन्तुष्टा निजमानसे। देव्युवाच महासत्त्व !, राजेन्द्र ! शृणु मद्वचः ॥ ३०० ॥ यत्त्वयैकाग्रचित्तेन, कृता भक्तिः स्वशक्तितः। तुष्टा जाताऽस्मि तेनाहं, रक्षका तव दुःखतः ॥ ३०१ ॥ ब्रूहि त्वं तव किङ्कार्यं, येनाहं भवता स्मृता। परं ते तनयो नास्ति, विधौ तुष्टेऽपि कर्म्मतः ॥ २ ॥ पूर्वजन्मार्जितं कर्म्म, यत्तस्य हि फलोदयः। लुप्यते नैव केनापि, प्रकारेण सुरासुरैः ॥ ३ ॥ गाहा—पसुपक्खिमाणुसाणं, बाले जो विहु विओयए पावो। सो अणवच्चो जायइ, अह जायइ तो विवज्जिज्जा ॥ ४ ॥ दयया वत्सरूपाणि, महिषीणां गवां तथा। यः पालयति पुण्यात्मा, जायन्ते तस्य नन्दनाः ॥ ५ ॥ तत्त्वं सुतमतिं त्यक्त्वा, कार्यमन्यन्निवेदय। तस्य प्रत्युत्तरं येन, ददामि तव साम्प्रतम् ॥ ६ ॥ राजा जगाद हे देवि !, विद्यते मे सुताद्वयम्। परमेका गलत्कुष्ठा, द्वितीयाऽन्धाऽस्ति कर्म्मतः ॥ ७ ॥ दिव्यौषधं दिव्यरसं, दिव्याञ्जनमपि

स्फुटम् । देहि मे यदि तुष्टाऽसि, येन रोगक्षयो भवेत् ॥ ८ ॥ नगःस्था पुनरप्यूचे, देवी प्रकटभाषया । नृपाद्या भो जनाः

। सर्वे, श्रूयतां वचनं मम ॥ ९ ॥ सोत्कण्ठास्ते जना देवीवचने दत्तकर्णकाः । शुश्रुवुः स्वस्थचित्तेनामोघामिति सुरीगिरम्

॥ ३१० ॥ राजन्कन्याद्वयस्यापि, कुष्ठान्धत्वरुजाहरः । उपायः सत्य एवायं, कथ्यते ते मयाऽधुना ॥ ३११ ॥ पाटलीपुर-

तोऽप्येकं, रत्नपालाभिधं नृपम् । क्रीडन्तं वेडया नद्यामत्रानेष्याम्यहं प्रगे ॥ १२ ॥ सम्मान्य स पुरीमध्ये, त्वयाऽऽनेतव्य

उत्सवात् । बहुमानञ्च दत्त्वाऽस्य, कथ्यं कार्यं निजं ततः ॥ १३ ॥ स एव तव कन्ये द्वे, गतरोगे करिष्यति । कन्याद्वयस्य

भावी स, प्राग्जन्मस्नेहतो वरः ॥ १४ ॥ इदमुक्त्वा गता देवी, तिरोभूय क्षणादपि । ततः प्रमुदिता लोका, मन्त्रिणोऽपि

विशेषतः ॥ १५ ॥ राजा राज्ञी च कन्ये द्वे, रोगशान्तिश्रुतेरपि । अत्यन्तं हर्षिताश्चित्ते, केकिवज्जलदागमे ॥१६॥ ततो राजा

प्रहर्षेण, कृत्वा तद्ध्यानमोचनम् । पारयित्वा तपश्चक्रे, पारणं परिवारयुक् ॥ १७ ॥ रत्नपालनृपस्याग्रे, नररूपेण देवता ।

एवं कन्याकथां प्रोक्त्वा, प्रोवाच पुनरप्यदः ॥ १८ ॥ वातप्रेरितपोतेन, मयाऽऽनीतस्त्वमत्र भोः ! । षड्योजनशतान्यस्मात्,

स्थानाच्नगरमस्ति ते ॥ १९ ॥ अहमत्रत्यभूपालराज्याधिष्ठायिका सुरी । पुंरूपा तव संबन्धज्ञापनाय समागता ॥ ३२० ॥

गुर्वं कृत्वाऽथ कन्याङ्के, तत्पाणिग्रहणं कुरु । त्वत्साहाय्यकरी त्वस्मि, नाहं भो विप्रतारिका ॥ ३२१ ॥ प्राचीनपुण्यतो

राजन् !, प्राप्यते देवदर्शनम् । विना भाग्यैर्न तुष्यन्ति, मानवे देवताः खलु ॥ २२ ॥ यतः—अमोघा वासरे विद्युत्, अमोघं

निशि गर्जितम् । अमोघा सज्जना(न)वाणी, अमोघं देवदर्शनम् ॥२३॥ अतः कारणतो भूप !, न भेतव्यं मनागपि । काचि-

१ मोच्य इति स्यात् ।

च्चिन्ता न कार्येति, परभूपतितोऽस्म्यहम् ॥ २४ ॥ यस्मिन्कस्मिन्समुत्पन्ने, कार्ये स्मार्या त्वया त्वहम् । तव पुण्यप्रभावेन, सर्वं भव्यं भविष्यति ॥ २५ ॥ अरतिर्न त्वया कार्या, पुनरेवं हि कथ्यते । मयैवैतत्कृतं सर्व्वं, तत्ते भावि समीहितम् ॥ २६ ॥ मद्वाक्यैरधुनैवात्र, सोत्साहास्तव सम्मुखाः । आगमिष्यन्ति भूपाद्यास्त्वदाकारणहेतवे ॥ २७ ॥ गन्तव्यं हि त्वया शीघ्रं, किञ्चिच्चिन्त्यं न कारणम् । सर्वं भावि तवाभीष्टं, नान्यथा सुरगीरहो ॥ २८ ॥ इत्थं श्रुत्वा नृपः प्रोचे, नाहं जानामि किञ्चन । हे देवि ! कथमारोग्यं, तत्कुर्व्वे कन्ययोस्तयोः ? ॥ २९ ॥ देव्यूचे हे महासत्त्व !, मा वादीरीदृशं वचः । भवतोऽस्ति रसः सिद्धो, भवेत्तस्माद्गुणः क्षणात् ॥ ३२० ॥ नृपोऽवादीन्न मत्पार्श्वे, रसः कोशेऽस्ति किन्तु मे । देवी प्रोचे ददाम्याशु, रसमानीय कोशतः ॥ ३२१ ॥ इत्युदित्वा गता देवी, निमेषाद्रसकुम्भकम् । नृपकोशात्समानीयार्प्पयामास क्षमाभुजे ॥ ३२ ॥ रक्षणीयो रसो यत्नात्, कुमारीगुणकारकः । इत्युक्त्वा सा गता क्वापि, देवी पुंरूपधारिणी ॥ ३३ ॥ दिव्यानुभावतः प्राप, क्षणं मूर्च्छां क्षमापतिः । स्वस्थीभूतः पुनश्चित्ते, रत्नपालो व्यचिन्तयत् ॥ ३४ ॥ इन्द्रजालमिदं किं किं, चित्तचालोऽथवा मम । किं स्वप्नसदृशं दृष्टं, क्व गतो देवतानरः ? ॥ ३५ ॥ स्वचित्ते चिन्तयन्नेवमुन्मील्य निजलोचने । सर्वत्र दिग्मुखान् पश्यन्, भूपतिस्तत्र संस्थितः ॥ ३६ ॥ समीपाद्रत्नपालस्य, तावत्सा देवता रयात् । पुरस्योपरि तस्यैव, गत्वोवाच नभःस्थिता ॥ ३७ ॥ भो जनाः ! श्रूयतां कन्यागुणकारी नरोत्तमः । मयाऽऽनीतोऽस्ति पोतेनोपविष्टोऽस्त्यम्बुधेस्तटे ॥ ३८ ॥ व्योमवाणीमिति श्रुत्वा, ते सर्व्वे दधिरे मुदम् । ससंभ्रमं समुत्तस्थौ, महासेनो महीपतिः ॥ ३९ ॥ यत्रास्ति रत्नपालोऽसौ,

---

१ पृथ्व्यां पतितः ।

संस्थितो नीरधेस्तटे । महासेनो महीपोऽथ, तत्रागात्सपरिच्छदः ॥ ३४० ॥ संयोज्य द्वौ करौ राजा, साष्टाङ्गं प्रणिपत्य च । जगाद विनयेनोच्चै, रत्नपालं नृपं प्रति ॥ ३४१ ॥ अद्य मे फलितो गेहे, सुवृक्षः कुसुमं विना । अनभ्रा चातुला वृष्टि-र्मरुस्थल्यां सुरद्रुमः ॥ ४२ ॥ दरिद्रस्य गृहे हेमनिचयः प्रकटोऽभवत् । प्रीणितोऽहं त्वदालोकात्पीयूषपानतो यथा ॥ ४३ ॥ परोपकृतिधौरेयावधार्य वचनं मम । भवत्पादरजःपातात्पवित्रीकुरु मे पुरम् ॥ ४४ ॥ एवं नृपवचोयुक्तिं, श्रुत्वाऽवादीत्परो नृपः । अज्ञातकुलशीलस्य, मानं मे दीयते कथम् ? ॥ ४५ ॥ पुनः प्रोचे महासेनो, मया ज्ञातं कुलं तव । आकारैरिङ्गितैर्गत्या, जानन्ति हि विचक्षणाः ॥ ४६ ॥ अग्रेऽपि मम देव्योक्तो, नराधिप ! तवागमः । पूर्वं देवी मया ध्याता, तयाऽऽनीतस्त्वमत्र तत् ॥ ४७ ॥ स्वस्थचित्तस्त्वमागच्छ, प्रसन्नीभूय मत्पुरे । कृत्वा मम प्रसादं च, सज्जीकुरु सुताद्वयम् ॥ ४८ ॥ अथास्मिन्स-मये तत्र, शृङ्गारितमनेकधा । हस्तिरत्नं समानीतं, महासेनोऽवदत्पुनः ॥ ४९ ॥ एवं गजं समारुह्य, चल राजन्पुरान्तरे । इत्याग्रहाद्गजारूढो, रत्नपालश्चचाल च ॥ ३५० ॥ नराः केऽपि रथारूढा, गजारूढा हयाश्रिताः । सुखासनस्थिताः केचिन्नृप-पार्श्वेऽचलंस्तदा ॥ ३५१ ॥ पादचारी महासेनो, रत्नपालनृपाग्रतः । चचाल निजकार्यार्थी, स्वार्थे को विनयी न हि ? ॥ ५२ ॥ दीयमानेषु दानेषु, वाद्येषु वादितेषु च । महोत्सवसमं राजा, प्रविवेश पुरान्तरे ॥ ५३ ॥ श्रीरत्नपालभूमीशं, निवेश्य मेहदासने[1] । प्रणामपूर्वकं चैवं, महासेनेन जल्पितम् ॥ ५४ ॥ रत्नपालधराधीश ! , त्वं वचो मेऽवधारय । हीनदीनार्त्तभूतेषु, त्वादृशाः स्युः कृपापराः ॥ ५५ ॥ सदोषे मम ये पुत्र्यौ, ते द्वे त्वं हि विलोकय । तव नेत्रामृतेनैव, नीरोगे ते भविष्यतः

१ महासने इति स्यात् ।

॥ ५६ ॥ इह लोकेऽस्ति ते लाभः, परलोकः शुभाश्रयः । श्रुत्वैवं रत्नपालोऽवक्, कन्ये ते द्वे इहानय ॥ ५७ ॥ तदा नृपेण ते आले, समानीते तदन्तिके । दृष्ट्वा तथाविधे कन्ये, रत्नपालो व्यचिन्तयत् ॥ ५८ ॥ नारीरत्नद्वयं हाहा, दुर्दैवेन विनाशितम् । उभयोः सदृशो योगो, जातः कर्म्मप्रभावतः ॥ ५६ ॥ तदा श्रीरत्नपालेन, महाडम्बरहेतवे । दिव्यमण्डलमालिख्य, प्रणवस्तत्र मण्डितः ॥३६०॥ तन्मध्ये ते उभे कन्ये, निवेश्य प्रवरासने । अक्षतैस्ताडयामास, मन्त्रोच्चारणपूर्व्वकम् ॥३६१॥ कृष्णागुर्व्वादिवस्तूनां, कृता भोगास्तदा घनाः । कृतो होमश्च नैवेद्यं, बलिर्दत्तस्त्वनेकधा ॥ ६२ ॥ बहुधा कथ्यते किं किं, वर्त्तन्ते यानि भूतले । तानि साराणि वस्तूनि, मण्डितान्यत्र मण्डले ॥ ६३ ॥ प्रस्तावे रत्नपालेन, रसं निष्कास्य कुंपकात् । लाघवादाद्यकन्याया, भालेऽथ तिलकं कृतम् ॥ ६४ ॥ द्वितीयायाश्च कन्याया, नेत्रयोरञ्जनं कृतम् । तत्क्षणाद्दिव्यरूपाढ्या, जातान्या तारलोचना ॥ ६५ ॥ देवकन्यासमे कन्ये, जाते रूपेण ते उभे । पद्मपत्रसुनेत्रे च, लावण्यरसकुम्पिके ॥ ६६ ॥ स्वर्णं यथाऽग्निना तप्तं, दधात्येवाधिकप्रभाम् । गतदोषे कुमार्यौ ते, शुशुभाते तथाधिकम् ॥ ६७ ॥ तत्क्षणात्तं गुणं दृष्ट्वा, कन्ययोरुभयोरपि । राजवर्ग्गादयो लोका, हर्षिताश्च चमत्कृताः ॥ ६८ ॥ महासेनो महीपालः, पत्नीप्रेमावतीयुतः । ऊर्ध्वस्थो रत्नपालस्य, लुञ्छनानि चकार च ॥ ६६ ॥ हर्षोत्कर्षवशेनाथ, प्रोचेऽथ रचिताञ्जलिः । उपकारकृते राजन्नवतारो भवादृशाम् ॥ ३७० ॥ न केवलं त्वया पुत्रीदोष एव निराकृतः । चिरान्मे हृदयाद्दुःखशल्योद्धारः कृतोऽधुना ॥ ३७१ ॥ कृताऽथ नगरे शोभा, संजातो धवलध्वनिः । भेरीप्रमुखनादेन, पूरिताः सर्व्वदिग्मुखाः ॥ ७२ ॥ मण्डिता दानशाला च, आरब्धोऽष्टाह्निकोत्सवः । अमारिपटहोऽवादि, राज्ञा देशे पुरादिषु ॥ ७३ ॥ अथ भूपसुते ते द्वे, रत्नपालं निरीक्ष्य तम् । अत्यन्तं धन्य-

मात्मानं, मन्यमाने जहृषतुः ॥ ७४ ॥ ऊचतुश्च सदौचित्यं, वाचा मधुरया रयात् । हे सुभग ! त्वयाऽद्यास्मज्जीवितं सफलं कृतम् ॥ ७५ ॥ महद्यदर्जितं पुण्यमावाभ्यां पूर्वजन्मनि । जागरितं तदद्यैव, भवेऽस्मिन् तव दर्शनात् ॥ ७६ ॥ इत्युक्त्वा भूपतेः कण्ठे, सोत्कण्ठे ते उभे अपि । दत्ते चिक्षिपतुर्वेगाद्वरमाले उभे अपि ॥ ७७ ॥ बद्धाञ्प्य मौक्तिकैर्हस्तौ, संयोज्य च जजल्पतुः । त्वमावयोर्भवेऽमुष्मिन्, पतिरन्ये हि सोदराः ॥ ७८ ॥ त्वमेव शरणं स्वामिन्नस्माकं कोऽपि नापरः । विवाहार्थं विभो ! लोप्यं, नास्मत्पित्रोर्वचस्त्वया ॥ ७९ ॥ इत्युक्त्वा ते गते मध्ये, सिद्धे कार्येऽतिहर्षिते । ततोऽवादीन्महासेनो, विनीतस्तं नृपं प्रति ॥ ३८० ॥ मदाग्रहेण मत्पुत्र्योस्त्वं पाणिग्रहणं कुरु । देव्यापि त्वं वरः प्रोक्तो, नान्यथा देवतावचः ॥ ८१ ॥ सार्धं श्रीरत्नपालेन, विवाहः कन्ययोस्तयोः । महोत्सवशतैश्चक्रे, महासेनेन भूभुजा ॥ ८२ ॥ समस्तमपि तद्राज्यमपुत्रत्वाद्विशेषतः । तदा नृपेण जामात्रे, प्रदत्तं करमोचने ॥ ८३ ॥ काव्यम्—अर्थोऽपि दत्तोऽथ सुवर्णमुख्यो, वराय तस्मै बहुकोटिसंख्यः । श्रीरत्नपालो नृपतिः सुपक्षो, विवाहितो भूपतिनेति दक्षः ॥ ८४ ॥ अथ राजा धृतोत्साहः, स्माह जामातरं प्रति । त्वदायत्तमिदं वित्तं, भुज्यतां स्वेच्छया सदा ॥ ८५ ॥ रत्नपालोऽथ सौधस्थो, भयशङ्काविवर्जितः । तत्र पञ्चविधान् भोगान्, भुनक्ति स्म प्रियायुतः ॥ ८६ ॥ महासेनो महीपालो, विवाह्यैतत्सुताद्वयम् । निश्चिन्तोऽथ सुखीभूतो, जातः सन्तोषवानपि ॥ ८७ ॥ रत्नपालविनीतत्वं, संवीक्ष्य मुदमुद्वहन् । आनन्दपेशलमना, अन्यदैवं तमब्रवीत् ॥ ८८ ॥ मम तुर्यं वयो जातं, न जातो नन्दनस्तथा । प्रायो भवेदपुत्रस्य, परो लक्ष्मीपतिर्नरः ॥ ८९ ॥ इदं प्राग्जन्मजं पुण्यं, यज्जातस्तव सङ्गमः । उष्णमध्ये मया प्राप्तं, शीतं यत्तव दर्शनम् ॥ ३९० ॥ अहं तु साम्प्रतं वृद्धः, सञ्जातः पक्वपर्णवत् । अस्मिन्नसारे संसारे, सारं

सुकृतसाधनम् ॥ ९१ ॥ कल्लोलचपला लक्ष्मीः, सङ्गमाः स्वप्नसन्निभाः । वात्याव्यतिकरोत्क्षिप्ततूलतुल्यञ्च यौवनम् ॥ ९२ ॥ इत्थं ज्ञात्वा नरेन्द्राहं, विरतो राज्यभारतः । साधयामि परं लोकं, गृहीत्वा संयमं रयात् ॥ ९३ ॥ तस्मान्ममास्य राज्यस्य, त्वं हि भारधरो भव । नन्दनस्य च जामातुः, किञ्चिदप्यन्तरं न हि ॥ ९४ ॥ धन्योऽसि कृतपुण्योऽसि, पूज्योऽसि त्वं सुतापतिः । विवेकी गुणवांस्त्वं हि, राज्यं तेन प्रदीयते ॥ ९५ ॥ अग्रे प्रदत्तमेवास्ति, साम्राज्यं करमोचने । एवं संबोध्य सद्वाक्यै, राज्ये संस्थापितः पुनः ॥ ९६ ॥ आकार्याथ सुते ते द्वे, महासेनेन भाषितम् । वत्से ! जातोऽस्मि दीक्षार्थी, जाते तुर्याश्रमेऽधुना ॥ ९७ ॥ युष्मद्दोपचये जाते, जाते पाणिग्रहोत्सवे । कृतकृत्योऽस्म्यतो दीक्षाऽनुमतं मे प्रदीयताम् ॥ ९८ ॥ तथा भव्यतया स्थेयं, धार्या शिक्षेति मामकी । वर्त्तव्यं पतिचित्तेन, न चान्यं वचनं कदा ॥ ९९ ॥ उक्तञ्च-अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता, तत्पादार्पितदृष्टिरासनविधौ तस्योपचर्या स्वयम् । सुप्ते भर्त्तरि भोजनं प्रकुरुते सुप्ते शयीत प्रिया, प्राज्ञैः पुत्रि ! निवेदिताः कुलवधूसिद्धान्तधर्म्मा अमी ॥ ४०० ॥ भर्तृभक्तिरियं धार्या, न कार्या चारतिः कदा । युष्मत्कृते भवच्छत्रे, दत्तं राज्यं पुरागतम् ॥ १ ॥ एवमन्तःपुरादीनां, शिक्षां दत्त्वा यथोचितम् । भारं चारोप्य सर्व्वेषां, भूपोऽभूत्संयमोत्सुकः ॥ २ ॥ तस्मिन्नवसरेऽन्येद्युः, पवित्रः सुचरित्रवान् । षट्त्रिंशद्गुणसंयुक्तो, विमुक्तः पापकर्मतः ॥ ३ ॥ नाम्ना शय्यम्भवः सूरिर्विहरन्नवनीतले । समाययौ पुरे तस्मिन्, शिष्यैः पञ्चशतैर्वृतः ॥ ४ ॥ युग्मम् । गत्वा गुर्वागमः प्रोक्तो, वनपालेन भूपतेः । तच्छ्रुत्वा भूपतिर्हृष्टो, ददौ तस्मै धनं बहु ॥ ५ ॥ ततो जहर्ष राजा यत्प्रस्तावे सूरिरागतः । तत्रस्थेन गुरुर्भाववन्दनेन च वन्दितः ॥ ६ ॥ ततः स्वमन्त्रिणः सर्व्वान्, जनान्नगरवासिनः । सुशिक्षापूर्व्वकं सम्यक्, मुत्कलाप्य यथाक्रमम्

॥७॥ पूज्यानपि च संपूज्य, दानमानादिभिर्भृशम् । गीतवादित्रनाट्यादिपूजां कृत्वा जिनालये ॥ ८ ॥ जिनालयान्नवीनांश्च, जीर्णोद्धारान् विधाय च । सत्साधर्मिकवात्सल्यं, कृत्वा दत्त्वा धनं तथा ॥९॥ दीनार्त्तेष्वपि लोकेषु, दानं दत्त्वाऽनुकम्पया । अमारिं सर्व्वभूतेषु, कारयित्वा विशेषतः ॥ ४१० ॥ ऋणैर्मुक्तं जनं सर्व्वं, कृत्वा ग्रामपुरादिषु । कृत्वाऽन्यद्गृहिधर्मंश्च, कृतार्थोऽभूद्व्रतार्थ्यसौ ॥ ११ ॥ पञ्चभिः कुलकम् । सद्दिने शिबिकारूढः, प्रौढोत्सवसमन्वितः । चतुरङ्गचमूयुक्तः, संयुक्तः सचिवादिभिः ॥ १२ ॥ मस्तके धृतसच्छत्रश्चामरद्वयराजितः । अश्वारूढः क्वचिन्नागारूढश्च स्वेच्छया क्वचित् ॥ १३ ॥ वैराग्यरससंपूर्णो, दीक्षाग्रहणहेतवे । चचालाथ महासेनो, रत्नपालनृपान्वितः ॥ १४ ॥ त्रिभिर्विशेषकम् । स्थाने स्थाने जनैः सर्व्वैर्विश्रामः पथि गृह्यते । दीयते च महादानमर्थिनामर्थसञ्चयैः ॥ १५ ॥ लुञ्छनानि क्रियन्ते च, दुकूलैः स्वर्णनाणकैः । नृपपृष्ठस्थया स्वस्रोत्तार्यते लवणं तदा ॥ १६ ॥ क्रियते बन्दिवृन्दैस्तु, विष्वग् जयजयारवः । गीतबन्धैस्तु गीयन्ते, गन्धर्व्वैर्भूपसद्गुणाः ॥ १७ ॥ वादित्राणि विचित्राणि, वाद्यन्ते च निरन्तरम् । नृत्यन्ति वारनार्यश्च, भरतभावेषु कोविदाः ॥ १८ ॥ स्वस्ववेश्मगवाक्षस्था, योषितो भर्तृसंयुताः । मार्गस्था अपि काश्चिच्च, यान्तं पश्यन्ति तं नृपम् ॥ १९ ॥ वर्धापयति काचिच्च, मौक्तिकैरक्षतैरपि । चिरं जीव चिरं नन्देत्याशिषो ददते स्त्रियः ॥ ४२० ॥ शृङ्गारिते पुरे तस्मिन्, हट्टादौ तोरणध्वजैः । पुष्पप्रकरसंपूर्णे, मार्गे भूपो व्रजत्यसौ ॥ २१ ॥ इत्याद्यैरुत्सवैः सार्धं, नृपः संप्राप तद्वनम् । हयाद्वयात्समुत्तीर्य, प्रविवेश वनान्तरे ॥ २२ ॥ कृत्वा नैषेधिकीं तत्र, दत्त्वा तिस्रः प्रदक्षिणाः । मौलिमूलेऽञ्जलिं धृत्वा, ववन्दे तं गुरुं मुदा ॥ २३ ॥ त्यक्त्वा पञ्च प्रमादांश्च, विमुच्य मदमत्सरौ । रत्नपालयुतो भूपो, यथास्थानमुपाविशत् ॥ २४ ॥ गुरुर्धर्म्माशिषं दत्त्वा, नृपा-

दीनां च तत्पुरः । विवेकोद्योतदीपाभां, प्रारेभे धर्म्मदेशनाम् ॥ २५ ॥ भो भव्याः ! श्रूयतां सम्यगेतत्संसारचेष्टितम् । सर्षपेण समं सौख्यं, दुःखं मेरुसमं भवे ॥ २६ ॥ यथा—चला विभूतिर्ननु जीवितं चलं, विनश्वरं यौवनमप्यकालतः । इदं शरीरं बहुरोगमन्दिरं, विमृश्य चैवं कुरु धर्म्ममन्वहम् ॥ २७ ॥ काव्यम्—आसाद्य मानुष्यमथार्यदेशं, जातिं प्रशस्यां कुलमुत्तमञ्च । रात्रिन्दिवा पुण्यमहो भजस्व, तस्योदयात्सर्व्वमनीषितं स्यात् ॥ २८ ॥ काव्यम्—सूत्रार्थी रत्नमालां दलति दहति वा चन्दनं भस्महेतो—र्नावं चाब्धौ भिनत्ति स्वहितविरहितो लोहकीलं जिघृक्षुः । प्राप्याचर्य्यं निधिं वा त्यजति जडमतिर्नित्यभिक्षाभिलाषी, सद्धर्म्मं यो न कुर्यादसुलभमनुभवं प्राप्य कृच्छ्रात्सुखैषी ॥ २९ ॥ अस्मिन्नपारसंसारसागरे दुस्तरेऽपि च । लघुकर्म्मा तरत्येव, परो ब्रुडति लोष्टवत् ॥ ४३० ॥ यथा पोतप्रयोगेण, सागरस्यावगाहनात् । दुर्लभान्यपि वस्तूनि, नीयन्ते पोतवाहकैः ॥३१॥ तथा गुरूपदेशेन, संसारस्यावगाहनात् । धर्मरत्नं हि दुष्प्रापं, प्राप्यते भव्यजन्तुभिः ॥ ३२ ॥ संप्राप्य भवपाथोधौ, बोधिरत्नं सुदुर्लभम् । रक्षणीयं प्रयत्नेन, यथा हरति कोऽपि न ॥ ३३ ॥ संयमार्थी नृपोऽप्यग्रे, विशेषाद् गुरुवाक्यतः । प्रतिबुद्धो महासेनो, विधिना व्रतमग्रहीत् ॥ ३४ ॥ अथ ज्ञानगजारूढः, शीलसन्नाहभृत् दृढम् । गृहीतध्यानखड्गश्च, दधत्संवेगखेटकम् ॥ ३५ ॥ गुर्व्वाज्ञाटोपकाटोपः, सकोपः क्रूरकर्म्मसु । चित्रं क्षमाधरः सोऽभून्मोहारिं जेतुमुत्सुकः ॥ ३६ ॥ युग्मम् । यतः—संमोहक्षितिपस्य संसृतिवधूवैधव्यदीक्षां दिशन्, सैन्येनेव चतुर्विधेन गुरुणा सङ्घेन दत्तोदयः, । गुर्व्वादेशनयातपत्रममलं बिभ्रत् शिरस्याभवं, प्रव्रज्याभिधया विधेहि महिमप्राज्यं स्वराज्यं चिरम् ॥ ३७॥ महाव्रतानि पञ्चापि, पञ्चाचारान् विचारतः । गुप्तीस्तिस्रोऽपि पुण्यात्मा, पालयामास सोऽन्वहम् ॥३८॥ तदा तु रत्नपालेन, कृतो दीक्षोत्सवो महान् । पुण्यप्रभावकः सोऽपि,

सञ्जातः श्रावकोत्तमः ॥ ३९ ॥ राजर्षिश्रीमहासेनयुक्तः शय्यम्भवो गुरुः । विजहार महीपीठे, रत्नपालोऽप्यगात्पुरम् ॥४४०॥
अमारीघोषणापूर्व्वं, दिनान्यष्टौ ततो नृपः । जिनालयेषु नृत्यादिमहोत्सवमकारयत् ॥ ४१ ॥ वरं वृणीध्वमित्यादिशब्दो-
च्चारणपूर्व्वकम् । ददौ राजा ततो दानं, दानमण्डपमाश्रितः ॥ ४२ ॥ दानात्सञ्जायते कीर्त्तिरर्त्तिर्नश्यति दानतः । दानं सम्प-
न्निदानञ्च, दानं देयमतो बुधैः ॥ ४३ ॥ यतः–सङ्ग्रहैकपरः प्राप, समुद्रोऽपि रसातलम् । दाता तु जलदः पश्य, भुवनो-
परि गर्ज्जति ॥ ४४ ॥ शुभेऽह्नि रत्नपालस्य, मिलित्वाऽन्यनृपादिभिः । भूयः पट्टाभिषेकोऽथ, विदधे विविधोत्सवैः ॥ ४५ ॥
सीमाधिपा नृपास्तेन, कृता नामितकन्धराः । गजादिसारवस्तूनि, लात्वा तस्य ढुढौकिरे ॥ ४६ ॥ स भक्तसेवकामात्यैः, सं-
सेवितपदाम्बुजः । न्यायेन पालयामास, राज्यं राजगुणान्वितः ॥ ४७ ॥ यतः–शत्रूणां तपनः सदैव सुहृदामानन्दनश्चन्द्रव-
त्पात्रापात्रपरीक्षणे सुरगुरुर्दानेषु कर्णोपमः । नीतौ रामनिभो युधिष्ठिरसमः सत्ये श्रिया श्रीपतिः, स्वीये सत्यपि पक्षपात-
सुभगः स्वामी यथार्थो भवेत् ॥ ४८ ॥ क्षमी दाता गुणग्राही, स्वामी दुःखेन लभ्यते । अनुरक्तः शुचिर्दक्षो, विमोर्भृत्योऽपि
दुर्लभः ॥ ४९ ॥ नाकालमृत्युर्न व्याधिर्न दुर्भिक्षं न तस्कराः । भवन्ति सत्त्वसंपन्ने, धर्म्मनिष्ठे महीपतौ ॥ ४५० ॥ गुणेषु
रागो व्यसनेष्वनादरो, रतिर्नये यस्य दया च दीने । चिरं स भुञ्ज्याचलचामरांशुकाः, सितातपत्राभरणा नृपश्रियः ॥ ५१ ॥
राज्ञा सन्तोषिताः पौराश्चौरातङ्कविवर्जिताः । न्यायेन पालिता नित्यं, न कोऽपि पीडितो मनाक् ॥ ५२ ॥ तदा
तत्पुरवासिन्यः, प्रजाश्चेतस्यचिन्तयन् । अहो प्राक् पुण्यमस्माकं, येनासीदीदृशः प्रभुः ॥ ५३ ॥ इत्थं पालयतो राज्यं,
सार्धं भार्याद्वयेन च । तस्यानुभवतो भोगान्, सुखं कालो ययौ बहुः ॥ ५४ ॥ तत्र जातेषु वर्षेषु, राज्ञः पञ्चशतेष्वथ ।

राज्ञ्यां कनकमञ्जर्यां, सुतोऽभूत्सिंहविक्रमः ॥ ५५ ॥ जातः प्रवर्धमानोऽसौ, पञ्चविंशतिवार्षिकः । द्वासप्ततिकलोपेतो, रूपेणैव
जितामरः ॥ ५६ ॥ पवित्रो विकसन्नेत्रो, महास्कन्धो महाभुजः । दुर्दान्तो दुष्टपापिष्ठे, धार्म्मिष्ठे धनदोपमः ॥ ५७ ॥ सर्व्व-
सौम्यगुणाधारः, कृपासारः क्षमाधरः । प्रवीणः पुण्यकार्येषु, सर्वविद्याविशारदः ॥ ५८ ॥ षट्त्रिंशदायुधाभ्यासविज्ञो विज्ञान-
सागरः । मन्त्रतन्त्रादितत्त्वज्ञो, मुख्यो दक्षेषु दानवान् ॥ ५९ ॥ सिंहविक्रमनामासौ, कुमारः सारविक्रमः । क्रीडन् विविध-
क्रीडाभिः, कालं नयति लीलया ॥ ४६० ॥ अन्यदा रात्रिशेषेऽथ, गतनिद्रः प्रजापतिः । नमस्कारं स्मरंश्चित्ते, राज्यं स-
स्मार पैतृकम् ॥ ६१ ॥ चतुर्भिः कलापकम् ॥ प्रभाते मन्त्रिसामन्तादीनाञ्च पुरतोऽवदत् । सुतं संस्थाप्य राज्येऽत्र, निजे
राज्येऽथ याम्यहम् ॥ ६२ ॥ ईदृशं वचनं श्रुत्वा, प्रोचे परिजनो विभो ! । न बालः शोभनो राजा, स्मृत्युक्तं हि विचारय
॥ ६३ ॥ बालराज्यं भवेद्यत्र, द्विराज्यं यत्र वा भवेत् । स्त्रीराज्यं मूर्खराज्यञ्च, यत्र स्यात्तत्र नो वसेत् ॥ ६४ ॥ सा किं सभा
यत्र न सन्ति वृद्धा, वृद्धा न ते ये न वदन्ति धर्म्मम् । धर्म्मः स नो यत्र न चैव सत्यं, सत्यं हि तद्यत्र परस्य रक्षा ॥ ६५ ॥
दानं प्रजापरित्राणं, न्यायोऽर्थो जनरञ्जनम् । राज्यकल्पद्रुमस्यैता, विपुलाः फलसंपदः ॥६६॥ कुलशीलगुणोपेतं, सत्यधर्म-
परायणम् । रूपिणं सुप्रसन्नं च, राज्याध्यक्षं तु कारयेत् ॥ ६७ ॥ प्राज्ञे नियोजितेऽमात्ये, त्रयो गुणा महीपतेः । यशः स्व-
र्गनिवासश्च, पुष्कलश्च धनागमः ॥ ६८ ॥ कृतेष्वमात्येषु पुरातनेषु, चिरं स्थिरा राजति राज्यलक्ष्मीः । यतः शरावेषु नवेषु
वारि, न्यस्तं समस्तं विलयं प्रयाति ॥ ६९ ॥ मूर्खे नियोजितेऽमात्ये, त्रयो दोषा महीपतेः । अयशः स्वार्थनाशश्च, नरके

पतनं ध्रुवम् ॥ ४७० ॥ क्रमागतः शुचिर्धीरः, सर्वरत्नपरीक्षकः । सुधी रक्षोऽभिचारी च, कोशाध्यक्षो विधीयते ॥ ७१ ॥ इङ्गिताकारतत्त्वज्ञः, प्रियवाक् प्रियदर्शनः । सकृदुक्तग्रही दक्षः, प्रतिहारः प्रशस्यते ॥ ७२ ॥ मेधावी पटुवाग् दक्षः, परचित्तोपलक्षकः । धीरो यथाऽर्थवादी च, दूतः स्यात्सप्तभिर्गुणैः ॥ ७३ ॥ धर्म्मशास्त्रार्थकुशलाः, कुलीनाः सत्यवादिनः । समाः शत्रौ च मित्रे च, नृपतेः स्युः सभासदः ॥ ७४ ॥ राज्यस्थितिमिमां राजन् !, विचारज्ञ ! विचारय । बालोऽयं ते सुतः स्वामिन् !, राज्यभारे कथं क्षमः ? ॥ ७५ ॥ राजोचे श्रूयतां सभ्या, भवद्भिः किं प्रजल्पितम् ? । जनोक्तिं किं न जानीथ, लघुस्थूलेषु को गुणः ? ॥ ७६ ॥ काव्यम्–हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो ?, वज्रेणाभिहताः पतन्ति गिरयः किं वज्रमात्रो गिरिः ? । दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तम–स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ? ॥ ७७ ॥ लघुस्थूलेषु देहेषु, कः प्रयोगः प्रवर्त्तते । कलिङ्गफलमुचुङ्गं, मरिचं हि चमत्कृतम् ॥७८॥ भूयोऽपि श्रूयतां वृद्धैर्भवद्भिः परिवारितः । बालोऽप्यसौ सुपक्षः सन्, भविष्यति गुणाग्रणीः ॥ ७९ ॥ यतः–सुपक्षो लभते लक्षं, गुणहीनोऽपि मार्गणः । पक्षहीनो विलक्षोऽथ, मार्गणो गुणपूरितः ॥ ४८० ॥ सुपक्षो भक्षते काको, वृक्षस्थो विविधं फलम् । दूरस्थोऽपि निरीक्षेत, विनापक्षस्तु केसरी ॥ ८१ ॥ एवमाख्याय दृष्टान्ताननुमत्या च मन्त्रिणाम् । राज्ये संस्थापयामास, मुहूर्त्ते निजनन्दनम् ॥ ८२ ॥ महानन्दपुरे रम्ये, राजाऽभूत्सिंहविक्रमः । एवमुद्घोषणां तत्र, कारयामास भूपतिः ॥ ८३ ॥ नवे राज्ञि कृते राज्यस्थितिः काचिन्नवा भवेत् । महानन्देति नामातो, नवं रत्नपुरं कृतम् ॥ ८४ ॥ मूल-

१ अक्षोभचारी च इति वा पाठः २ संख्यासप्तकं न मिलति षडेव गुणा दर्शिताः

प्रधानमुख्यानां, शिक्षामेवं नृपो ददौ । राज्यरक्षा सदा कार्या, कार्या चिन्ता सुतस्य मे ॥ ८५ ॥ सुसेव्यो लघुरप्येष, धार्याज्ञा सर्व्वदाऽस्य च । अहं पक्षं करिष्यामि, निजस्थाने गतोऽपि सन् ॥ ८६ ॥ एवं हि बहुधालाप्य, वस्त्राभरणदानतः । सन्तोष्य राजवर्गं तं, प्रीणिताश्च प्रजा अपि ॥ ८७ ॥ पुनः स्मृताऽथ सा देवी, ययाऽऽनीतः स वेडया । प्रत्यक्षीभूय साऽप्यूचे, किं स्मृताऽहं त्वया नृप ॥ ८८ ॥ राजोचे शृणु हे शक्ते !, तव भक्तिकृते मया । मम पुत्रोऽत्र मुक्तोऽस्ति, पालनीयः प्रयत्नतः ॥ ८९ ॥ सारा कार्या त्वया देवी, तस्य राज्ञो दिवानिशम् । पूजयिष्यति सोऽपि त्वां, सेवकस्ते भविष्यति ॥४९०॥ अन्यच्चैकं विमानं त्वं, नवीनं कुरु मत्कृते । यत्रारूढो नभोमार्गे, स्वपुरे यामि लीलया ॥ ९१ ॥ देवी प्रोचे भवत्सूनोश्चिन्ताऽस्ति मम मानसे । एवमुक्त्वा विमानञ्च, कृत्वा दत्त्वा गता सुरी ॥ ९२ ॥ अनुज्ञाप्य ततो लोकान्, पुत्रादीन् स्वजनानपि । राजा विमानमारुह्य, चचाल स्वपुरं प्रति ॥ ९३ ॥ गजाश्वरथपत्त्यादि, सैन्यं पृष्ठेऽचलद्भुवि । तदा विचित्रवादित्रध्वनिभिः पूरितं नभः ॥ ९४ ॥ महीशो महान् रत्नपालाभिधानः, खमार्गे व्रजन् दिव्यराजद्विमानः । नरैः खेचरैः भक्तितः स्तूयमानस्तदा शोभते देवतावत्प्रधानः ॥ ९५ ॥ ततः शीघ्रं गतो राजा, विमानस्थः पुरे निजे । लोकाः प्रमुदिताः सर्व्वे, चिराद्भूपागमे सति ॥ ९६ ॥ मन्त्र्याद्याः सम्मुखा जग्मुः, पतिता नृपपादयोः । राज्ञीद्वयान्वितो राजा, प्रविवेशोत्सवात् पुरम् ॥ ९७ ॥ गृहे गृहे स्म गायन्ति, सुशृङ्गारास्तदाऽङ्गनाः । राज्ञो वर्द्धापनं चक्रुः, पौराः प्राभृतपूर्व्वकम् ॥ ९८ ॥ निष्कण्टकं निरातङ्कं, राज्यं प्राज्यं करोत्यसौ । पुण्यमपि च पुण्यात्मा, विदधाति दिवानिशम् ॥ ९९ ॥ एवं विवाहसंबन्धा,

१ भूचरैः इति वा.पाठः.

यासामत्र प्रकीर्त्तिताः । महिष्यो नव मुख्यास्तास्तस्य राज्ञोऽभवन्निमाः ॥ ५०० ॥ शृङ्गारसुन्दरी चाद्या, द्वितीया रत्नवत्यपि । पत्रवल्ली मोहवल्ली, ततः सौभाग्यमञ्जरी ॥ १ ॥ देवसेना च गन्धर्वसेना कनकमञ्जरी । गुणमञ्जरी चैतास्ता, नामभिर्नव कीर्त्तिताः ॥ २ ॥ नवैता निधय इव, साक्षात्पूर्व्वभवप्रियाः । तथा त्रिंशत्सहस्राणि, राज्ञो राज्योऽभवन्पराः ॥ ३ ॥ षट्त्रिंशत्कोटयो ग्रामाः, पत्तयः षष्टिकोटयः । त्रिंशल्लक्षाश्च प्रत्येकं, रथनागेन्द्रवाजिनाम् ॥ ४ ॥ पत्तनद्वीपदुर्गाणां, वेलाकूलकरीटिनाम् । कर्बटखेटद्रोणानां, सहस्रा विंशतिर्मताः ॥५॥ युग्मम् । हेमाङ्गदादयो विद्याधरेशाश्च सहस्रशः । सेवाञ्च चक्रिरे तस्य,. नित्यं सद्भक्तियुक्तिभिः ॥ ६ ॥ स नित्यं कोटिसङ्ख्यस्य, कनकस्य व्ययं व्यधात् । ददौ च परिवाराय, वस्त्राण्याभरणानि च ॥७॥ कुम्पकस्थरसात्तस्य, संपद्येत धनं बहु । रसप्रभावतो राज्ये, न दुर्भिक्षं न डामरम् ॥ ८ ॥ व्याधयो नेतयो नैव, न दौःस्थ्यं नैव पीडनम् । सुखेन गमयामास, कालं सर्व्वजनोऽपि च ॥ ९ ॥ देवेन्द्रवन्नरेन्द्रोऽपि, दिव्यभोगान् बुभोज सः । एकच्छत्रमयं राज्यं, चक्रे च चक्रवर्त्तिवत् ॥ ५१० ॥ एवं गतानि वर्षाणि, दश लक्षाणि भूभुजः । शतसंख्यसुता जाता, गृहस्थद्रुमसत्फलाः ॥११॥ नामतस्तेऽभवन् पुत्रा, मेघहेमरथादयः । शुभलक्षणसम्पूर्णाः, सर्व्वावयवसुन्दराः ॥१२॥ सुरूपाः सुभगाः सौम्याः, सर्वविद्याविशारदाः । संप्राप्तयौवनाः सर्व्वे, कृतपाणिग्रहोत्सवाः ॥ १३ ॥ एवं चामारियात्रादि, पुण्यं राज्ञि प्रकुर्वति । सूरिः सुमतिसेनाह्वः, केवल्यागात्पुरेऽन्यदा ॥ १४ ॥ श्रीसूरिमागतं श्रुत्वा, राजा हर्षप्रपूरितः । परिवारेण संयुक्तो, वन्दितुं गतवान्वने ॥ १५ ॥ गुरुं नत्वा यथास्थानमुपविष्टो धराधिपः । प्रारेभे देशनां सूरिर्भव्याम्भोरुहबोधदाम् ॥ १६ ॥ अहो संसारवासेऽस्मिन्, जन्तवो जन्मकोटिषु । उत्पद्यन्ते, विपद्यन्ते लभन्ते न सुखं क्वचित् ॥ १७ ॥

यतः—चला विभूतिः क्षणभङ्गयौवनं, कृतान्तदन्तान्तरवर्त्ति जीवितम् । तथाप्यवज्ञा परलोकसाधने, अहो नृणां विस्मयकारि चेष्टितम् ॥ १८ ॥ यत्नेन पापानि समाचरन्ति, पुण्यं प्रसङ्गादपि नाचरन्ति । आश्चर्यमेतच्च मनुष्यलोके, क्षीरं परित्यज्य विषं पिबन्ति ॥ १९ ॥ पुनः प्रभातं पुनरेव शर्वरी, पुनः शशाङ्कः पुनरुद्गतो रविः । कालस्य किं गच्छति याति जीवितं, तथापि लोकः स्वहितं न बुध्यति ॥ ५२० ॥ सुधियः स्वहितायैव, सेवन्ते सुकृतं वरम् । दानशीलतपोभावभेदैरेव चतुर्विधम् ॥२१॥ वित्ततो दीयते दानं, शीलं चित्तसमुद्भवम् । दुष्करं तं न मुञ्चन्ति, ते जनाः स्वर्गगामिनः ॥ २२ ॥ प्राणात्ययेऽपि ये शीलं, न त्यजन्ति विवेकिनः । निर्वृतिं रत्नमालावत्, तत्प्रभावात् प्रयान्ति ते ॥ २३ ॥ नृपोऽपृच्छत्प्रभो ! काऽसो, रत्नमाला वराङ्गना । पालितं विषमं शीलं, यया तस्याः कथां वद ॥ २४ ॥ तथाहि—गुरुरूचेऽत्र भरते, पृथ्वीभूषणपत्तने । जन्मेजयाभिधो राजा, राज्यं न्यायादपालयत् ॥ २५ ॥ अन्यदाऽन्येन राज्ञाऽस्य, प्रेषितो वाजिपुङ्गवः । परीक्षार्थं स्वयं राजा, तं समारोहयद्धयम् ॥ २६ ॥ विपरीतशिक्षितोऽश्वः, सोऽचलत्प्राक् शनैः शनैः । राज्ञाऽचिन्ति विना वेगं, भव्येनानेन किं फलम् ? ॥ २७ ॥ विचिन्त्यैवं क्रुधा राज्ञा, वल्गा मुक्ता करात् यदा । तावदुच्छलितो वाजी, वायुवेगाच्चचाल च ॥ २८ ॥ काञ्चिन्महीं व्यतिक्रम्य, भीमाटव्यां स तस्थिवान् । मुक्त्वा हयं श्रमाद्भूपः, सुप्तो वृक्षतले ततः ॥ २९ ॥ तावद् व्योमनि गच्छन्त्या, वनदेवतया कया । तत्रागत्य जटीखण्डं, बबन्धे नृपमस्तके ॥ ५३० ॥ तत्प्रभावेण भूपस्य, जातं श्यामतरं वपुः । क्षणाज्जागरितो राजा, स्वं कृष्णाङ्गं व्यलोकयत् ॥ ३१ ॥ गतालङ्कारसद्वस्त्रं, श्यामं वीक्ष्य वपुर्नृपः । विस्मितश्चिन्तयामास, किमिदं जातमीदृशम् ? ॥ ३२ ॥ एकाकिनो वनस्थस्य, दुःखिनो मे इदं पुनः । ज्वरे हिक्का क्षते क्षारो, दग्धोर्ध्वे स्फोटक-

स्तथा ॥ ३३ ॥ एतस्मिन् समये तत्र, पृष्ठे सैन्यं समागतम् । तं कृष्णं वीक्ष्य पल्लीशधिया पृष्टं च तद्भटैः ॥ ३४ ॥ रे पल्लीश ! त्वया दृष्टो, जन्मेजयनृपोऽधुना । नृपेणोक्तमरे मूढा !, मां न जानीथ स त्वहम् ॥ ३५ ॥ तैरुक्तं त्वं कथं कृष्णोऽलङ्कारस्तर्हि ते क्व च ? । राजोचे विपरीतं मे, सर्व्वं कर्म्मवशादभूत् ॥ ३६ ॥ श्रुत्वैवं सैनिकाः प्रोचुस्त्वयेदं किं प्रजल्पितम् [1] ! अस्माकं प्रभुरीदृक्षः, कथं भवति रे शठ ! ॥ ३७ ॥ इत्युक्त्वा च हयं नीत्वा, ते गताः स्वपुरं प्रति । विच्छायवदनो भूपश्चचालैकदिशं प्रति ॥ ३८ ॥ कियद्दूरं गते तस्मिन्नागतास्तापसाश्रमाः । तापसैस्तस्य चातिथ्यं, कृतं संवीक्ष्य तद्गुणान् ॥३९॥ ततः कुलपतिर्विद्यादेवीमाराध्य युक्तितः । कारयित्वा च सामग्रीं, विधिना सह भूभुजा ॥ ५४० ॥ रत्नमालाभिधां कन्यां, विवाह्य करमोचने । अस्मै विद्यां ददौ प्रीत्या, युद्धे विजयकारिणीम् ॥ ४१ ॥ युग्मम् । तं पूर्वस्नेहयोगेन, विरूपमपि रूपिणम् । मन्यन्ती निजचित्ते सा, भर्तृभक्तिपराऽभवत् । ४२ ॥ रम्यसौधे तयोः प्रीत्या, स्वेच्छया रममाणयोः । भर्तुः शीर्षावलोकार्थमुपविष्टाऽन्यदा प्रिया ॥ ४३ ॥ तदा सा मूलिका शीर्षात्, त्रुटित्वा पतिता भुवि । स्वीयरूपधरो राजा, बभूव सुभगस्ततः ।: ४४ ॥ दिव्यरूपं पतिं वीक्ष्य, रत्नमाला मुदं दधौ । सख्या च प्रियवादिन्या, ज्ञापितस्तापसः पिता ॥ ४५ ॥ सोऽपि हृष्टो निजे चित्ते, मङ्गलध्वनिपूर्वकम् । महोत्सवं पुनश्चक्रे, तापसैश्च तदा मुदा ॥ ४६ ॥ तत्रान्यदागतः कश्चित्, खेचरः सैन्यसंयुतः । संवीक्ष्य रत्नमालां तां, हर्तुं लग्नाश्च तद्भटाः ॥ ४७ ॥ आश्रमान् पातयामासुस्तापसांश्च व्यडम्बयन् । तद्विलोक्य ढुढौकेऽथ, योध्धुं जन्मेजयो नृपः ॥ ४८ ॥ तं प्रौढविक्रमं दृष्ट्वा, भग्नास्ते खेचरा भटाः । दिशोदिशं प्रनष्टाश्च,

---

१ परस्मैपदं चिन्त्यम्,

स्थितवान् मुख्यखेचरः ॥ ४९ ॥ उभाभ्यां युद्धमारेभे, दिव्यास्त्रेण परस्परम् । युद्ध्यमानेन राज्ञाऽथ, खेचरो हेलया जितः ॥५.५०॥ न्यायधर्म्मे जयो ज्ञेयो, नान्यायेन जयो भवेत् । अदृष्टी(श्यी)भूय विद्याभृत्, स गतः क्वापि तत्क्षणात् ॥ ५१ ॥ तदाकाशात्पुष्पवृष्टिः, कृता देवैर्नृपोपरि । जन्मेजयनृपेणाहो, जितमेवञ्च भाषितम् ॥ ५२ ॥ ततो विशेषतो रत्नमाला स्नेहं नृपोपरि । दधती मुदिता भोगान्, भुनक्ति स्म यदृच्छया ॥ ५३ ॥ अथान्यदा शरत्काले, राजा राज्ञीयुतो वने । गत्वा विविधक्रीडाभी, रमते स्म स्मरोपमः ॥ ५४ ॥ इतश्च पूर्ववैरोषेण, तेन विद्याधरेण खे । उत्पाट्य कन्दरायां द्राक्, तौ मुक्तौ क्वापि दम्पती ॥ ५५ ॥ अचिन्तयत्तदा राजा, ममाहो कर्म्म दुस्तरम् । प्राक्तनं विद्यते येन, भवेद् दुःखं पुनः पुनः ॥ ५६ ॥ अत्रानीय विमुक्तोऽहं, सप्रियः केन वैरिणा ? । न ज्ञायते गतः क्वासौ, तर्हि किं कस्य कथ्यते ? ॥ ५७ ॥ तावत्तृषातुरा रत्नमाला ब्रूते स्म मे प्रभो ! । पाययानीय पानीयं, जन्तुस्तिष्ठेन्न तद्विना ॥ ५८ ॥ निर्गतौ कन्दरायास्तौ, सहकारतरोरधः । संस्थाप्य स्वप्रियां राजा, पानीयार्थं वनेऽभ्रमत् । ५९॥ यावज्जलं गृहीत्वा स, आगतो नरनायकः । न ददर्श प्रियां तावत्, सा हृता तेन वैरिणा ॥ ५६० ॥ विललाप ततो भूपो, मां मुक्त्वा क्व गता प्रिये ? । किङ्करोमि क्व गच्छामि, विरहं ते कथं सहे ? ॥ ६१ ॥ शून्यचित्तो नृपोऽरण्ये, भ्रमन् भ्रमन् गतः क्वचित् । तत्र शून्यं पुरं दृष्टं, प्रतोलीदुर्गमण्डितम् ॥ ६२ ॥ गतो मध्ये नृपस्तत्र, पश्यन् दग्धगृहावलीम् । दृष्ट्वा कश्चिन्नृपावासोऽश्वटितश्चैकमन्दिरे ॥ ६३ ॥ अपश्यत्तत्र शय्याधिरूढामेकाञ्च बालिकाम् । क्षामोदरीं सुरूपाञ्च, दृष्ट्वा तां नृपतिर्जगौ ॥ ६४ ॥ कथमेकाकिनी भद्रे !, शून्यञ्च किमिदं पुरम् ? । तद् ब्रूहि श्रोतुमिच्छामि, साऽब्रवीत् शृणु सत्तम ! ॥ ६५ ॥ प्रसिद्धाऽस्ति महीपीठे, कोशाम्बीति पुरी वरा । तत्र कुशध्वजो राजा,

पुष्पमालेति तत्प्रिया ॥ ६६ ॥ सूरवीरावुभौ पुत्रौ, तयोः सौभाग्यशालिनौ । पुत्री च रत्नमालैका, जयमाला तथाऽपरा ॥६७॥ वार्धके नृपतिर्दीक्षां, गृहीत्वाऽगात् शिवालयम् । राज्यार्थं भ्रातरौ तौ द्वावन्योऽन्यं योद्धुमुत्थितौ ॥ ६८ ॥ तं विरोधं परिज्ञाय, धात्र्याऽथ हेममालया । रत्नमाला सुता नीत्वा, विमुक्ता तापसाश्रमे ॥ ६६ ॥ पुत्रीवत्पालिता साऽथ, रत्नसिंह-तपस्विना । अत्र रत्नपुरे चाहमानीता जयमालिका ॥ ५७० ॥ चन्द्रकेतुनरेन्द्रस्य, मातुलस्य ममैव च । अर्पिताऽहं ततस्तेन, पुत्रीवत्परिपालिता ॥ ७१ ॥ सखीभिः सह क्रीडन्ती, गवाक्षस्थाऽहमन्यदा । दृष्टा कपालिना केन, याचिता मातुलान्तिके ॥ ७२ ॥ नाऽर्पिताऽहं स दूमित्वा, राज्ञा निर्वासितः पुरात् । तेन विद्याबलेनाथ, चन्द्रकेतुर्हतः क्रुधा ॥ ७३ ॥ भस्मीकृत्य पुरञ्चापि, कृतं शून्यं दुरात्मना । अहं तु स्थापिताऽत्रैका, पूर्वलोभेन पापिना ॥ ७४ ॥ इत्युक्त्वा सा पुनः प्रोचे, शृणु साहसिकाग्रणीः । तस्यागमनवेलैषा, सञ्जाता त्वं व्रज क्वचित् ॥ ७५ ॥ स निघृष्टो महादुष्टस्त्वां मुग्धं मारयिष्यति । अतः कारणतो याहि, जीवन् भद्राणि पश्यति ॥ ७६ ॥ राजा तं योगिनं द्रष्टुं, स्थितो निर्माल्यमध्यगः । इतश्चाकाशमार्गे द्राग्, जातो डमरकध्वनिः ॥ ७७ ॥ रौद्ररूपः सरक्ताक्षः, कन्थादण्डायुधावृतः । एकां नारीं करे धृत्वा, योगी तत्र समागतः ॥७८॥ कपाली स करालाक्षो, निविष्टो वेदिकोपरि । अग्रे संस्थाप्य तां बालामिदं वचनमब्रवीत् ॥ ७९ ॥ हे भद्रे ! तव भर्त्ता स, जलार्थं यावता गतः । तावत्त्वं निद्रया सुप्ता, कोमले पर्णसंस्तरे ॥ ५८० ॥ तदा विद्याधरेणैत्य, रागादमिततेजसा । त्वं हृताऽथ मया तस्य, सकाशान्मोचिता बलात् ॥८१॥ अत्रानीता च हे सुभ्रु!, यदि तस्य विडम्बनात् । निष्कासिता ततो भोगा, भुज्यन्तां मयका सह ॥ ८२ ॥ न मन्यसे यदि त्वं मां, तर्हि त्वां मारयाम्यहम् । श्रुत्वैवं वनिता स्माह, शृणु रे पाप ! दुष्ट-

धीः ॥ ८३ ॥ निश्चला मेरुचूलापि, कदा चलति भूतले । परं प्राणात्यये नैव, शीलमुल्लङ्घयाम्यहम् ॥ ८४ ॥ इत्थं महाग्रहं
ज्ञात्वा, योगी खड्गमनर्त्तयत् । तदा तस्याः स्वरं श्रुत्वा, राज्ञा ज्ञाता निजप्रिया ॥ ८५ ॥ महाक्रोधस्ततो भूपो, गुहाया
इव केसरी । निर्माल्यात्प्रकटीभूतः, प्रियापीडां सहेत कः ? ॥ ८६ ॥ यतः—सद्यो लक्ष्मीप्रियाधान्याऽपहारे सति मानवाः ।
भवन्ति दुःखिनोऽत्यन्तं, चित्ते नूनमनारतम् ॥ ८७ ॥ रे पापिष्ठ ! किमारब्धमुत्तिष्ठ मम संमुखः । इत्युक्त्वा भूभुजा खड्ग-
घातात् योगी द्विधाकृतः ॥ ८८ ॥ अन्यायकारिणो वृद्धिं, यदि यान्ति महीतले । तदा लोकः कथं वेत्ति, ह्यन्तरं पुण्यपाप-
योः ? ॥ ८९ ॥ अथ सा जयमालापि, सहर्षाऽऽगत्य सत्वरम् । भगिनीं रत्नमालां तामालिङ्ग्य प्रणनाम च ॥ ५९० ॥
स्वस्ववृत्तं यथाभूतं, ताभ्यामुक्तं परस्परम् । जयमालाऽथ भूपस्योद्वाहिता रत्नमालया ॥ ९१ ॥ रतिप्रीतिसमानाभ्यां, ताभ्यां
सार्धं स भूमिपः । कन्दर्प्प इव सद्भोगान्, भुञ्जानोऽत्र स्थितः कियत् ॥ ९२ ॥ चचाल सप्रियो भूपः, पश्चात्पूर्वदिशं प्रति ।
कस्मिन् केलिवने गत्वा, विशश्राम क्षुधातुरः ॥ ९३ ॥ स्त्रीयुग्मे शयिते राजा, फलार्थी कानने गतः । यावत्फलानि लात्वा
स, आगतो नरनायकः ॥ ९४ ॥ तावद् ददर्श नो सुप्तां, रत्नमालां निजप्रियाम् । प्रबुद्धा जयमालाऽथ, पृष्टा राज्ञा क ते
स्वसा ? ॥ ९५ ॥ सोचे देव ! विजानामि, नाहं निद्रावशं गता । राजोचे हा कथं भार्यावियोगो मे पुनः पुनः ? ॥ ९६ ॥
मुक्त्वाऽथ कुत्र सुस्थाने, जयमालां महीपतिः । विरहार्त्तः स्वप्रियायै, स्वयं बभ्राम मेदिनीम् ॥ ९७ ॥ भ्रामं भ्रामं मही-
पीठे, वनेऽगान् मलयाभिधे । तन्मध्ये च महोत्तुङ्गं, ददर्श श्रीजिनालयम् ॥ ९८ ॥ तत् दृष्ट्वा तत्र सोत्साहश्चैत्यमध्ये नृपो
गतः । तत्र भक्त्या युगादीशप्रतिमा तेन वन्दिता ॥ ९९ ॥ एतस्मिन्समये कोऽपि, व्योम्नो गरुडवाहनः । आगतः खेचर-

स्तत्र, ववन्दे च जिनेश्वरम् ॥ ६०० ॥ जिनस्नात्रं विधायाथ, स्नात्रनीरेण कुम्पकम् । भृत्वा च मण्डपे सोऽगात्, राजा नत्वा पप्रच्छ तम् ॥ ६०१ ॥ किमर्थं गृह्यते नीरं, कोऽसि त्वं कुत आगतः ! युनत्या वसनं चैतत्, स्कन्धे ते वर्त्तते कथम् ? ॥ २ ॥ जगाद खेचरः सोऽपि, शृणु साधर्म्मिकोत्तम ! । ममैतां सकलां वार्त्तां, वदामि तत्र मूलतः ॥ ३ ॥ वैताढ्येऽस्त्युत्तरश्रेण्यां, रत्नचूडो धराधिपः । तद्भ्राता मणिचूडोऽहं, सदा स्नेहभरान्वितः ॥ ४ ॥ कर्म्मयोगेन मद्भ्रातुर्जातो दाहज्वरो महान् । एतत्स्नात्रजलेनाशु, यान्ति रोगा ज्वरादयः ॥ ५ ॥ जलायागच्छता मार्गे, जन्मेजयनृपप्रिया । मया दृष्टा खेचरेणापहृताऽमिततेजसा ॥ ६ ॥ सा सती वचनं तस्य, भोगार्थं नैव मन्यते । कामान्धो बहुधा सोऽपि, विडम्बयति तां ततः ॥ ७ ॥ मयाऽनेकप्रकारेण, बोधितोऽपि न बुध्यते । स नो मुञ्चति दुष्टात्मा, तां राज्ञीं शीलशालिनीम् ॥ ८ ॥ रुदन्त्याः पथि गच्छन्त्यास्तस्या वस्त्रं पपात च । तद्गृहीत्वाऽधुनाऽत्राऽहमागतो हे नरोत्तम ! ॥ ९ ॥ ततो नृपेण वृत्तं स्वं, खेचराय निवेदितम् । जन्मेजयनृपं ज्ञात्वा, तस्मै वस्त्रं तदर्प्पितम् ॥ ६१० ॥ पुनः प्रोचे नृपो मित्र !, दृश्यसे त्वं नरोत्तमः । साहाय्यं कुरु मे राज्ञीप्रत्यानयनहेतवे ॥ ६११ ॥ प्रतिपद्य वचो राज्ञः, खेचरो भूपसंयुतः । वैताढ्याद्रौ गतः शीघ्रं, दूतत्वे प्रेषितो नरः ॥ १२ ॥ विज्ञप्तोऽमिततेजाः स, गत्वा दूतेन हे प्रभो ! । जन्मेजयप्रियां मुञ्च, तद्विरोधान्न ते शुभम् ॥ १३ ॥ श्रुत्वैवं कोपवान् सोऽपि, स्माह दूतं प्रति स्फुटम् । रे प्रत्यर्प्पयितुं तस्य, किमानीतास्ति सा मया ? ॥ १४ ॥ वारं वारं हृताप्यद्य, चटिता साऽस्ति मत्करे । दूतेनाथ स्वरूपं तद्, गत्वा भूपस्य भाषितम् ॥ १५ ॥ मेलितान्यथ सैन्यानि, खेचरयोर्द्वयोरपि । रामरावणवज्जातं, तयोर्युद्धं जयार्थिनोः ॥ १६ ॥ मित्रखेचरसांनिध्याद्राज्ञीशीलप्रभावतः । षण्मासैर्भूभुजा जिग्ये, दिव्यास्त्रैः

शत्रुखेचरः ॥ १७ ॥ रत्नमालां गृहीत्वाऽथ, मित्रेण सह भूपतिः । आदाय जयमालां च, स प्राप नगरं निजम् ॥१८॥ सहर्षाः सचिवाः सर्व्वे, स्वजनाश्च प्रजा अपि । आगताः सम्मुखा राज्ञो, मिलिता नतिपूर्व्वकम्॥ १९॥ पृच्छन्ति स्म प्रजाः स्वामिन् !, किं तेऽभूदिन्द्रजालवत् । हयाकृष्टादिसंबन्धो, नृपेणोक्तो निजस्ततः ॥ ६२० ॥ राज्ञा पृष्टः पुनर्मन्त्री, मां विना राज्यरक्षणम् । कथं कृतं ततो मन्त्री, प्रोवाच शृणु भूपते ! ॥ ६२१ ॥ नैमित्तिको मया पृष्टः, तेनेदं कथितं वचः । वर्षैर्द्वादशभिः पूर्णैरायास्यति तव प्रभुः ॥ २२ ॥ त्वत्पदेऽथ मया यक्षः, स्थापितः प्रतिमामयः । पूर्व्वभक्तिवशात्स्वामिंस्तवाज्ञा न च खण्डिता ॥ २३ ॥ महोत्सवेन भूपालः, प्रविवेश पुरान्तरे । खेचरं वालयित्वाथ, राज्यभारं बभार च ॥ २४ ॥ क्रमेण रत्नमालायां, सुतश्चन्द्रोदयाभिधः । अभवत् पुण्ययोगेन, ववृधे स च लीलया ॥ २५ ॥ अथान्येद्युः पुरोद्याने, ज्ञानी सूरिः समागतः । वन्दनाय गतो राजा, तत्रान्तःपुरसंयुतः ॥ २६ ॥ तिस्रः प्रदक्षिणा दत्त्वा, गुरुं नत्वोपविश्य च । श्रुत्वा सद्देशनां प्रान्ते, भूपोऽवादीत्कृताञ्जलिः ॥ २७ ॥ गुरो ! मे कर्म्मणा केन, दुःखं द्वादशवार्षिकम् । पुनः पुनर्वियोगश्च, संप्राप्तो रत्नमालया ? ॥ २८ ॥ सूरिः प्रोवाच भो भूप !, शालिग्रामे पुराऽभवत् । अनेकगोकुलस्वामी, भद्रनामा कृषीबलः ॥ २९ ॥ तत्प्रिया रुक्मिणीनाम्नी, मिथो द्वौ प्रीतिशालिनौ । शरत्कालेऽन्यदा शालिरक्षणार्थं च तौ गतौ ॥ ६३० ॥ ताभ्यां केदारमध्येऽथ, हंसो हंसीयुतो वरः । क्रीडन्निजेच्छया दृष्टो, लालयन्नपि चार्भकान् ॥ ६३१ ॥ गृहीत्वा राजहंसीं सा, दत्ता भर्त्रा प्रियाकरे । विनोदात् कुङ्कुमैर्लिप्त्वा, तया मुक्ताऽथ पक्षिणी ॥ ३२ ॥ रक्तवर्णां ततो हंसीं, हंसो नैवोपलक्षयेत् ( क्षयताम् ) । दृष्ट्वा दृष्ट्वा पुनर्याति, पुनरायाति मोहतः ॥ ३३ ॥ न रमेत स्पृशेन्नैव, हंसो हंसीं मनागपि । भ्रामं भ्रामं ततः

पक्षी, महाखेदमवाप सः ॥ ३४ ॥ ईदृशो द्वादशघटीमानोऽभूद्विरहस्तयोः । एवं दृष्ट्वाऽथ रुक्मिण्या, मुक्ता प्रक्षाल्य पक्षिणी ॥ ३५ ॥ तदोपलक्ष्य हंसोऽसौ, प्रियाया मिलितो मुदा । एवं ताभ्यामन्तरायकर्म्माशुभमुपार्जितम् ॥ ३६ ॥ भद्रजीवोऽथ दानादिपुण्याज्जातो भवान्नृपः । रुक्मिणी शीलधर्म्मेण, सञ्जाता रत्नमालिका ॥३७॥ हंसजीवो भवं भ्रान्त्वाऽमिततेजा बभूव सः । हंसी सा वनदेवी च, सञ्जाता शुभकर्म्मतः ॥ ३८ ॥ अश्वाकृष्टो यदा सुप्तो, वने त्वं पूर्वमत्सरात् । जटीबन्धात्कृतः श्यामो, वनदेव्या तया तदा ॥ ३९ ॥ वारं वारं हृता राज्ञी, यत्तेनामिततेजसा । सन्तापितः पूर्वभवे, हंसस्तत्कर्मजं फलम् ॥ ६४० ॥ प्राग्द्वादशघटीमानो, वियोगः पक्षिणोः कृतः । भुक्तं द्वादशवर्षेषु, युवाभ्यां विरहासुखम् ॥ ६४१ ॥ पुरातनं हि यत्कर्म्म, शुभं वाप्यशुभं भवेत् । जन्मकोट्यां गतायां तद्भोक्तव्यं नान्यथा भवेत् ॥ ४२ ॥ यतः—हसन्तो हेलया जीवाः, कर्म्मबन्धं प्रकुर्व्वते । तद्विपाको हि कायेषु, रटद्भिरपि भुज्यते ॥ ४३ ॥ इत्थं पूर्व्वभवं श्रुत्वा, फलं चाप्यल्पकर्म्मणः । जन्मेजयनृपो बुद्धो, वैराग्यं प्राप सप्रियः ॥ ४४ ॥ चन्द्रोदयसुतं राज्ये, निवेश्याथ स भूपतिः । प्रियायुग्मयुतो दीक्षां, जग्राह ज्ञानिनोऽन्तिके ॥ ४५ ॥ इतश्चामिततेजाः स, मृत्वाऽऽर्त्तध्यानतत्परः । वने क्वापि प्रचण्डोऽभूत्, षण्डस्तादृशकर्म्मतः ॥ ४६ ॥ गतोऽन्यदा वने तत्र, जन्मेजयमुनीश्वरः । कायोत्सर्गे स्थितस्तत्र, कृत्वा सुस्थिरमानसम् ॥ ४७ ॥ भ्रमंस्तत्रागतः षण्डो, दृष्ट्वा तं सुस्थितं मुनिम् । दधावे पूर्ववैरेण, शृङ्गघातैर्हतो मुनिः ॥४८॥ पुनः पादैर्हन्यमान, आत्मानं स मुनीश्वरः । अध्यासयति शान्तात्मा, न चचाल मनागपि ॥ ४९ ॥ उपसर्गान्सहन् जज्ञे, सोऽन्तकृत्केवली क्षणात् । पूरयित्वा तदा स्वायुर्जगाम परमं पदम् ॥ ६५० ॥ वृषः सिंहहतो मृत्वा, तत्पापान्नरके

ययौ । पुनस्तिर्यङ् नारकश्चेत्यभ्रमत् सुचिरं भवे ॥ ५१ ॥ साध्वी तु रत्नमाला सा, जयमालासमन्विता । चिरं सम्पाल्य चारित्रं, स्वर्गलोकं गता ततः ॥ ५२ ॥ अवतीर्य विदेहेऽथ, तीर्थङ्करकरेण ते । उभे अपि व्रतं प्राप्य, प्रापतुर्मोक्षमक्षयम् ॥ ५३ ॥ सङ्कटेऽपि यथा शीलं, पालितं रत्नमालया । अन्यैरपि तथा पाल्यं, निर्म्मलं मोक्षकाङ्क्षिभिः ॥ ५४ ॥ देशनान्ते गुरुं नत्वा, रत्नपालोऽवदत्प्रभो ! । यद् यत् कर्म्मस्वरूपं तु, पृच्छामि वद तत्तथा ॥ ५५ ॥ कथं मे बलिनो राज्यं, गृहीतं जयमन्त्रिणा ? । कदर्थिता जयेनैव, कथं शृङ्गारसुन्दरी ? ॥ ५६ ॥ कर्म्मणा केन राज्यं तद्, गतं लब्धं पुनर्मया । सर्व्वकार्यकरो लब्धो, दुर्लभोऽपि कथं रमः ? ॥ ५७ ॥ पीडिता कुष्ठरोगेण, कथं कनकमञ्जरी ? । केन कर्म्मविपाकेन, जातान्धा गुणमञ्जरी ? ॥ ५८ ॥ कथं तयोर्द्वयोर्देव !, गुणो जातोऽल्पयोगतः । एवं पुरातनं कर्म्म, सर्व्वेषां ब्रूहि केवलिन् ! ॥ ५९ ॥ केवली स्माह हे राजन्नत्रैव भरताभिधे । क्षेत्रे रत्नपुरे पूर्व्वं, रत्नवीरो नृपोऽभवत् ॥ ६० ॥ श्रीदेवीप्रमुखास्तस्य, नव राज्ञ्योऽभवन् वराः । तत्पुरे वणिजौ सिद्धधनदत्ताभिधावुभौ ॥ ६१ ॥ अदत्तयोगतस्तौ द्वौ, जातौ दारिद्र्यपीडितौ । श्रूयते जनगीरेवं, नादत्तमुपतिष्ठति ॥ ६२ ॥ ताभ्यां प्रोक्तं मिथोऽन्येद्युर्धनार्थे कश्चिदुद्यमः । क्रियते येन सद्भाग्याभाग्ययोर्लभ्यतेऽन्तरम् ॥ ६३ ॥ काचिद्देवी ततस्ताभ्यामाराद्धा शुभभावतः । विंशत्याऽथोपवासैः सा, प्रत्यक्षा देवताऽभवत् ॥ ६४ ॥ प्रोचे सैवमहो वत्सौ !, द्वयोर्लक्ष्मीविवेकयोः । मध्ये याच्यं विमृश्यैकं, द्वयं नैव प्रदीयते ॥ ६५ ॥ सिद्धदत्तोऽथ लक्ष्मीं च, विवेकं धनदत्तकः । ययाचे तद्वरं दत्त्वा, तयोर्देवी तिरोदधे ॥ ६६ ॥ अथैव सिद्धदत्तस्य, निर्विवेका रमाऽभवत् । विवेको धनदत्तस्य, भाजनं सर्व्वसंपदाम् ॥ ६७ ॥ अन्यदा सिद्धदत्तस्य, कश्चित्कापालिको गृहे । आयातः सति मध्याह्ने, भक्त्या तेन स

भोजितः ॥६८॥ तुष्टेन तेन त्रपुषीफलानि कति योगिना । दत्तानि सिद्धदत्ताय, मन्त्रितानि सुमन्त्रतः ॥६९॥ उक्तं चैतानि व(उ)प्तानि, प्ररोहन्ति घटीद्वये । तद्वल्ली यत्नयोगेन, मण्डपेऽथ चटाप्यते ॥६७०॥ ततः पुष्पफलान्यस्याः, सुधारससमानि वै । भक्षितानि क्षुधां तृष्णां, सर्व्वपीडां हरन्त्यहो ! ॥ ७१ ॥ वाताश्चतुरशीतिः षट्सप्ततिर्नेत्रजा रुजाः । अष्टादशापि कुष्ठानि, सन्निपातास्त्रयोदश ॥ ७२ ॥ शाम्यन्ति फलमाहात्म्याद्द्विपे स्थावरजङ्गमे । इत्युदीर्य गतो योगी, सिद्धदत्तो व्यचिन्तयत् ॥७३॥ युग्मम् ॥ अहो ! मयाऽद्य लब्धानि, फलान्येतानि भाग्यतः । उप्तं च विधिना तेन, फलं तत्फलितं क्षणात् ॥ ७४ ॥ हर्षेण सिद्धदत्तेन, शब्दोऽथो पातितः पुरे । अहो ! ये व्याधिता लोकाः, सर्व्वेऽप्यायन्तु मद्गृहे ॥ ७५ ॥ द्रव्यं शतसहस्रादि, यथायोगं स लोभतः । पूर्व्वमादाय दत्तेऽथ, फलान्येतानि रोगिणाम् ॥ ७६ ॥ फलेषु सेव्यमानेषु, नीरोगा अभवन् जनाः । सिद्धदत्तोऽपि तद्द्रव्यैरजायत महर्द्धिकः ॥ ७७ ॥ अन्यदा सिद्धदत्तोऽसौ, धनलोभे प्रवर्धिते । परद्वीपं गतो वार्द्धौ, पोतं संपूर्य वस्तुभिः ॥ ७८ ॥ तत्स्थानाद्वलिते तस्मिन्, यानपात्रं कुवायुना । प्रेरितं चाब्धिकल्लोलैः, पताकावन्ननर्त्त तत् ॥ ७९ ॥ तदा क्रयाणकान्यब्धौ, लोकैः क्षिप्तानि भूरिशः । लघुत्वेन ततः पोतः, शून्यद्वीपे ययौ रयात् ॥ ६८० ॥ पोतादुत्तीर्य लोकास्ते, तस्मिन्द्वीपे स्थितास्तटे । त्रपुषी सिद्धदत्तेन, उप्ता धान्यक्षये सति ॥ ८१ ॥ उद्गता फलिता वल्ली, तृप्ता जाता नराः फलैः । फलास्वादनतोऽप्यग्रे, बभूवुः सुखिनो जनाः ॥ ८२ ॥ अन्येद्युरागता वार्द्धेस्तत्रैका जलमानुषी । वारिता सिद्धदत्तेन, खादन्ती त्रपुषीफलम् ॥ ८३ ॥ रत्नमेकं करे धृत्वा, तेन तस्याः प्रदर्शितम् । तदा साऽचिन्तयन्नूनमेष रत्नानि याचते ॥८४॥ ध्यात्वेति वेगतः पश्चाद्, गता सा जलमानुषी । समुद्राद्रत्नमानीय, सिद्धदत्ताय चार्प्पयत् ॥ ८५ ॥ यावन्मात्राणि

रत्नानि, सिद्धदत्ताय सा ददौ । तावन्मात्रफलान्येष, तस्यै दत्ते स्म सर्वदा ॥ ८६ ॥ बहुकालेन सिद्धेन, रत्नराशिः कृतो भृशम् । पोते चिह्ना स रत्नानि, क्रमादागात्पुरे निजे ॥ ८७ ॥ इतश्च रत्नलोभेन, रत्नवीरेण भूभुजा । निजाज्ञा दापिता यानपात्रे द्वादश वासरान् ॥ ८८ ॥ न्यायं धृत्वा स्वयं चित्ते, त्रयोदशदिने नृपः । शुल्कं नीत्वाऽमुचत्पोतं, सिद्धदत्तो जहर्ष च ॥ ८९ ॥ षट्षष्टेर्हेमकोटीनां, स्वामी जातः सुरीवरात् । परं स निर्विवेकत्वात्, कस्य किञ्चिन्न मन्यते ॥ ६९० ॥ यतः—कुवंशपतितो राजा, मूर्खपुत्रो हि पण्डितः । निर्धनेन धनं प्राप्तं, तृणवत् मन्यते जगत् ॥ ६९१ ॥ यतः—श्रुतवाग्दृष्टिहरणं, करोति लक्ष्मीर्नरस्य को दोषः ? । गरलसहोदरजाता, आश्चर्यं यन्न मारयति ॥ ९२ ॥ मेलापके न मिलति, नोपकारं करोति च । श्रीमत्स्वजनमध्येऽपि, नाऽऽयाति स्वमदेन सः ॥ ९३ ॥ न देवे न गुरौ चापि, न धर्म्मे न कुटुम्बके । व्ययति स्म निर्विवेकात्, काणामपि कपर्दिकाम् ॥ ९४ ॥ कदर्यभावतस्तस्मिन्, द्वेषी जातो जनोऽखिलः । महाजने धनान्धेति, ख्यातिरेतस्य विस्तृता ॥ ९५ ॥ स्वगर्ववशतो मूढो, जानाति स्म न किञ्चन । पशुवन्निर्विवेकी स, केवलं धनमार्जयत् ॥ ९६ ॥ तदाऽन्यो धनदत्तोऽपि, देवीवरमवाप्य तम् । तस्य प्रभावतः सम्यक्, सञ्जातः सुविवेकवान् ॥ ९७ ॥ यतः—भक्त्या देवगुरून् सदा नमति यो दानं च दत्ते मुदा, नो हिंसां कुरुते न जल्पति मृषा गृह्णात्यदत्तं न च । अन्यस्त्रीमपवर्जयेद्वहति नो गर्वं न निन्देत्परं, शुद्धात्मा धनदत्त एष विनयी दक्षोऽल्पलोभः क्षमी ॥ ९८ ॥ विवेकी धनदत्तोऽसौ, मिलिते श्रीमहाजने । आकार्यते वचस्तस्य, हितं सर्वोऽपि मन्यते ॥ ९९ ॥ अन्यदा तत्पुरे कश्चिदागाद्वैदेशिको वणिक् । रोगार्त्तः स मठे सुप्तस्तस्य शुश्रूषको न कः ॥ ७०० ॥ यस्मिन् ग्रामे पुरे वापि, नात्मीयः कोऽपि संवसेत् । क्षणं हि तत्र

न स्थेयं, सुधीभिः शुभकाङ्क्षिभिः ॥ ७०१ ॥ अनाथं तं नरं वीक्ष्य, धनदत्तः स्वशक्तितः । चकार तस्य शुश्रूषां, कर्म्मतः स मृतः परम् ॥ २ ॥ ततस्तद्देहसंस्कारकृते संमिलिते जने । आहूतः सिद्धदत्तः स, नागतो मद्भारितः ॥ ३ ॥ ततो वैदेशिकं मर्त्यं, मृतमुत्पाट्य वेगतः । श्मशाने वणिजो जग्मुस्तैस्तत्र रचिता चिता ॥ ४ ॥ परमज्ञातगोत्रत्वाद्, दत्तेऽग्निं तस्य कोऽपि न । स्पर्धया वह्निदाने ते, विवदन्ते परस्परम् ॥ ५ ॥ स्वभावोऽयं हि लोकानां, येह साधारिणी क्रिया । तां गाम्भीर्यगुणं धृत्वा, स्वयमेकः करोति न ॥ ६ ॥ तैः सर्व्वैरपि सम्भूय, धनदत्तस्य भाषितम् । त्वं मुञ्चाग्निं स मेने तज्जना दूरेऽथ ते स्थिताः ॥ ७ ॥ धनोऽथ वह्निदानाय, शववस्त्रमपाकरोत् । वस्त्रे ग्रन्थिं तदा दृष्ट्वा, छोटयित्वा व्यलोकयत् ॥ ८ ॥ दृष्टानि पञ्च रत्नानि, बहुमूल्यानि तान्यथ । विवेकात्परकीयानि, नादत्तान्यग्रहीदसौ ॥ ९ ॥ महाजनस्य तेनापि, गृहीत्वा दर्शितानि च । तस्य निर्लोभतां ज्ञात्वा, ते सर्व्वेऽपि चमत्कृताः ॥ ७१० ॥ ते सर्व्वे वणिजस्तुष्टास्तं प्रत्येवं बभाषिरे । अस्माभिस्तव दत्तानि, रत्नानि त्वं गृहाण भोः ! ॥ ७११ ॥ श्रुत्वैवं धनदत्तोऽपि, प्रत्युत्तरमुवाच सः । अनाथं यद्भवेद्द्रव्यं, तस्य स्वामी नृपो भवेत् ॥ १२ ॥ भवेयुर्गोत्रिणः केऽपि, वैदेशिकनरस्य वा । तेषां हि रत्नसंबन्धो, नाहं गृह्णाम्यमूनि तत् ॥ १३ ॥ तेन वस्त्रे ततो बध्वा, तानि मुक्तानि भूपरि । कृत्वाऽथ शवसंस्कारं, स्वस्वगेहे जना गताः ॥ १४ ॥ धनदत्तोऽपि रत्नानि, गृहीत्वाऽऽगत्य च द्रुतम् । उक्त्वा सर्वं च सम्बन्धं, भूपतेस्तान्यढौकयत् ॥ १५ ॥ राजा जगाद हे भद्र !, त्वया शुश्रूषितो नरः । तद्रत्नानि गृहाण त्वं, यद्वा लब्धानि भाग्यतः ॥ १६ ॥ अत्याग्रहेण भूपेन, प्रदत्तं रत्नपञ्चकम् । तेन नीत्वा च विक्रीय, कृताः षट्कोटिटङ्ककाः ॥ १७ ॥ धनदत्तेन तद्द्रव्यैर्व्यवसायं चिकीर्षुणा । प्राक्

स्वपुण्यमपुण्यं वा, विलोकयितुमीप्सितम् ॥ १८ ॥ स्वकीया दिवसा रम्या, अरम्याः सन्ति वाऽधुना । स्वल्पस्वल्पेन कार्येण, परीक्षामिति स व्यधात् ॥ १९ ॥ स्वल्पाहारं स जग्राह, तथाप्यासीदजीर्णता । अल्पोच्चात्पतितस्यास्य, देहपीडा घनाऽभवत् ॥ ७२० ॥ स्वल्पक्रयाणके क्रीते, हानिर्जाता च विक्रये । एका च्छागी वहिर्मुक्ता, भक्षिता सा वृकेण च ॥ ७२१ ॥ एवं दिने दिने चापि, कृते तेन परीक्षणम् । विपरीतेऽथ सञ्जाते, दिना ज्ञाताश्च मध्यमाः ॥ २२ ॥ स्वदिनं मध्यमं ज्ञात्वा, स्वस्थीभूतः कियद्दिनान् । व्यवसायं न चक्रे स, चक्रे धर्म्मं विशेषतः ॥ २३ ॥ कियत्यथ गते काले, धनदत्तेन धीमता । प्राग्वद्दिनपरीक्षार्थमेका क्रीता त्वजाऽन्यदा ॥ २४ ॥ प्रसूता तद्दिने युग्मं, ततोऽभूत्त्रिकमेकतः । तद्दिनात् यत्स जग्राह, तत्सर्व्वं त्रिगुणं ह्यभूत् ॥ २५ ॥ इत्थं शुभदिनं ज्ञात्वा, धनदत्तो विवेकतः । ततो वाणिज्यमारेभे, सुमुहूर्त्ते स्वशक्तितः ॥ २६ ॥ तदा देशान्तरायातसार्थतः प्रथमे दिने । पञ्चकोटिसुवर्णेन, क्रीतं सर्व्वं क्रयाणकम् ॥ २७ ॥ तत्राथ सप्तमदिने वणिक् कोऽप्यन्यमन्दिरात् । आगतस्तेन तद्वस्तु, नीतं द्विगुणमूल्यतः ॥ २८ ॥ इत्थं दिने दिने तस्य, वृद्धिर्वाणिज्यतोऽभवत् । स्वल्पैरेव दिनैः पूर्णा, अस्याष्टादश कोटयः ॥ २९ ॥ एवं विवेकतो जातो, धनदत्तो महाधनी । महादानेन लोके च, कल्पशाखीव विश्रुतः ॥ ७३० ॥ अन्यदा सिद्धदत्तः स, धनदत्तेन संयुतः । व्रजन् राजपथेऽपश्यत्, कलिं भूपतिपुत्रयोः ॥ ७३१ ॥ नृपपुत्रौ वृद्धलघू, विवदन्तौ परस्परम् । विलोक्य धनदत्तोऽगादन्यमार्गे विवेकतः ॥ ३२ ॥ सिद्धदत्तस्तु तत्पृष्ठे, लग्नो गच्छन् विनोदतः । ताभ्यां साक्षीकृतो वादे, स चानीतो नृपान्तिके ॥ ३३ ॥ राज्ञा पृष्टः स पुत्राभ्यां, त्वं हि साक्षीकृतोऽसि रे । वद भो न्यायमन्यायमेतयोरथ सोऽब्रवीत् ॥ ३४ ॥ स्वामिंस्ते वृद्धपुत्रोऽयमुत्कटो

वर्त्तते महान् । लघुस्तु बालभावत्वाद्, यद्वा तद्वा वदेद् वृथा ॥ ३५ ॥ अविवेकेन तेनेदं, प्रोक्तं राजसभान्तरे । तच्छलं प्राप्य राज्ञाऽस्य, नीता विंशतिकोटयः ॥ ३६ ॥ द्वेषतस्तस्य केनापि, पक्षपातोऽपि नो कृतः । धनदत्तः सुखी जातः, प्रस्तावज्ञो विवेकवान् ॥ ३७ ॥ एकदा तावुभौ मन्त्रिसौधस्याधस्तु जग्मतुः । गवाक्षस्थितया दृष्टौ, मन्त्रिपत्न्या रतिश्रिया ॥ ३८ ॥ रूपवन्तौ युवानौ च, तौ दृष्ट्वा मृगलोचना । सरागत्वेन वीक्षन्ती, सा धनेनोपलक्षिता ॥ ३९ ॥ तदार्कबिम्बवत्सर्पवच्च कुत्सितवस्तुवत् । शत्रुवद्धनदत्तेन, सा पुनर्नैव वीक्षिता ॥ ७४० ॥ ततो जितेन्द्रियत्वात्स, कुलमालिन्यभीतितः । व्रत-भङ्गाद्विवेकाच्चागच्छदाकृष्य चक्षुषी ॥ ७४१ ॥ सिद्धदत्तो निर्विवेकी, तामसतीं पुनः पुनः । आलोकयत्सरागत्वाद्व्रजन् वालितकन्धरः ॥ ४२ ॥ तत्प्रेक्ष्यारक्षकनरैर्धृत्वा दत्तो नृपस्य सः । तमन्यायकरं कृत्वा, गृहीता दश कोटयः ॥ ४३ ॥ तस्मिन्पुरेऽन्यदा कश्चिदागाच्चौरस्तदन्तिके । सपादकोटिमूल्यानि, दश रत्नानि सन्ति च ॥ ४४ ॥ एकान्ते धनदत्तस्य, दर्शयित्वाऽथ तानि सः । प्रोचे द्रम्मसहस्रेण, तवैकैकं ददामि भोः ! ॥ ४५ ॥ श्रुत्वैवं वणिजाऽचिन्ति, बहुमूल्यान्यमून्यसौ । मूर्खो दत्तेऽल्पमूल्येन, ग्रहीतुं मे न युज्यते ॥ ४६ ॥ अयं विभाव्यते चौरो, हृतान्येतानि कस्यचित् । बहुलाभेऽप्यलाभोऽयं, विचिन्त्येति स नाग्रहीत् ॥ ४७ ॥ चौरेण सिद्धदत्तस्य, दर्शितान्यथ तानि तु । तेन लोभाभिभूतेन, गृहीतान्यल्पमूल्यतः ॥ ४८ ॥ आरक्षकनरैश्चौरः, स ज्ञातः पापयोगतः । यष्टिमुष्ट्यादिभिर्हत्वा, तैश्चानीतो नृपाग्रतः ॥ ४९ ॥ नृपोऽपृच्छदरे कास्ति, तद्वस्तु यत्त्वया हृतम् । नामन्यत यदा चौर्यं, तदाऽसौ ताडितोऽधिकम् ॥ ७५० ॥ ततस्तेन निजस्थानाद्, वस्तून्यानाय्य वेगतः । अर्पितानि समस्तानि, पुनः पप्रच्छ भूपतिः ॥ ७५१ ॥ बहुकालात्पुरा यानि, रत्नानि मम

कोशतः। त्वया हृतानि तानि क्व, सन्ति चानीय मेऽर्पय ॥ ५२ ॥ तेनोक्तं धनदत्ताय, प्राग् दत्ता मणयो मया। न गृहीताः परं तेन, सिद्धदत्तोऽग्रहीच्च तान् ॥ ५३ ॥ आकार्य सिद्धदत्तं तं, राज्ञा कारागृहे रुषा। क्षिप्त्वा नीत्वा च सर्वस्वं, मुक्तश्चौरयुतोऽथ सः ॥ ५४ ॥ निर्धनत्वं ततः प्राप्तो, महाखेदं वहन् हृदि। गृहवासाच्च निर्विण्णः, सिद्धदत्तो व्यचिन्तयत् ॥ ५५ ॥ पूर्वं मे लघुता लोकेऽधुना जाता विशेषतः। निर्धनत्वे च गार्हस्थ्यमसारं तुषकण्डनम् ॥ ५६ ॥ इति ध्यात्वा स निस्सृत्य, गृहाद्गत्वा च कानने। भिक्षाहारी जटाधारी, तापसोऽभूद्विरागवान् ॥ ५७ ॥ इतश्च धनदत्तः स, पृष्ट आकार्य भूभुजा। अमूल्यमूल्यरत्नानि, न क्रीतानि कथं त्वया ? ॥ ५८ ॥ स प्रोचेऽभिग्रहः स्वामिन्!, गुरुदत्तोऽस्त्ययं मम। अदत्तचौर्यवस्तूनि, न ग्राह्याणि कदाऽपि यत् ॥ ५९ ॥ व्यसनेषु न सक्तोऽहं, परनारीपराङ्मुखः। इति निर्लोभतां प्रेक्ष्य, तद्गुणै रञ्जितो नृपः ॥ ७६० ॥ अतः सन्मान्य भूपेन, दत्त्वा श्रेष्ठिपदं पुरे। सुखासने निवेश्यासौ, प्रेषितो निजवेश्मनि ॥ ७६१ ॥ एवं दिने दिने तस्य, बभूवुर्बहुसंपदः। विवेकात्तन्न कुर्यात्स, येन कुप्यति भूपतिः ॥ ६२ ॥ एकदा तत्पुरे राजसभायां कोऽपि धूर्त्तराट्। कोटिमूल्यानि रत्नानि, करे कृत्वा समागतः ॥ ६३ ॥ स प्रोचेऽमूनि रत्नानि, पञ्च तस्मै ददाम्यहम्। समुद्रस्य पयः पङ्कं, सङ्ख्याय कथयेन्मम ॥ ६४ ॥ मच्चित्ते संशयोऽप्यास्ति, मध्ये कर्दमनीरयोः। किं न्यूनमधिकं किं वा, यो दक्षः स वदत्विदम् ॥ ६५ ॥ तदा तस्य न केनाऽपि, भग्नोऽयं वक्रसंशयः। तच्छ्रुत्वा धनदत्तस्योत्पन्ना बुद्धिः सुरीवरात् ॥ ६६ ॥ तत्रागत्य विवेकी सोऽवादीद्वादिनरं प्रति। हंहो भद्र ! घनः पङ्कः, स्वल्पं नीरञ्च विद्यते ॥ ६७ ॥ यदि ते संशयस्तर्हि, गङ्गादितटिनीजलम्। पृथक् कृत्वा समुद्राच्च, नीरपङ्कौ

पृथक् कुरु ॥ ६८ ॥ तुलामादाय दत्त ! त्वं, ततस्तोलय तद्वयम् । तुलिते ज्ञास्यते सर्व्वं, वचो मन्यस्व मेऽथवा ॥ ६९ ॥ ज्ञातं प्राक् तेन मत्पृष्टं, चेन्न कः कथयिष्यति । रमिष्येऽहं तदा धूर्त्तकलया नगरेऽखिले ॥ ७७० ॥ असाध्यं वचनं तेन, मानितं हारितं पुनः । गृहीत्वा पञ्च रत्नानि, राज्ञा निष्कासितः पुरात् ॥७७१॥ धनदत्तस्य सुदबुद्धिं, वीक्ष्य राजा चमत्कृतः । दत्त्वा पञ्चापि रत्नानि, प्रेषितोऽसौ निजे गृहे ॥ ७२ ॥ अथान्येद्युः पुनः कोऽपि, सार्थेन सह सार्थपः । स्वामी द्वादशकोटीनां, धूर्त्तत्वेनागतः पुरे ॥ ७३ ॥ सुरूपो यौवनावस्थः, स्फारशृङ्गारशोभितः । गणिकाऽनङ्गलेखाया, मन्दिरे तत्र सोऽगमत् ॥ ७४ ॥ महेभ्य इति तं ज्ञात्वा, वेश्या सन्मानपूर्वकम् । चित्ते कपटमाधाय, माययैवं तदाऽब्रवीत् ॥ ७५ ॥ अहो ममाद्य सद्भाग्यं, जजागार पुरातनम् । यतो जङ्गमकल्पद्रुः, प्राप्तोऽयं मम मन्दिरे ॥ ७६ ॥ अद्य स्वप्ने मया स्वामिन् !, स्वर्णद्वादशकोटयः । त्वत्तः प्राप्ता अभूत्सत्यं, तत्प्रत्यक्षं तवागमे ॥७७॥ धूर्तो धूर्त्तवचः श्रुत्वा, हसित्वोवाच तादृशम् । भद्रे ! सत्यं त्वया प्रोक्तं, परं मे वचनं शृणु ॥ ७८ ॥ स्वप्नमध्ये मयाप्यद्य, हेमाष्टादशकोटयः । न्यासार्थं त्वद्गृहे मुक्तास्तदर्थेऽहमिहागतः ॥ ७९ ॥ मयाऽष्टादश वर्षाणि, स्थातव्यं त्वद्गृहे मुदा । परमेकामिमां वार्त्तां, मदीयां शृणु सुन्दरि ! ॥७८०॥ साम्प्रतं सबलं सार्थं, कृत्वा देशान्तरं प्रति । व्यवसायार्थलाभार्थं, गमिष्याम्यहमेकदा ॥ ७८१ ॥ ततोऽष्टादशकोटीनां, मध्यात् द्वादशकोटयः । मम स्थापनिका देया, यामि देशान्तरं यथा ॥ ८२ ॥ तत्रोपार्ज्य महाद्रव्यं, वलित्वा त्वरितं पुनः । आगत्य त्वद्गृहे भद्रेऽहं स्थास्यामि महासुखम् ॥ ८३ ॥ किं याचसे वृथा धूर्त्तेत्युक्त्वा किञ्चिद्ददौ न सा । ततो धृत्वा स्वहस्ते सा, नीता तेन चतुष्पथे ॥ ८४ ॥ वारयितुं विवदन्तौ, तौ केनापि न शक्यते । न भग्नोऽसौ यदा वादस्तदा वेश्याऽब्रवीदिदम् ॥ ८५ ॥ अमुं भनक्ति यो वादं,

तस्मै कनककोटिकम् । दास्यामि नान्यथा वाग्मे, या प्रोक्ता लोकसाक्षिकम् ॥ ८६ ॥ तच्छ्रुत्वा धनदत्तोऽथ, विवेकोत्पन्नबुद्धितः । कोटिद्वादशमूल्यानि, रत्नानि धृतवान् करे ॥ ८७ ॥ वामे भुजे दर्प्पणश्च, धृत्वा तं धूर्त्तमब्रवीत् । मणीन् गृहाण भद्रैतान्, दर्पणे प्रतिबिम्बितान् ॥ ८८ ॥ धूर्त्तो जगाद रे धूर्त्त !, किमिदं दीयते मम । प्रतिबिम्बानि रत्नानां, ग्रहीतुं को नरः क्षमः ? ॥ ८९ ॥ धनदत्तोऽवदत्किं भो, जनोक्तिरिति न श्रुता ? । यादृशी भावना चित्ते, सिद्धिर्भवति तादृशी ॥७९०॥ प्रासादसदृशो देवो, देवतुल्या च पात्रिका । यादृक् स्वर्णं त्वया न्यस्तं, तादृशं ह्यर्प्यते मया ॥ ७९१ ॥ स्वप्ने न्यस्तं याचसे त्वं, दीयते प्रतिबिम्बितम् । कश्चिद्दोषो हि नास्त्यत्र, धूर्त्ते धूर्त्तत्वमाचरेत् ॥ ९२ ॥ विलक्षीभूय धूर्त्तोऽसौ, धिक्कृतः कुत्रचिद्गतः । वेश्यातः स्वर्णकोटिश्च, नीत्वा दानं धनो ददौ ॥ ९३ ॥ अन्येद्युः नगरे कश्चिद्दुष्टो राक्षस आगतः । अकस्मात् नृपतिं हृत्वा, गत्वा च व्योमनि स्थितः ॥ ९४ ॥ मृततुल्यं नृपं दृष्ट्वा, विलक्षा व्यलपन्प्रजाः । शान्तिकं पौष्टिकं भोगान्, बलिं चक्रुश्च मन्त्रिणः ॥ ९५ ॥ ततः प्रत्यक्षतां प्राप्तो, राक्षसः स्माह भो जनाः ! । यदि मे कोऽपि सत्त्वेन, दत्ते स्वाङ्गबलिं नरः ॥ ९६ ॥ तस्य मांसेन तृप्तोऽहं, नृपं मुञ्चामि नान्यथा । श्रुत्वैवं ते जनास्तस्थुरधोवक्त्रा असाध्यतः ॥ ९७ ॥ युग्मम् ॥ तत्रागाद्धनदत्तोऽथ, परोपकृतिकर्मठः । विशेषान्नृपवात्सल्यात्स्वामिकार्यैकतत्परः ॥ ९८ ॥ साहसेन पलादस्य, निजाङ्गं तेन कल्पितम् । तदा तत्सत्त्वतुष्टेन, विमुक्तो रक्षसा नृपः ॥ ९९ ॥ स्वर्णद्वादशकोटीनां, धनदत्तगृहे सुरः । वृष्टिं कृत्वा गतः स्थाने, देवाः पुण्यवशाः किल ॥ ८०० ॥ नृपेण धनदत्तोऽसौ, निजजीवितदायकः । सर्व्वामात्येषु मन्त्रीशः, कृतो मुख्यो महामतिः ॥ ८०१ ॥ षट्पञ्चाशत्कोटिनाथो, धनदत्तोऽभवत्क्रमात् । विवेकात्कुरुते धर्म्मं, दृष्ट्वा धर्म्मफलं महत् ॥ २ ॥

अथैकदा वसन्तर्त्तौ, राजा स्वान्तःपुरान्वितः । वसन्तखेलनायोच्चैर्महारङ्गाद्वने गतः ॥ ३ ॥ क्रीडतस्तस्य मध्याह्ने, भुक्ति-सामग्रिका कृता । इतश्चाययौ द्वादशयोजनारण्यतो मुनिः ॥ ४ ॥ सार्थाद्भ्रष्टः क्षुधातृष्णामहातापैः प्रपीडितः । तत्राश्रित्य तरुच्छायां, स श्रान्तत्वादुपाविशत् ॥ ५ ॥ तं मुनिं प्रेक्ष्य राजा स, राज्ञीवृन्दसमन्वितः । तत्रागत्य शुभावेन, ववन्दे विनयान्वितः ॥ ६ ॥ प्रासुकान्नपयोदानैः, स्वस्थीचक्रेऽमुना मुनिः । धर्म्मं श्रुत्वा च तत्पार्श्वे, श्रावकत्वं समाश्रयत् ॥ ७ ॥ एवं पुनर्नृपे तस्मिन्, वसन्तर्त्तौ वने गते । सार्थभ्रष्टं साधुयुगं, तृपार्त्तं तत्र चागतम् ॥ ८ ॥ राज्ञा तन्दुलनीरेण, तयोः संपूर्य तुम्बकम् । दत्तं साधू च तत्पीत्वा, स्वस्थीभूतौ गतौ क्वचित् ॥ ९ ॥ रत्नवीरनृपः सोऽथाराध्य धर्म्मं जिनोदितम् । मृत्वा चायुःक्षये जातो, रत्नपालो नृपो भवान् ॥ ८१० ॥ श्रीदेव्यपि मृता राज्ञी, जाता शृङ्गारसुन्दरी । तापसः सिद्धदत्तोऽथ, कृत्वाऽज्ञानतपो मृतः ॥ ८११ ॥ जयनासाभवन् मन्त्री, स ते राज्ये धराधिप । पूर्वं त्वयाऽस्य यत्पोतो, धृतो द्वादश वासरान् ॥ १२ ॥ तस्माद्द्वादश वर्षाणि, तेन त्वद्राज्यमाददे । पुरातिदण्डितस्तेन, जातो वैरी तवेह सः ॥ १३ ॥ शृङ्गारसुन्दरी पूर्वभवे मार्गे क्वचिन्मुनिम् । कायोत्सर्गस्थितं धूलिक्षेपणाद्यैरताडयत् ॥ १४ ॥ तेन पापप्रभावेण, पीडिता जयमन्त्रिणा । कृतोऽल्पो हि महर्षीणामुपसर्गोऽतिदुःखदः ॥ १५ ॥ जीवोऽपि धनदत्तस्य, सोऽभूद्वैदेशिको नरः । वनमध्ये त्वया दत्ताऽऽराधना यस्य रोगिणः ॥ १६ ॥ स मृत्वाऽभूत्ततो देवः, पूर्वप्रीत्येह येन ते । सङ्ग्रामे मन्त्रिणा सार्धं, सांनिध्यं कृतमुत्तमम् ॥ १७ ॥ पुनः पुण्यप्रभावेण, स्वराज्यं भोगसौख्यदम् । त्रिखण्डाधिपतित्वञ्च, संप्राप्तं भवता नृप ! ॥ १८ ॥ पुरा तन्दुलनीरेण, भृत्वा पात्रं यदर्पितम् । मुनिभ्यस्तेन पुण्येन, प्राप्तः सद्रसकुम्पकः ॥ १९ ॥ पुरा कनकमञ्जर्या, रे कुष्ठिन्म-

द्वचो न किम्। करोषीति निजे भृत्ये, प्रोक्तं सा तेन कुट्टिनी ॥ ८२० ॥ एवं प्राग्गुणमञ्जर्या, किं रे अन्ध! न पश्यसि ?। इत्युक्तं निजदासस्य, तेनान्धाऽभूदिहाप्यसौ ॥ २१ ॥ भुक्ते कर्म्मविपाकेऽस्मिन्, गुणोऽभूदेतयोः स्त्रियोः। इत्यनालोचितं कर्म्म, भोक्तव्यं सर्वथा नृप! ॥ २२ ॥ इत्थं पूर्वभवं राजा, श्रुत्वा ज्ञात्वा च कर्म्मणाम्। शुभाशुभफलं धर्मे, विशेषाद् उद्यतोऽभवत् ॥ २३ ॥ चतुर्मासीमथो भूपः, केवलज्ञानिनं गुरुम्। संस्थाप्यात्मपुरे भक्त्या, चक्रे धर्मप्रभावनाम् ॥ २४ ॥ अमारिं भूरिदेशेषु, प्रावर्त्तयत सर्वदा। न्यावारयच्च सप्तापि, व्यसनानि निजाज्ञया ॥ २५ ॥ जिनालयेषु वादित्रगीतनृत्य-ध्वजादिकान्। महोत्सवान् महापूजां, कारयामास सोऽन्वहम् ॥ २६ ॥ कस्मिन् पुण्यदिने राजा, गृहीत्वा पौषधं व्रतम्। पप्रच्छ च गुरुं नत्वा, कीदृक् संसारचेष्टितम्? ॥ २७ ॥ गुरुर्जगाद संसारो, गहनो यत्र देहिनः। भूयो भूयोऽपि जायन्ते, नानागतिषु कर्मभिः ॥ २८ ॥ स एव जायते तिर्यङ्, स एव नारको भवेत्। स एव मानवोऽपि स्यात्, स एव च सुरो भवेत् ॥ २९ ॥ पिता क्वापि भवेत्पुत्रो, माता है है भवेद्वधूः। बन्धुर्भवति वैरी च, भविनो हि भवान्तरे ॥ ८३० ॥ संसारे कोऽपि नो कस्य, वृथा मोहं धरेद्भवी। अत्रार्थे वसुदत्ताङ्गजन्मनः कथ्यते कथा ॥ ८३१ ॥ यतः—सुयभवे सुच्छन्दं, सुहिय-लयमण्डवेहि खेलंतो। जणएण पासएहिं, बद्धो खद्धो य जणणीए ॥ ३२ ॥ तथाहि काञ्चनपुरे, वसुदत्तः सुसार्थपः। तद्भार्या वसुमत्याह्वा, सुतोऽभूद्वरुणस्तयोः ॥ ३३ ॥ मातापित्रोः स चात्यन्तं, प्राणेभ्योऽप्यधिकः प्रियः। महामोहात्क्षणमपि, तं विना तौ न तिष्ठतः ॥ ३४ ॥ अत्याग्रहेऽन्यदा पुत्रो, गतो देशान्तरं प्रति। उपार्ज्य धनलक्षाणि, वलितोऽसौ गृहं प्रति ॥ ३५ ॥ भीमाटव्यां मृतः शूलरोगे राजशुकोऽजनि। धनं कियद्गतं तस्य, शेषं दत्तं

पितुर्जनैः ॥ ३६ ॥ सुतशोकेन तन्माता, हृदयस्फोटतो मृता । आर्त्तध्यानेन मार्जारी, जाताऽसौ निजवेश्मनि ॥ ३७ ॥ वसुदत्तोऽन्यदाऽन्यत्र, गत्वा वाणिज्यकर्मणि । प्राप्य लाभं वलित्वा च, गतस्तामटवीं क्रमात् ॥ ३८ ॥ यत्र राजशुकोऽप्यस्ति, तत्सुतः पूर्वजन्मनि । भवितव्यात्स तत्रास्थात्, यत्र तत्कीरसंस्थितिः ॥ ३९ ॥ स सहकारशाखायां, निविष्टो ददृशेऽमुना । मोहात्पाशेन बध्वा च, गृहीत्वागान्निजे पुरे ॥८४०॥ रम्यपञ्जरके क्षिप्त्वा, पुत्रवत्तमपालयत् । भोजयत्यात्मना सार्द्धं, पाठयेत् स दिवानिशम् ॥४१॥ श्रेष्ठिनो विस्मृतं दातुं, पञ्जरद्वारमेकदा । कर्मयोगेन मार्जार्या, तया कीरो विनाशितः ॥४२॥ वसुदत्तोऽथ तच्छोकं, न मुमोच दिवानिशम् । कियत्यपि गते काले, तत्रागात्कोऽपि केवली ॥ ४३ ॥ वसुदत्तोऽथ तं नत्वा, पप्रच्छ रचिताञ्जलिः । शुकोपरि कथं मोहो, घनो मेऽभूद्वद प्रभो ! ॥ ४४ ॥ भार्य्यानन्दनसंबन्धं, तस्याग्रे केवली जगौ, । ततो वैराग्यतो दीक्षां, गृहीत्वा स ययौ शिवम् ॥ ४५ ॥ हे रत्नपाल ! संसारचेष्टेयं चित्रकारिणी । पुत्रः प्रियः शुको जातो, जनन्या सोऽपि भक्षितः ॥ ४६ ॥ इत्यादि भववृत्तान्तं, प्रोक्त्वा ( च्य ) प्रोवाच केवली । मनोवचनकायाद्याः, स्थिरीकार्या भवच्छिदे ॥ ४७ ॥ यतः—मनोविशुद्धं पुरुषस्य तीर्थं, वाक्संयमश्चेन्द्रियनिग्रहश्च । त्रीण्येव तीर्थानि शरीरभाजां, स्वर्गस्य मोक्षस्य निदर्शयन्ति ॥ ४८ ॥ उल्लो सुक्को य दो छूढा, गोलया मट्टियामया । दोवि आवडिया कुड्डे, जो उल्लो सोत्थ लग्गई ॥ ४९ ॥ एवं लग्गन्ति दुम्मेहा, जे नरा कामलालसा । विरत्ता ते न लग्गन्ति, जहा से सुक्कगोलए ॥ ८५० ॥ श्रुत्वैवं सुगुरोर्वचो नरपतिः श्रीरत्नपालाभिधः, संसाराद्विमुखोऽभवच्छुभमतिर्दीक्षाभिलाषी ततः । श्रीमन्मेघरथः सुतो निजपदे संस्थापितोऽथामुना, दत्ता हेमरथादिनन्दनशतस्यापि स्वदेशाः पृथक् ॥ ५१ ॥ पृथिवीमनृणां चक्रे, राजा वाञ्छितदानतः ।

वपति स्म धनं तीर्थे, सत्पात्राणि पुपोष च ॥ ५२ ॥ सद्दिने गजमारुह्य, सर्वसैन्यसमन्वितः। महोत्सवेन राजाऽगाद्व्रतार्थं गुरुसंनिधौ ॥ ५३ ॥ सहस्रसंख्यभूपालैः, राज्ञीभिर्नवभिः पुनः। अन्यैश्चापि नरैः सार्धं, स चारित्रमुपाददे ॥ ५४ ॥ राज्यं प्राप्य पुरा येन, विजिता बाह्यशत्रवः। जेतुं भावरिपुं पश्चात्, दीक्षासाम्राज्यमाददे ॥ ५५ ॥ तज्जयार्थं क्षमाखड्गं, जिनाज्ञाशीर्षकञ्च सः। शीलसन्नाहमाधायारुरोह ज्ञानहस्तिनम् ॥ ५६ ॥ पुत्रा मेघरथाद्यास्ते, तातं नत्वा गता गृहम्। ततः केवलिना सार्धं, राजर्षिर्विजहार सः ॥ ५७ ॥ सर्वसिद्धान्तविज्ञोऽसौ, लेभे सूरिपदं क्रमात्। भव्यसत्त्वाम्बुजारामं, सूर्यवच्च व्यबोधयत् ॥ ५८ ॥ क्षपकश्रेणिमारूढो, घनकर्मचतुष्टयम्। छित्वा संप्राप सोऽन्येद्युः, केवलज्ञानमुज्ज्वलम् ॥ ५९ ॥ काव्यम्-युक्तः पञ्चसहस्रसाधुभिरयं श्रीरत्नपालो मुनिः, पञ्चाशीतिसुवर्षलक्षप्रमितं संपाल्य चायुर्निजम्। धर्मानन्तजिनान्तरे शिवपदं संप्राप सिद्धा तथा, साध्वी पञ्चशतैर्युता भगवती शृङ्गारसुन्दर्यपि ॥ ८६० ॥ इत्युक्ता शीलमाहात्म्ये, शृङ्गारसुन्दरीकथा। तत्प्रस्तावे कृतं रत्नपालसत्पुण्यवर्णनम् ॥ ६१ ॥ तस्यैवाष्टान्यराज्ञीनां, सतीनाञ्च कथा मताः। अन्येऽपि शीलसंबन्धाः, प्रोक्ताः संबोधदायकाः ॥ ६२ ॥ श्रीवीरः साह भो भव्याः!, रत्नपालप्रियाकथाम्। श्रुत्वा सुशीलमाहात्म्ये, पालनीयं त्रिधापि तत् ॥ ६३ ॥ श्रीमन्मल्लीजिनोऽथ नेमिजिनपो जम्बूप्रभुः केवली, सम्यग्दर्शनवान् सुदर्शनगृही श्रीस्थूलिभद्रो मुनिः। सचङ्कारिसरस्वती च सुलसा सीता सुभद्रादयः, शीलोदाहरणेष्वमी सुभविनो जाता भविष्यन्ति च ॥ ६४ ॥ परसमयेऽपि-स्नातं तेन समस्ततीर्थसलिलैः सर्वापि दत्ता मही, यज्ञानाञ्च कृतं सहस्रमधिकं देवाश्च सन्तर्पिताः। संसाराच्च समुद्धृताः सुपितरस्त्रैलोक्यवन्द्योऽप्यसौ, यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥ ६५ ॥ शीलं भाग्यलतामूलं,

शीलं कीर्त्तिनदीगिरिः । शीलं भवाब्धितरणे, यानपात्रसमं मतम् ॥ ६६ ॥ इत्थं प्रोक्ता शीलशाखा, धर्मकल्पद्रुपादपे । एनां वीरमुखाच्छ्रुत्वा, भव्या आनन्दमादधुः ॥ ६७ ॥

इति श्रीवीरदेशनायां श्रीधर्म्मकल्पद्रुमे चतुःशाखिके द्वितीयशीलशाखायां श्रीरत्नपालप्रियाशृङ्गारसुन्दर्याख्याने पञ्चमः पल्लवः समाप्तः ॥



## ॥ अथ षष्ठः पल्लवः

भूपालश्चक्रवर्त्ती हलमुशलधरो वासुदेवस्तदन्यो, यो वा विद्याधरेन्द्रः फणिपतिविहिताशेषविद्याप्रसादः । ये चेशा व्यन्तराणां वरभवनसदां ज्योतिषां स्वर्गिणां वा, श्रीतीर्थेशाश्च तेषामपि पदममलैः प्राप्यते पूर्वपुण्यैः ॥ १ ॥ यन्निद्रा क्षयमेति पालयति यद्वेलां जलानां निधि--र्यत्तापापदमम्बुदः शमयते यद्दिव्यतः शुध्यते । यद्वृद्धिर्वपुषामुपाः क्षपयितुं भानुर्यदुज्जृम्भते, विश्वं यच्च बिभर्त्ति भूतनिवह (हं) तद्धर्म्मविस्फूर्जितम् ॥ २ ॥ यो धीमान् कुलजः क्षमी विनयवान् दाता कृतज्ञः कृती, रूपैश्वर्ययुतो दयालुरशठो दान्तः शुचिस्सत्रपः । सद्भोगी दृढसौहृदो मधुरवाक् सत्यव्रतो नीतिमान्, बन्धूनां निलयो नृजन्म सफलं तस्येह चामुत्र च ॥ ३ ॥ अथोचे स्वामिनं शिष्यो, गौतमो गणनायकः । भगवंस्त्वत्प्रसादेन, श्रुतः शीलगुणो जनैः ॥ ४ ॥ धर्म्मकल्पद्रुमे शाखा, तृतीया या तपोमयी । तत्फलं श्रोतुमिच्छामि, भव्याः शृण्वन्तु चापरे ॥ ५ ॥ ततो योजनगा-

भिन्या, मेघगम्भीरया गिरा। सर्व्वसंशयहारिण्या. प्रोवाच चरमो जिनः ॥६॥ भो भव्या! नृभवं प्राप्य, कार्यं द्वादशधा तपः। सर्व्वार्थसाधकं धाम, तेजसां दुःखबाधकम् ॥ ७ ॥ तावद्गर्जति कर्मेभो, विभयो भुवनोदरे। यावाच्चित्तगुहाध्यासी, तपःसिंहो न खेलति ॥८॥ असाभिरपि यच्चक्रे, प्रव्रज्याज्ञानमुक्तिषु। माहात्म्यं तपसस्तस्य, श्रुतिवाचामगोचरः ॥९॥ सुमतिस्त्वेकभक्तेन, चतुर्थाद्वसुपूज्यभूः। पार्श्वमल्ली अष्टमेन, शेषाः षष्ठात्प्रवव्रजुः ॥१०॥ अष्टमात्केवलं प्रापुः, श्रीपार्श्वर्षभमल्लयः। वासुपूज्यश्चतुर्थेन, शेषाः षष्ठेन ज्ञानिनः ॥ ११ ॥ उपवासैः शिवं षड्भिरगात्राभिभवो जिनः। द्वाभ्यां वीरोऽपरे मासक्षपणेन शिवं गताः ॥ १२ ॥ यतः—बहिरङ्गमलस्य जलैराहारमलस्य भेषजैः शुद्धिः। वचनमलस्य च दिव्यैर्दुष्कर्म्ममलस्य सत्तपसा ॥ १३ ॥ अनेकैरपि भेदैस्तत्कथितं ज्ञानिभिस्तपः। विंशतिस्थानकं किन्तु, तीर्थकृद्गोत्रदायकम् ॥१४॥ तद्यथा—अर्हतां प्रतिमार्चाभिरर्हतां स्तवनादिभिः। एकमार्जितवान् स्थानमवर्णादिनिवारणैः ॥१५॥ सिद्धिस्थानेषु सिद्धानामुत्सवैः प्रतिजागरैः। एकत्रिंशात्सिद्धगुणोत्कीर्त्तनैश्च द्वितीयकम् ॥१६॥ प्रवचनोन्नतिः सम्यग्, ग्लानक्षुल्लादिसाधुषु। अनुग्रहमनोज्ञा या स्थानमेतत्तृतीयकम् ॥१७॥ गुरूणामञ्जलिं बद्ध्वा, वस्त्राहारादिदानतः। असमाधिनिषेधेन, स्थानमेतत्तुरीयकम् ॥ १८ ॥ स्थविरा द्विविधाः प्रोक्ता, वयसा सुगुणैरपि। तेषां भक्तिविधानेन, पञ्चमं स्थानकं विदुः ॥ १९ ॥ बहुश्रुतानां ग्रन्थार्थवेदिनां तत्त्वशालिनाम्। प्रासुकान्नादिदानेन, षष्ठं स्थानमुदीरितम् ॥ २० ॥ तपस्विनां सदोत्कृष्टतपःकर्म्मस्थिरात्मनाम्। विश्रामणादिवात्सल्यात्सप्तमस्थानमुच्यते ॥ २१ ॥ ज्ञानोपयोगसातत्यं, द्वादशाङ्गागमस्य च। सूत्रार्थोभयभेदेन, स्थानं ननु तदष्टमम् ॥ २२ ॥ दर्शनं रहितं शङ्काद्यैः स्थैर्यादिगुणान्वितम्। शमादिलक्षणं यत्तु, स्थानकं नवमं मतम् ॥ २३ ॥ विनयो यः चतुर्भेदो, ज्ञानाद्दर्शनतोऽपि च। चारित्रा-

दुपचाराच्च, स्थानं तद्दशमं मतम् ॥ २४ ॥ आवश्यकं भवेत्स्थानमेकादशमिदं पुनः । इच्छादिर्दशधा या च, सामाचारी जिनोदिता ॥ २५ ॥ शीलव्रतं विशुद्धं यन्नवगुप्तिनियन्त्रितम् । यत्पाल्यं निरतीचारं, स्थानं तद् द्वादशं भवेत् ॥ २६ ॥ त्रयोदशमिदं स्थानं, चणे चणे लवे लवे । शुभध्यानस्य करणं, प्रमादपरिवर्जनम् ॥ २७ ॥ तपो विधीयते शक्त्या, बाह्याभ्यन्तरभेदवत् । असमाधिपरित्यागात्, स्थानमुक्तं चतुर्दशम् ॥ २८ ॥ त्यागोऽतिथिसंविभागः, शुद्धान्नोदकदानतः । तपस्विनां यथाशक्त्या, स्थानं पञ्चदशं हि तत् ॥ २९ ॥ वैयावृत्यं तु गच्छस्य, बालादिदशभेदतः । भक्तविश्रामणाद्यैः स्यात्, षोडशं स्थानकं किल ॥ ३० ॥ समाधिः सर्वलोकस्य, पीडादिकनिवारणात् । मनःसमाधिजननं, स्थानं सप्तदशं भवेत् ॥ ३१ ॥ अपूर्वज्ञानग्रहणात्, सूत्रार्थोभयभेदतः । अष्टादशमिदं स्थानं, सर्वज्ञैः परिभाषितम् ॥ ३२ ॥ श्रुतभक्तिः पुस्तकानां, लेखनादिषु कर्म्मतः । व्याख्यानख्यापनैरेकोनविंशं स्थानकं भवेत् ॥ ३३ ॥ प्रभावना प्रवचने, विद्यावादनिमित्ततः । शासनस्योन्नतिर्या स्यात्, स्थानं विंशतिसंज्ञकम् ॥ ३४ ॥ एकैकं तीर्थकृन्नामकर्म्मबन्धस्य कारणम् । एकं द्वे त्रीणि सर्व्वाणि, सेवितानि पुरा जिनैः ॥ ३५ ॥ काव्यम्—ताराणां तरणिः शशी च तमसां वल्लीवनानां द्विपः, शीतानामनलोऽनिलो जलमुचां दम्भोलिरुर्व्वीभृताम् । दानं दुर्यशसां मणिर्विषरुजां यादृग्गदानां सुधा, भूयोजन्मभुवां शरीरिषु भवेत्तादृक् तपोऽप्यंहसाम् ॥ ३६ ॥ सौभाग्यं भुवनाधिपत्यपदवीरूपं ददात्यद्भुतं, लक्ष्मीं कामपि सञ्चिनोति तनुते कुन्दावदातं यशः । भोगान्मर्त्यसुरेन्द्रयोरपि सुखं दत्ते प्रदत्ते शिवं, तत्किं यन्न ददाति सौख्यमसमं तप्तं विशुद्धं तपः ॥ ३७ ॥ यन्न सिध्यति तन्नास्ति, तपोमाहात्म्यतोऽङ्गिनाम् । वाञ्छितार्थस्य संसिद्धिर्यथाऽभूत्पुरुषोत्तमे ॥ ३८ ॥ पप्रच्छ प्रभुपार्श्वे स, गणभृद्गौतमः पुनः । कथं

सत्तपसा सिद्धिः, सञ्जाता पुरुषोत्तमे ॥ ३९ ॥ मेघमुक्तं यथा नीरं, वस्तुवर्णसमं भवेत् । स्वाम्युवाच तथा सर्व्वसत्त्वभाषानुगं वचः ॥ ४० ॥ अस्मिन्नेव महाद्वीपे, क्षेत्रे भरतसंज्ञके । पद्मिनीपुरमित्यस्ति, पद्मासुन्दरमन्दिरम् ॥ ४१ ॥ वसन्ति धनिनो लक्षकोटीशा यत्र लक्षशः । खेलन्ति भोगिनो यत्र, परमानन्दपूरिताः ॥ ४२ ॥ यतः—दुग्धेन धेनुः कुसुमेन वल्ली, शीलेन नारी सरसी जलेन । सुस्वामिना भान्ति सभासदश्च, शमेन विद्या नगरी धनेन ॥ ४३ ॥ सुधर्म्मशीलाश्च विशुद्धचित्तास्तीर्थेषु पात्रेषु च दत्तवित्ताः । भयोज्झिता वीतवियोगशोका, विवेकिनो यत्र वसन्ति लोकाः ॥ ४४ ॥ गुणिनः सूनृतं शौचं, प्रतिष्ठा गुणगौरवम् । अपूर्व्वज्ञानलाभश्च, यत्र तत्र वसेत्सुधीः ॥ ४५ ॥ यत्रार्जितानि पुण्यानि, भुञ्जानाः प्रत्यहं जनाः । अर्जयन्ति नवीनानि, धनानीव विवेकिनः ॥ ४६ ॥ कार्प्पण्यं स्वयशोदाने, लोभो गुणगणार्जने । विद्यते व्यसनं यत्र, जनानां धर्म्म-सेवने ॥ ४७ ॥ तत्पुरं पालयामास, राजा पद्मोत्तराभिधः । गुणसौरभ्यतो विश्वं, वासितं येन पद्मवत् ॥ ४८ ॥ यतः—ओजः सत्त्वं नीति-र्व्यवसायो वृद्धिरिङ्गितज्ञानम् । प्रागल्भ्यं सुसहायाः, कृतज्ञता मन्त्ररक्षणं त्यागः ॥ ४९ ॥ जनरागः प्रतिपत्तिः, मित्रार्जनमानृशंस्यमस्तम्भः । आश्रितजनवात्सल्यं, दश सप्त गुणाः प्रभुत्वस्य ॥ ५० ॥ युग्मम् । सद्धर्म्मचारिणी तस्य, जाता नाम्ना मनोहरा । पञ्चसहस्रराज्ञीनां, मुख्या या महिषी वरा ॥ ५१ ॥ रजन्यामन्यदा देव्या, तया स्वप्ने महागजः । सश्रीकः सबलो दृष्टः, प्रचण्डः पर्व्वताकृतिः ॥ ५२ ॥ प्रभाते भर्तुरग्रे सा, प्रिया स्वप्नं न्यवेदयत् । पप्रच्छ च प्रभो ! स्वप्नफलं किं मे भविष्यति ? ॥ ५३ ॥ स्वबुद्धिकुशलत्वेन, राजाऽवोचत्प्रिये ! शृणु । एतत्स्वप्नानुभावेन, तव भावी सुतोत्तमः ॥ ५४ ॥ एवं श्रुत्वा भृशं राज्ञी, प्रमोदपेशलाऽभवत् । तद्दिनात्कः सुरश्च्युत्वा, तस्याः कुक्षावनातरत् ॥ ५५ ॥ तं गर्भं बिभ्रती राज्ञी,

विशेषात् शुशुभेतराम् । निधानं रत्नगर्भेव, शुक्तिवन्मौक्तिकव्रजम् ॥ ५६ ॥ दोहदाश्च शुभास्तस्या, उत्पन्नाः पूरिता अपि । शुभेऽह्नि सुषुवे सूनुं, सा सुभाग्यं शुभाकृतिम् ॥ ५७ ॥ पुत्रे जाते नृपस्याङ्गे, हर्षोत्कर्षो ममौ न हि । महता विस्तरेणासौ, तस्य जन्मोत्सवं व्यधात् ॥ ५८ ॥ पुरुषोत्तमनामाऽथ, धात्रीभिः परिपालितः । क्रमात्प्रवर्द्धमानोऽसौ, सुतो जातोऽष्टवार्षिकः ॥५६॥ कलास्तेनाल्पकालेनाभ्यस्ताः प्राक्शिक्षिता इव । स्वर्गागतस्य पुंसो हि, किं नाम दुष्करं भवेत् ? ॥ ६० ॥ यतः—कवित्वमारोग्यमतीव मेधा, स्त्रीणां प्रियत्वं बहुरत्नलाभः । दानप्रसङ्गः स्वजनेषु पूजा, स्वर्गच्युतानां किल चिह्नमेतत् ॥ ६१ ॥ सुधर्म्मः सुभगो नीरुक्, सुदयः सुनयः कविः । सुस्वप्नः पात्रदानी च, स्वर्गगामी नरो भवेत् ॥ ६२ ॥ प्रस्तावादन्यच्च—विरोधता बन्धुजनेषु नित्यं, सरोगता मूर्खजनेषु सङ्गः । अतीव रोषी कटुका च वाणी, नरस्य चिह्नं नरकागतस्य ॥ ६३ ॥ सरोगः स्वजनद्वेषी, कटुवाग् मूर्खसङ्गकृत् । निघ्नो निर्दयमानी च, स याति नरकावनिम् ॥ ६४ ॥ बह्वाशी नैव सन्तुष्टो, मायी लुब्धः क्षुधातुरः । दुस्स्वप्नी चालसो मूढस्तिर्यग्योन्यागतो नरः ॥ ६५ ॥ मायी लोभी क्षुधालुश्चाकार्यसेवी कुसङ्गकृत् । बन्धुद्वेषी दयाहीनः, स च तिर्यग्गतिं गमी ॥ ६६ ॥ अनुलोमो विनीतश्च, दयादानरुचिर्मृदुः । सहर्षो मध्यदर्शी च, मनुष्यादागतो नरः ॥ ६७ ॥ निर्दम्भः सदयो दानी, दान्तो दक्षः सदा मृदुः । साधुसेवी जनोत्साही, भावी चात्र नरः पुनः ॥ ६८ ॥ अन्यच्च—साभिमाना गुणैस्तुङ्गा, व्यवहारेण धार्मिकाः । विभवाभावसंतुष्टा, मानवांशाश्च ते नराः ॥ ६६ ॥ धीरोद्धतगुणैस्तुङ्गा आराध्येष्वपि गर्विताः । लोकोपतापप्रवणा, दानवांशा नराः स्मृताः ॥ ७० ॥ लोकोत्तरगुणैर्नम्राः, स्वकीर्त्तिश्रुतिलज्जिताः । स्वार्थं परार्थं मन्वाना, देवांशाः पुरुषोत्तमाः ॥ ७१ ॥ सात्त्विकः सुकृती दानी, राजसो विषयी भ्रमी । तामसः पातकी लोभी,

साश्विकोऽभीषु सप्तमः ॥ ७२ ॥ शास्त्रशस्त्रकलाभ्यासकोविदः स कुमारराट् । सात्त्विकादिगुणैः पूर्णः, पावनं प्राप यौवनम् ॥ ७३ ॥ पूर्वपुण्यप्रभावेण, महालीलापुरन्दरः । संयुक्तः सदृशैर्मित्रैः, स्वेच्छया क्रीडति स सः ॥ ७४ ॥

इतश्च कर्णाटदेशे, श्रीविशालपुरे वरे । अभूत्पद्मरथो भूपो, रूपनिर्जितमन्मथः ॥ ७५ ॥ पद्मश्रीः प्रेयसी तस्य, शीलशृङ्गारधारिणी । विनीता वनितामुख्या, बभूव गुणशालिनी ॥ ७६ ॥ जातोपयाचितशतैस्तयोः पद्मावती सुता । पद्मिनीलक्षणा पद्मं, त्यक्त्वा पद्मागतेव च ॥ ७७ ॥ मनोरथशतैः सार्धं, सा क्रमेण विवर्द्धिता । चतुष्षष्टिकलायुक्ता, जाता प्राप्ता च यौवनम् ॥ ७८ ॥ तां संवीक्ष्य विवाहार्हां, जातचिन्तो नराधिपः । तस्याः स्वयंवरं कर्तुं, बभूवोद्यमतत्परः ॥ ७९ ॥ तदा पद्मावती प्रोचे, प्रतिज्ञैषाऽस्ति तात ! मे । तं वरं परिणेष्यामि, राधावेधे हि यः क्षमः ॥ ८० ॥ श्रुत्वैवं सुविशेषेण, स्वयंवरणमण्डपम् । राधावेधमहायुक्तियुक्तं सोऽकारयन्नृपः ॥ ८१ ॥ अनेकेष्वथ देशेषु, प्रेष्य तेन स्वमन्त्रिणः । आहूताः पृथिवीनाथा, आगताश्च क्रमेण ते ॥ ८२ ॥ आययौ सचिवाहूतः, कुमारः पुरुषोत्तमः । समित्रः सैन्यसंयुक्तः, शोभाडम्बरभासुरः ॥ ८३ ॥ आसनेषु निषण्णेषु, तेषु भूपेषु सोऽधिकम् । ऋद्ध्या रूपेण भाति स, पद्मोत्तरनृपाङ्गजः ॥ ८४ ॥ अथ कन्या सुशृङ्गारा, सुरकन्येव भूगता । सखीजनवृता विष्वक्, सुखासनसमाश्रिता ॥ ८५ ॥ पश्यन्ती च नृपान् सर्व्वान्, लज्जयेषन्निरीक्षणात् । वरमालां करे कृत्वा, तत्रागच्छत्स्वयंवरे ॥ ८६ ॥ तां वीक्ष्य भूमिपाः सर्व्वे, कामबाणैः प्रपीडिताः । एकदृष्ट्या च पश्यन्तो, दृश्यन्ते स्तम्भिता इव ॥ ८७ ॥ मण्डपे तत्र माणिक्यस्तम्भ ऊर्ध्वोऽस्ति मण्डितः । तस्याधो महती मुक्ता, ज्वलत्तैलकटाहिका ॥ ८८ ॥ स्तम्भोपरि द्वादशारं, चक्रं च रचितं चलत् । पाञ्चालिका

च चक्रोर्ध्वं, नृत्यन्ती भ्रमति द्रुतम् ॥ ८९ ॥ पश्यन्कटाहिकामध्ये, बाणमूर्ध्वं विमुच्य च । विध्येद्यो नरस्तस्या, वामदृष्टिकनीनिकाम् ॥ ९० ॥ स एष कथ्यते सद्भिः, राधावेधः सुदुष्करः । राजोचे केन वीरेण, राधावेधोऽत्र साध्यताम् ॥ ९१ ॥ ज्ञातकन्याप्रतिज्ञास्ते, सर्वे तत्रागता नृपाः । राधावेधे जडाः सन्तो, जाताः श्याममुखा ह्रिया ॥ ९२ ॥ शब्दवेदी (धी) धनुर्वेदे, कोविदः पुरुषोत्तमः । अथोत्थाय सभामध्ये, स्तम्भस्याधः समागतः ॥ ९३ ॥ चापमादाय चाकृष्य, युक्त्या संपूर्य सायकम् । विव्याध तत्क्षणाद्वामां, पुत्रिकायाः कनीनिकाम् ॥ ९४ ॥ असाध्यः साधितो राधावेधोऽनेन जयेति च । व्योमन्युच्छलिता वाणी, पुष्पवृष्टिं व्यधुः सुराः ॥ ९५ ॥ ततः पद्मावती हर्षोत्फुल्लनेत्रा व्यचिन्तयत् । पुराऽस्मिन् साभिलाषाहं, जाता सद्रूपमोहिता ॥ ९६ ॥ इष्टं वैद्योपदिष्टं तत्, प्रतिज्ञा पूरिताऽद्य यत् । वरमालां ततः कन्या, कुमारस्य गलेऽक्षिपत् ॥ ९७ ॥ अथ पद्मोत्तरेणाशु, कृत्वा सामग्रिकां वराम् । ततः सुरङ्गतस्तस्य, सा पुत्री परिणायिता ॥ ९८ ॥ भोजयित्वा च सन्मान्य, वालितास्ते नराधिपाः । दत्त्वा शिक्षां कुमारेण, सार्धं संप्रेषिता सुता ॥ ९९ ॥ सोऽप्यागच्छन्निजे राज्ये, प्रमोदात्प्रेयसीयुतः । तस्य पुरप्रवेशं चाकारयत्तातपितोत्सवात् ॥ १०० ॥ तदा पद्मोत्तरो भूपो, वध्वा रूपेण रञ्जितः । मेने धन्यं सुतं यस्य, प्रियाऽभूद्गुणभूषिता ॥ १ ॥ यतः—शीलं मार्दवमार्जवः कुशलता निर्लोभता च त्रपा, वात्सल्यं स्वपरातिथिप्रभृतिके प्रेष्ये वरावर्जनम् । औचित्यं श्वशुरौकसि स्थिरमनास्तद्दूषणाच्छादनं, स्त्रीणां मण्डनमीदृशो गुणगणः शेषं तु भारात्मकम् ॥ २ ॥ तदा तुष्टो नरेन्द्रोऽसौ, राधावेधस्य साधनात् । कुमारस्य विनीतस्य, युवराजपदं ददौ ॥ ३ ॥ अन्यदाऽऽस्थानमासीनो, यावद्भूपः सुतान्वितः । षट्त्रिंशद्राजकुल्या च, संसेवितपदाम्बुजः ॥ ४ ॥ तावत्कापालिकः

कोऽपि, समागात्तत्र संसदि । ऊर्ध्वीकृतभुजादण्डो, नृपायाशीर्वचो ददौ ॥ ५ ॥ नृपेणाभाणि योगीन्द्र !, तवागमनकारणम् । कथय त्वं प्रसादं हि, कृत्वा सम्यग् ममोपरि ॥ ६ ॥ योग्युचे शृणु राजेन्द्र !, परोपकृतिकर्मठ । एको मन्त्रोऽस्ति मे तस्य, साहाय्यं कुरु साधने ॥ ७ ॥ अस्मिन्नसारे संसारे, परोपकृतिमेव च । आयुःशरीरलक्ष्मीणां, सारं गृह्णाति बुद्धिमान् ॥ ८ ॥ यतः—शास्त्रं बोधाय दानाय, धनं धर्माय जीवितम् । कायः परोपकाराय, धारयन्ति विवेकिनः ॥ ९ ॥ संसारे नरजन्मता न सुलभा पुंस्त्वेऽपि सद्वंशता, सद्वंशे बहुविद्यता बहुविदि प्रायस्तदर्थज्ञता । अर्थज्ञे स्फुटचित्रवाक्यपटुता तज्ज्ञेऽपि लोकज्ञता, लोकज्ञेऽपि सुधर्मता सुकृतिनि ब्रह्मज्ञता दुर्लभा ॥ ११० ॥ द्वाविमौ पुरुषौ लोके, जगत्त्रयशिरोमणी । उपकारे मतिर्यस्य, यश्च नोपकृतापहः ॥ ११ ॥ भूपोऽवादीत्सुतोऽयं मे, साहाय्यं ते करिष्यति । राजादेशात्कुमारोऽथ, जगाम सह योगिना ॥ १२ ॥ कृष्णाष्टम्यां रवेर्वारे, स्मशाने योग्यसौ ययौ । संपूर्य मण्डलं तत्र रक्तपुष्पैरपूजयत् ॥ १३ ॥ योगी प्रोचे कुमारात्राक्षताङ्गं शवमानय । तेनोक्तं मृतकं कास्ति, स वटोल्लम्बितं जगौ ॥ १४ ॥ तत्र गत्वा कुमारोऽथ, वटमारुह्य तं शवम् । पाशं छित्त्वाऽमुचद्भूमावुत्ततार स्वयं ततः ॥ १५ ॥ वटोद्बद्धं शवं तावत्स ददर्श च पूर्ववत् । चटित्वा पादपे भूयो, मुमोच मृतकं भुवि ॥ १६ ॥ पुनर्वटे शवं दृष्ट्वा, चेष्टां ज्ञात्वा च दैवतीम् । गृहीत्वा मृतकं हस्ते, वृक्षादुत्तीर्य सोऽचलत् ॥ १७ ॥ मार्गे गच्छन् कुमारोऽसौ, शुश्रावेति नभोगिरम् । शवमादाय मा याहि, रे त्वां योगी हनिष्यति ॥ १८ ॥ श्रुत्वेत्यूर्ध्वमसौ यावदपश्यत्तावदग्रतः । दिव्यरूपधरा नारी, प्रत्यक्षीभूय चाब्रवीत् ॥ १९ ॥ राज्याधिष्ठायिकाऽत्राहं, तव रक्षाऽर्थमागता । तव विघ्नकरो योगी, विद्याव्याजेन धूर्त्तराट् ॥ १२० ॥ मा याहि तत्समीपेऽतः,

शवं मुक्त्वा गृहं व्रज । श्रुत्वेति राजसूः प्रोचे, प्रतिज्ञा मेऽन्यथा न हि ॥ २१ ॥ यतः—दिग्गजकूर्म्मकुलाचल—फणिपतिविधृताऽपि चलति वसुधेयम् । प्रतिपन्नममलमनसां, न चलति पुंसां युगान्तेऽपि ॥ २२ ॥ अन्यच्च—श्रियो नाशं यान्तु व्रजतु निधनं गोत्रमखिलं, शिरश्छेदो वाऽस्तु प्रभवतु समन्ताद्विपदपि । विवेकार्कज्योतिर्विघटितमहामोहतमसः, प्रतिज्ञातादर्थाच्चदपि न चलन्त्येव सुधियः ॥ २३ ॥ कृशानुसेवा फलकन्दवर्त्तनं, जटाधरत्वं वनवासिनां व्रतम् । महीपतीनामिदमेव तु व्रतं, यदात्मसत्यात्प्रलयेऽपि न च्युतिः ॥ २४ ॥ प्रारभ्यते न खलु विघ्नभयेन नीचैः, प्रारभ्य विघ्ननिहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः, प्रारब्धमुत्तमगुणा ( जना ) न परित्यजन्ति ॥ २५ ॥ इत्थं श्रुत्वा पुनर्देवी, कुमारं प्रत्यभाषत । वत्सैकं मम वाक्यं त्वं, शृणु संशयवर्जितम् ॥ २६ ॥ यतः—यस्मिन्कुले यः पुरुषः प्रधानः, स एव यत्नेन हि रक्षणीयः । तस्मिन्विनष्टे हि कुलं विनष्टं, न नाभिभङ्गेऽप्यरका वहन्ति ॥ २७ ॥ ततो हिताय ते वत्स !, पुनः शिक्षा प्रदीयते । यदा मण्डलमध्ये त्वां, स्थापयेद्योग्यसौ तदा ॥ २८ ॥ ॐकारपूर्वकं पञ्चपरमेष्ठिस्मृतिं धरेः । येन विघ्नानि शाम्यन्ति, विकटान्यपि निश्चितम् ॥ २९ ॥ सिंहेनेव मदान्धगन्धकरिणस्तीक्ष्णांशुनेव क्षपा—ध्वान्तौघा विधुनेव तापततयः कल्पद्रुणेवाधयः । तार्क्ष्येणेव फणाभृतो घनकदम्बेनेव दावाग्नयः, सत्त्वानां परमेष्ठिमन्त्रमहसा वल्गन्ति नोपद्रवाः ॥ ३० ॥ सङ्ग्रामसागरकरीन्द्रभुजङ्गसिंह—दुर्व्याधिवह्निरिपुबन्धनसम्भवानि । चौरग्रहभ्रमनिशाचरशाकिनीनां, नश्यन्ति पञ्चपरमेष्ठिपदैर्भयानि ॥ ३१ ॥ एकाग्रचित्ततो वत्स !, ध्येयमेतन्मयोदितम् । इदमुक्त्वा महादेवी, तिरोऽभूत्क्षणादपि ॥ ३२ ॥ ततः स्कन्धे शवं धृत्वा, कुमारः पुरुषोत्तमः । जगाम तत्र योगी स, स्मशाने यत्र वर्त्तते ॥ ३३ ॥ शवं प्रक्षाल्य चाभ्यर्च्य, योगिना रक्त-

चन्दनैः । अग्निकुण्डान्तिके मुक्तं, खड्गं दत्तं च तत्करे ॥ ३४ ॥ शवपादे कुमारं तं तैलाभ्यङ्गनहेतवे । निवेश्य योग्यभूद् ध्यानहोमाद्यैर्मन्त्रसाधकः ॥ ३५ ॥ तदाऽचिन्ति कुमारेण, किञ्चित्कूटं हि दृश्यते । अतोऽस्मरन्नमस्कार–मेकचित्तः सुरीगिरा ॥ ३६ ॥ ततः शवः समुत्थाय, चालयित्वा त्वसिं करे । अपतद्भूमौ कुमारे, विरूपं कर्तुमक्षमः ॥ ३७ ॥ योगिना चिन्तितं किञ्चित्, विस्मृतं मन्त्रसाधने । सावधानो ददौ भूयो, जापपूर्वकमाहुतिम् ॥ ३८ ॥ शवमुत्थाय चाकृष्य, खड्गं वीक्ष्य नृपाङ्गजम् । नमस्कारप्रभावेण, निष्प्रभावं पपात च ॥ ३९ ॥ ततस्तृतीयवेलायां, रुष्टो देवः शवस्थितः । कृत्वा योगिशिरश्छेदं, व्योम्न्युत्पत्य ययौ हसन् ॥ १४० ॥ जातं स्वर्णमयं कुण्डे, पतितं योगिनः शिरः । तद् दृष्ट्वाऽग्नौ कुमारेण, प्रक्षिप्तं योगिनो वपुः ॥ ४१ ॥ कुण्डे प्रज्वाल्यमानं तत्, सञ्जातः स्वर्णपूरुषः । स्कन्धे धृत्वा कुमारेण, स चानीतो निजे गृहे ॥ ४२ ॥ मुक्त्वा तं च नृपस्याग्रे, संबन्धः कथितोऽखिलः । ज्ञात्वा पुत्रस्य सद्भाग्यं, सहर्षोऽभून्नृपस्ततः ॥ ४३ ॥ अन्यदा तत्पुरोद्यानेऽभ्यागात्सूरिर्गुणाकरः । साधुसप्तशतीयुक्तः, स्थितस्तत्र शुभक्षितौ ॥ ४४ ॥ गुरोरागमनं ज्ञात्वा, तदा पद्मोत्तरो नृपः । सपुत्रः सैन्ययुक्तत्र, गत्वा च तमवन्दत ॥ ४५ ॥ गुरुर्धर्म्माशिषं दत्त्वा, प्रारेभे धर्म्मदेशनाम् । भवादृशा भवारण्ये, पतन्ति किं पुनः परे ? ॥ ४६ ॥ संपदो जलतरङ्गविलोला, यौवनं त्रिचतुराणि दिनानि । शारदाभ्रमिव चञ्चलमायुः, किं धनैः परहितं न कुरुध्वम् ॥ ४७ ॥ अर्हद्भक्तिमतां गुरुस्मृतिजुषां क्रोधादिशत्रुद्विषां, भक्त्या पञ्चनमस्कृतिं च जपतां दानादिकं कुर्व्वताम् । इत्थं [1]सिद्धिनिबन्धनोद्यतधियां पुंसां यशःशालिनां, श्लाघ्यो मृत्युरपि प्रनष्टरजसां पर्यन्तकालागतः ॥ ४८ ॥ जन्तूनां

१ धर्मविशुद्धबद्धमनसां इति वा पाठः.

पुण्यतः सर्वं, शुभं भवति नान्यथा । वेगात्सिध्यति चासाध्यमत्र धीरो निदर्शनम् ॥ ४९ ॥ तद्यथा–
नगर्यां पुण्डरीकिण्यां, कातरश्चरितैः पुरा । धीरो नाम्नाऽभवद्राज–पुत्रोऽनभ्यस्तविक्रमः ॥ १५० ॥ धीरत्वं नामधेयेन,
वर्त्तते तस्य नान्यथा । अतस्त्रपापरो गेहान्निःससार कदाऽपि न ॥ १५१ ॥ वीरपुत्री प्रिया तस्य, पतिभीरुत्वदूमिता । लज्ज-
माना सखीवृन्दे, चित्ते दोदूयतेतराम् ॥ ५२ ॥ सेवामलभमानोऽपि, कातरत्वात्स राजसूः । ऊचे मधुरवाणीभिः, गृहिण्या
स्वान्तदुष्टया ॥ ५३ ॥ राज्येऽस्मिन् भवतः शौर्यमज्ञायि पुरवासिभिः । ततो व्रजान्यदेशेषु, कुरु कस्यापि सेवनाम् ॥ ५४ ॥
यथाऽन्यदेशभूपाला, देहपीनत्वमोहिताः । त्वच्चरित्रमजानानाः, प्रसादं ददतेऽधिकम् ॥ ५५ ॥ तथेति सर्व्वशस्त्राणि, सज्जी-
कृत्य स्वमन्दिरात् । कान्तया दत्तपाथेयो, ययौ देशान्तरं प्रति ॥ ५६ ॥ विसृज्य तां पुरीं वेगात्, व्रजन्नन्यायलम्पटैः । रुद्धो
विख्यातचरितैः, सप्तभिः स मलिम्लुचैः ॥ ५७ ॥ ऊचे स दीनवाग् भीरुः, क्षिपन् वक्त्रे दशाङ्गुलीः । वासःपाथेयशस्त्राणि,
गृहीत्वा मां विमुञ्चत ॥ ५८ ॥ अनाथाशरणं दीनं, कम्पमानं भयद्रुतम् । भवतां किङ्करीभूतं, राजेन्द्राः ! किं न मुञ्चत ?
॥ ५९ ॥ गृह्णीत मम सर्व्वस्वं, विना जीवं दयालवः ! । एकोऽहमेव भर्त्ताऽस्मि, निजजायागृहाङ्गणे ॥ १६० ॥ ततः सहासं
ते चौरास्तत्पराक्रमरञ्जिताः । तं तत्यजुर्वस्त्रशेषं, सकम्पं गजकर्णवत् ॥ १६१ ॥ गृहिणीक्षिप्तगरलं, तस्मादात्तं च शम्बलम् ।
बुभुक्षितैस्तैर्बुभुजे, यमसेवाचिकीर्षुभिः ॥ ६२ ॥ आहारदोषात्ते चौराः, शिश्यिरे दीर्घनिद्रया । धीरोऽपि विभ्रमभ्रान्तस्तत्सा-
मीप्यमुपाययौ ॥ ६३ ॥ मरुद्धूनितकूर्चास्तान्, सजीवानेव चिन्तयन् । पुनरेव पलायिष्ट, धीरो दूरं भयातुरः ॥ ६४ ॥
विश्वास्य मामरे धूर्त्ताः !, गृहीष्यथ भटोत्कटम् । इति काकैः क्षणेनापनिन्ये तस्य संशयः ॥ ६५ ॥ वायसाकृतदेहानां,

मृतानां परिमोषिणाम् । मण्डलाग्रेण मुण्डानि, छित्त्वा कट्यां बबन्ध सः ॥ ६६ ॥ कटीनिबद्धैस्तच्छीर्षैस्तुम्बीफलनिभैस्तदा । तरीतुं दौस्थ्यतटिनीं, स तारक इवाबभौ ॥ ६७ ॥ तच्छस्त्रवस्त्राण्यपि स, समादाय मदोद्धुरः । जगाम हस्तिनापुरं, श्रीहर्षनृपराजितम् ॥ ६८ ॥ राहुरूपसमान्मौलीन्, राजद्वारे मुमोच सः । स्वदोष्णोः पौरुषं राज्ञे, शशंस च सविस्तरम् ॥ ६९ ॥ राजाऽपि दुर्द्धरान् चौरान्, देशोपद्रवकारकान् । अजेयान् निहतान् तेन, वीक्ष्य विभ्रममासदत् ॥ १७० ॥ सेवां गृहाणेति पृष्टः, स आख्यन्निजविक्रमम् । यादृशे तादृशे कार्ये, न प्रेष्योऽहं नरेश्वर ! ॥ १७१ ॥ कष्टे भवच्छरीरस्य, समेते मम पौरुषम् । चमत्कारकरं चित्ते, मन्तव्यं मनुजेश्वर ! ॥ ७२ ॥ उरीकृत्येति भूपेन, महाऽऽग्रहपुरस्सरम् । वितीर्य लक्षं स्वर्णस्य, स्थापितोऽसौ भटाग्रणीः ॥ ७३ ॥ मन्यमानः प्रतिदिनं, भुञ्जानो भूपतेर्धनम् । आद्यक्षत्रियवर्गस्य, सोऽभूच्छल्यमिवानिशम् ॥ ७४ ॥

इतश्च तस्मिन्नगरे, तस्य कर्म्मविपाकतः । दुष्टः पञ्चाननः कश्चिच्चकारोपद्रवं महत् ॥ ७५ ॥ स हिनस्ति मनुष्याणां, गोवृन्दानां पुरस्तटे । प्रतोली तद्भयात्तत्र, सायाह्ने दीयते तदा ॥ ७६ ॥ कृपाणपाणयो वीरा, भुजाला ये धनुर्धराः । कृताश्रवास्ते सिंहेन, निन्यिरे यममन्दिरे ॥ ७७ ॥ प्रभूतशोको भूजानिर्मन्त्रिभिर्जगदे कदा । हरिणारेः स हन्ता तु, यो लक्षं लभते भटः ॥ ७८ ॥ सिंहापराधसक्रोधो, नृपो धीराय वीटकम् । समर्प्य केसरिवधमादिशत् शूरदुष्करम् ॥ ७९ ॥ इहार्थे जनितो मात्रा, धीरश्चेतसि चिन्तयन् । वेपमानो भयात्क्रोधान्निजगाद धराधिपम् ॥ १८० ॥ मादृशानां पशुवधं, निर्दिशन् किं न लज्जसे ? । अथवा शूरशूरत्वं, याति कुस्वामिसेवया ॥ १८१ ॥ एवं ब्रुवाणो वाक्यानि, निर्जगाम पुराद्बहिः । द्वारपालैरपि पुरप्रतोली पिदधे तदा ॥ ८२ ॥ विषादं बिभरामास, स चाकृष्टः पुराद्भटः । अहो निशायां भीमायां, शृगालेभ्योऽपि मे

भयम् ॥ ८३ ॥ कस्याहं कुत्र गच्छामि, को मेऽस्ति शरणं वने । इति कण्ठागतश्वासो, मुमूर्च्छ च पदे पदे ॥ ८४ ॥ तदुच्च-भूरुहशाखामारुह्य रजनीमिमाम् । नेष्यामि नियतं प्रातर्यद्भाव्यं तद्भविष्यति ॥ ८५ ॥ धीरे वृक्षाग्रमारूढे, क्षपायां सोऽपि केसरी । दंष्ट्राविसङ्कटमुखो, बूत्कुर्वन्नाययौ क्रमात् ॥ ८६ ॥ मृगारिर्नरगन्धेन, यावत्तस्थौ तरोरधः । तावद्धीरकरात्कुन्तो, वेपमानादधोऽपतत् ॥ ८७ ॥ तीक्ष्णाग्रकुन्तघातेन, धीरपुण्येन च द्रुतम् । मर्मविद्धो मृगारातिर्मृत्युमाप मुहूर्त्ततः ॥ ८८ ॥ धीरः प्रभाते वृक्षाग्रादनुत्तरन् सवेपथुः । बोधितः सिंहपञ्चत्वं, वयस्यैरिव वायसैः ॥ ८९ ॥ भीतभीतस्तमादाय, निवृत्तो विभ्रमोद्धुरः । व्याजहार ससंरम्भं, विशेषावादिनो नरान् ॥ १९० ॥ यात रे ! ब्रूत राजानं, मन्मत्सरधरान् तथा । मत्प्रसा-दात्पुरं सर्व्वं, सुखं तिष्ठतु निर्भयम् ॥१९१॥ निहत्य सिंहं सबलं, धीरो धीरशिरोमणिः । पुरद्वारमितो देव !, त्वन्मानमभिवाञ्छति ॥ ९२ ॥ तेभ्यो विज्ञातवृत्तान्तो, भूपः सम्मुखमागमत् । प्रावेशयच्च नगरं, तं महैर्मानकोविदः ॥ ९३ ॥ नृपप्रदत्तदेशोऽसौ, लोके विख्यातविक्रमः । वाक्शूरो धीरसुभटः, पुण्यात्प्राप परां श्रियम् ॥ ९४ ॥

इति धीरकथानकम् ।

पुण्यैः संभाव्यते पुंसामसंभाव्यमपि क्वचित् । तेरुर्मेरुसमाः शैलाः, किं न रामस्य वारिधौ ? ॥ ९५ ॥ त्रयो धर्मार्थका-माह्वाः, पुरुषार्थाः प्रकीर्त्तिताः । पुनरेषु च सर्व्वेषु, धर्म्म एव प्रशस्यते ॥ ९६ ॥ धर्म्मेण जायते ह्यर्थः, कामो धर्म्मेण जायते । धर्मेण जायते मोक्षः, सर्व्वं धर्मे प्रतिष्ठितम् ॥ ९७ ॥ प्रसन्नो यस्य धर्म्मोऽस्ति, परमाकृष्टिमन्त्रकृत् । राज्यलक्ष्म्यादिकं सौख्यं, तस्य किञ्चिन्न दुर्लभम् ॥ ९८ ॥ सुखं सांसारिकं राजन् !, प्राप्तं राज्याद्यनन्तशः । यतितव्यं तथा धर्म्मे, यथा

मोक्षसुखं भवेत् ॥ ९९ ॥ संसारासारतां ज्ञात्वा, नृपो मोक्षार्थसाधने । उत्सुकः स्वगृहे गत्वा, मूलामात्यमदोऽवदत् ॥ २०० ॥ अथ संसारभीतोऽहं, ग्रहीष्यामि मुनिव्रतम् । राज्येऽत्र भवतां राजा, स्थाप्यते पुरुषोत्तमः ॥ २०१ ॥ इत्युक्त्वा पुत्रमाकार्य, निवेश्य च निजासने । राज्ञाऽस्य निजहस्तेन, मुहूर्त्ते तिलकं कृतम् ॥ २ ॥ कृतो राज्याभिषेकश्च, जयढक्कारवोऽभवत् । आज्ञा प्रवर्त्तिता विश्वे, पुरुषोत्तमभूभुजः ॥ ३ ॥ अथ पद्मोत्तरो राजा, दत्त्वा राज्यं स्वसूनवे । हितशिक्षां ददौ सम्यग्, विदग्धैर्भाषितामिति ॥ ४ ॥ यतः–यः क्षोणीं निजकां न रक्षति मुदा वाच्यः स भूपो मृषा, यः शिष्याय हितानि नोपदिशति प्रायो गुरुर्नेदृशः । नापत्यानि निजानि पालयति या माताऽपि सा कीदृशी, को नामैष पिता न शिक्षयति यः पुत्रं हितार्थी भवन् ? ॥ ५ ॥ अन्यच्च–याता यान्ति महीभुजः क्षितिमिमां यास्यन्ति मुक्त्वाऽखिलां, नो याता न च याति यास्यति न वा केनापि सार्धं धरा । यत्किञ्चिद्भुवि तद्विनाशि सकलं कीर्त्तिः परं स्थायिनी, मत्वैवं वसुधाधिपैः परकृता लोप्या न सत्कीर्त्तयः ॥ ६ ॥ बहुभिर्वसुधा भुक्ता, राजभिः सगरादिभिः । यस्य यस्य यदा भूमी, तस्य तस्य तदा फलम् ॥ ७ ॥ प्रजाः समावर्जयितुं समन्तात्, त्वं कोमलैरेव करैर्यतेथाः । पश्यातिसङ्ख्यैर्दिवि तारकाभि–रासेव्यते शीतकरो न भानुः ॥ ८ ॥ एवं शिक्षां शुभां दत्त्वा, सुतं संस्थाप्य निश्चलम् । स्वयं संयममाराध्य, नृपः प्राप शिवं क्रमात् ॥ ९ ॥

श्रीपुरुषोत्तमो भूपः, प्राप्य साम्राज्यसम्पदम् । पितृशिक्षाप्रमाणेन, स्वप्रजाः समपालयत् ॥ २१० ॥ यतः–पर्जन्य इव भूतानामाधारः पृथिवीपतिः । विकलेऽपि हि पर्जन्ये, जीवितव्यं न भूपतौ ॥ ११ ॥ अथान्यदा स भूमीशः, सुखशय्यासमाश्रितः । तुर्ययामे निशाशेषे, ददर्श स्वप्नमीदृशम् ॥ १२ ॥ पृथ्व्यां परिभ्रमन् कस्मिन्, पुरे राजा ययौ

रयात् । तस्मिन् परिसरे देवकुले दृष्टा तपस्विनी ॥ १३ ॥ तत्समीपे महाहर्म्ये, प्रधानामेककन्यकाम् । सुरूपां सुभगां दृष्ट्वा, तस्यां जातः स रागवान् ॥ १४ ॥ तद्रूपं चिन्तयन् भूपस्तदा जागरितः प्रगे । यावत्संसदि नायाति, मन्त्री तत्रायर्यौ तदा ॥ १५ ॥ सोऽवादीत्सुमतिः स्वामिन् !, सभा संपूर्यते न किम् । स्वप्नचिन्तापरो राजा, न दत्ते किञ्चिदुत्तरम् ॥ १६ ॥ पुनः सुमतिनामाऽसौ, सचिवः स्माह हे प्रभो ! । अद्य चिन्तातुरः कस्मात्, दृश्यसे त्वं ? तदुच्यताम् ॥ १७ ॥ राजा स्माह मया रात्रौ, दृष्टोऽद्य स्वप्न ईदृशः । तस्या रूपेण कन्याया, मोहितोऽस्मि सचिन्तकः ॥ १८ ॥ मन्त्र्यूचे देव ! का चिन्ता, स्वप्नदृष्टे हि वस्तुनि । रम्यस्वप्नात् शुभं भावि, स्वप्नः प्रोक्तो ह्यनेकधा ॥ १९ ॥ उक्तञ्च–समधातोः प्रशान्तस्य, धार्मिकस्यातिनीरुजः । स्यातां पुंसो जिताक्षस्य, स्वप्नौ सत्यौ शुभाशुभौ ॥ २२० ॥ अनुभूतः श्रुतो दृष्टः, प्रकृतेश्च विकारजः । स्वभावतः समुद्भूतश्चिन्तासन्ततिसम्भवः ॥ २२१ ॥ देवताद्युपदेशोत्थो, धर्मकर्मप्रभावजः । पापोद्रेकसमुत्थश्च, स्वप्नः स्यान्नवधा नृणाम् ॥ २२ ॥ प्रकारैरादिमैः षड्भिरशुभश्च शुभोऽपि च । दृष्टो निरर्थकः स्वप्नः, सत्यस्तु त्रिभिरुत्तरैः ॥ २३ ॥ रात्रेश्चतुर्षु यामेषु, दृष्टः स्वप्नः फलप्रदः । मासैर्द्वादशभिः षड्भिस्त्रिभिरेकेन च क्रमात् ॥ २४ ॥ निशान्ते घटिकायुग्मे दशाहात्फलति ध्रुवम् । दृष्टः सूर्योदये स्वप्नः, सद्यः फलति निश्चितम् ॥ २५ ॥ मल (माला) स्वप्नोऽह्नि दृष्टश्च तथाऽऽधिव्याधिपीडितः । मलमूत्रादिपीडोत्थः, स्वप्नः सर्वो निरर्थकः ॥ २६ ॥ प्रधानः पुनरित्यूचे, किं नेत्याभानकः श्रुतः । यद्बृथार्थे जनाः प्राहुः, स्वप्नपृष्ठे प्रधावनम् ॥ २७ ॥ स्वप्नाऽर्थेऽत्र पुना राजन्नेकोदाहरणं शृणु । कस्मिन्ग्रामे प्रदेशेऽभून्मठे कार्पटिकः पुरा ॥ २८ ॥ एकदा तेन निद्रायां, मठी पक्वान्नसंभृता । दृष्टा

स्वप्ने जजागार, प्रभातेऽचिन्तयच्च सः ॥ २९ ॥ अहो ममास्ति पक्वान्नं, कथं ग्रामो न भोज्यते । ग्राममध्ये ततो गत्वा, जनाः सर्वे निमन्त्रिताः ॥ २३० ॥ भोक्तुं तत्रागता लोकाः, सुप्तः कार्प्पटिकस्तदा । जनैः पृष्टं कथं सुप्तः, स्वप्नवार्त्ता प्ररूपिता ॥ ३१ ॥ हसित्वा ते जनाः सर्व्वे, गता निजनिजं गृहम् । ततः स्वप्नवशात्तस्य, जने जाता विडम्बना ॥ ३२ ॥ अतः स्वामिन्समुत्थाय, राजकार्याणि साधय । स्वप्नचिन्तां परित्यज्य, त्वं सुखीभव सर्व्वथा ॥ ३३ ॥ ततो धराधवः प्रोचे, हे मन्त्रिन्मम मानसम् । अत्यन्तं बाधते कामो, दुर्जेयो यो हि दैत्यवत् ॥ ३४ ॥ यतः—तावन्नीतिर्विनीतत्वं, मतिः शीलं कुलीनता । विवेकौचित्यपाण्डित्यं, लज्जा वा तत्त्वनिर्णयः ॥ ३५ ॥ तपःशमदयादानं, संसाराद्भयमित्यपि । सत्यं तत्त्वं च सन्तोषो, यावन्नो पीडयेत् स्मरः ॥३६॥ युग्मम् । कैवर्त्तीं चकमे पराशरमुनिर्गाधिः श्वपाकीं विधिः, स्वां पुत्रीं गुरुकामिनीं द्विजपतिः कुन्तीश्च कन्यां रविः । आभीरीः पुरुषोत्तमः सुरपतिस्तां तापसीं यद्भयात्, तं कन्दर्प्पमदर्प्पमारचयत ब्रह्मास्त्रविस्फूर्जितैः ॥ ३७ ॥ यतः—पितुर्वा मातुर्वा स्मरति न कुलं कामविकला, महेला न स्नेहं न गणयति गेहं वरपितुः । न पात्रं नापात्रं परिहरति न स्वं च न परम्, कथं वा वैकल्ये विलसति सुचेष्टा विलसति ? ॥ ३८ ॥ विषस्य विषयाणां च, दूरमत्यन्तमन्तरम् । उपभुक्तं विषं हन्ति, विषयाः स्मरणादपि ॥ ३९ ॥ त्वं मन्त्रिन् ! सुमतिर्नाम्ना, मतिं काञ्चिद्विचारय । कुरूपायं च कञ्चित्त्वं, कन्याप्राप्तिर्यथा भवेत् ॥ २४० ॥ स्वप्नदृष्टसमं तत्र, मन्त्रिणा रचितं पुरम् । तत्समीपे दानशाला, कारिता भोज्यहेतवे ॥ २४१ ॥ भोजयित्वाऽत्र पृच्छ्यन्ते, नरा वैदेशिका इति । ईदृशं नगरं क्वापि, वीक्षितं वा श्रुतं न वा ॥ ४२ ॥ इत्थं प्रकुर्वतस्तस्य, गतः कालः कियानपि । राज्यकार्याणि सर्वाणि, करोति स्म नराधिपः ॥ ४३ ॥ अथान्यदा नरः

कोऽप्यागतो देशान्तरादिह । भोजयित्वा च तत्तस्य, मन्त्रिणा दर्शितं पुरम् ॥ ४४ ॥ तद् दृष्ट्वा स रुरोदोच्चैः, मन्त्रिणा भणितं ततः । कथं रोदिषि तद् ब्रूहि, कारणं कौतुकं मम ॥ ४५ ॥ स प्रोचे मे जन्मभूमिरीदृशी नगरी परा । विद्यते तत्र विद्येते, मन्मातापितरौ किल ॥ ४६ ॥ अस्मिन् दृष्टे स्मृता साऽद्य, स्मृतौ च पितरावपि । तन्मेऽभून्मानसे दुःखं, विरहात्तेन रोदिमि ॥ ४७ ॥ मन्त्र्यूचे वद भोः पान्थ !, किंनाम्नी क्वास्ति सा पुरी । को भूपस्तत्र वार्त्ता चाऽपूर्वा काचित्प्रवर्त्तते ? ॥ ४८ ॥ पथिकोऽवादीन्मन्त्रीश ! सुमतेऽस्त्युत्तरापथे । प्रियङ्करा पुरी तत्र, राजा श्रीसत्यशेखरः ॥ ४९ ॥ सत्यश्रीरिति तस्यास्ति, पट्टदेवीव देवता । शीलसन्नद्धसर्वाङ्गा, भाग्यसौभाग्यशोभिता ॥ २५० ॥ तत्कुक्षिसम्भवा पुत्री, कमलश्रीर्विचक्षणा । सीमन्तिनीजने सीमा, सा पुनर्नरमत्सरा ॥ २५१ ॥ यतः—शशिनि खलु कलङ्कः कण्टकाः पद्मनाले, जलधिजलमपेयं पण्डिते निर्धनत्वम् । दयितजनवियोगो दुर्भगत्वं सुरूपे, धनवति कृपणत्वं रत्नदोषी कृतान्तः ॥ ५२ ॥ तत्पुरः पूर्वदिग्भागेऽस्त्येकं देवकुलं वरम् । तस्यासन्ने मठे चास्ति, सत्परिव्राजिकाद्वयम् ॥ ५३ ॥ नानाविधमहाविद्यालब्धिसिद्धिविराजिता । मन्त्रतन्त्रादिकपटं, सर्वं जानाति चादिमा ॥ ५४ ॥ तन्मठात्पुरतोऽप्यस्ति, रम्यं हर्म्यं महोन्नतम् । राजपुत्री वसेत्तत्र, पुरं मुक्त्वा नरक्रुधा ॥ ५५ ॥ मठे तपस्विनीपार्श्वे, सा करोति गमागमौ । तत्र शिक्षति शास्त्राणि, दक्षा नवनवानि च ॥ ५६ ॥ अन्यच्च—शास्त्राभ्यासाद्विविधविदुषां चित्तमाह्लादयन्ती, गीतैर्गानादभिमतसखीवर्ग्गमुल्लासयन्ती । पद्मापुत्रं सुरभिकुसुमैर्नित्यमभ्यर्चयन्ती, चेतःशुद्ध्येष्टदमनुपमं मन्त्रमाराधयन्ती ॥ ५७ ॥ गेहान्तःस्था परिचितसखीलोकमालापयन्ती, नित्यं हर्षान्मधुरवचनां सारिकां क्रीडयन्ती । देशायातानभिनवनराम्नागरान्

द्वेपयन्ती, कञ्चित्कालं स्म नयति मनोऽभीष्टमासादयन्ती ॥ ५८ ॥ युग्मम् । यतः—इत्यादिसकलां वार्त्तां, कथयित्वा गतो नरः । ततः सुमतिना सर्व्वं, स्वरूपं ज्ञापितो नृपः ॥ ५९ ॥ तद्दिने सुमती रात्रौ, ददर्श स्वप्नमीदृशम् । हेममालायुतो राजोत्तरस्या दिश आगतः ॥ २६० ॥ इत्थं स्वप्नं प्रगे मन्त्री, भूपस्याग्रे न्यवेदयत् । ततो विशेषतो हर्षं, दधाति स्म धराधिपः ॥ २६१ ॥ ततः सुमतिसंयुक्तो, राजा श्रीपुरुषोत्तमः । प्रस्तावोचितसामान्यरूपवेषक्रियाधरः ॥ ६२ ॥ उत्तरापथदेशं प्रत्यचालीदुत्सुको भृशम् । प्रियङ्करा पुरी तेन, क्रमात्प्राप्ता मनोहरा ॥ ६३ ॥ यतः—किं लङ्का किमु देवनायकपुरी कान्ती च किं द्वारिका, किं वा नागकुमारिकाकृतमिदं क्रीडाकृते स्वेच्छया । किं देवेन्द्रविनिर्म्मितं किमथवा विद्याधरैः कौतुकात्, सृष्टं सत्पुरमत्र यत्त्रिजगतामाश्चर्यकृद् दृश्यते ॥ ६४ ॥ पुरं रम्यं महाहर्म्यं, दृष्ट्वा प्रहर्षितो नृपः । तत्र मार्गादिकं सर्व्वं, वेत्ति स्वप्नानुसारतः ॥ ६५ ॥ गत्वा तेन मठे तस्मिन्, दृष्टं तत्तापसीद्वयम् । तत्पार्श्वे चोपविष्टा सा, वीक्षिता राजकन्यका ॥ ६६ ॥ तां वीक्ष्य विस्मितो भूपोऽचिन्तयद्रूपमीदृशम् । केन द्रव्यप्रकारेण, निर्म्मितं विश्वकर्म्मणा ? ॥ ६७ ॥ यतः—तारुण्यद्रुममञ्जरी किमथवा कन्दर्पसञ्जीविनी, किं लावण्यनिधानभूमिरथवा संपूर्णचन्द्रद्युतिः । किं नारी किमु किन्नरी किममरी विद्याधरी वाथ किं, केयं केन कियच्चिरेण कियता कस्मै कथं निर्म्मिता ? ॥ ६८ ॥ चिन्तयन्निति भूपस्तां, यावद्भूयोऽपि पश्यति । शीघ्रमुत्थाय सा तावदीर्ष्ययाऽगान्निजे गृहे ॥ ६९ ॥ प्रणम्य द्वे तपस्विन्यौ, निविष्टो नृपतिस्ततः । आशीःपूर्व्वं क्षमानाथं, पप्रच्छाद्या तपस्विनी ॥ २७० ॥ कुशलं तेऽस्ति हे भद्र !, दृश्यसे त्वं नरोत्तमः । किमर्थं कुत आयातः ?, क यास्यसि ? वद स्फुटम् ॥ २७१ ॥ पुनर्नत्वा नृपोऽवादीदायातः पद्मिनी-

पुरात् । द्रष्टुं देशान्तरं पृथ्व्यां, विनोदेन भ्रमाम्यहम् ॥ ७२ ॥ ततो राजाऽशनं पानं, खादिमं स्वादिमं तथा । चतुर्धाऽऽहारमेतस्यै, ददौ वस्त्रादिकं पुनः ॥ ७३ ॥ ततः सार्धं प्रधानेन, गत्वा भूपः सरोवरे । अङ्गं प्रक्षाल्य भुक्त्वा च, स्वयं चागात्सुरालये ॥ ७४ ॥ नमस्कृत्य सुरं भक्त्या, सुप्तस्तत्र सुखेन च । अत्रान्तरे सभार्योऽत्र, खेचरः कोऽपि चागतः ॥ ७५ ॥ वाटिकायां प्रियां प्रेष्य, पुष्पानयनहेतवे । आगाद्देवकुले स प्राक्, सुप्तं भूपं ददर्श च ॥ ७६ ॥ तं दृष्ट्वा खेचरो दध्यौ, अहो कोऽयं नरोत्तमः । रूपं निरुपमं चास्य, नेदृशं क्वापि दृश्यते ॥ ७७ ॥ मद्भार्यैनं नरं दृष्ट्वा, दुर्विकल्पान् विधास्यति । अस्मिन् रक्ताऽतिरूपेण, विरक्ता मयि भाविनी ॥ ७८ ॥ नितम्बिन्या असत्यत्वं, चञ्चलत्वं स्वभावतः । माया पुनरविश्वासो, विनता विश्वमोहकृत् ॥ ७९ ॥ योषितो मनसः शेषद्रव्येण विदधे विधिः । करिकर्णतडिज्ज्योतिःखलप्रेमरमास्थितीः ॥ २८० ॥ यत्कर्म कर्तुं नियतिर्नालंभूष्णुरवेक्ष्यते । तद्भार्यो हेलया कुर्युर्महिषीव सुशर्म्मणः ॥ २८१ ॥

तत्कथा चेयमुच्यते ।

मालवोऽस्ति यया[1]ऽनन्तां[2], श्रियं धत्ते समन्ततः । ऋद्धिस्फारा गुणाधारा, धारा नाम महापुरी ॥ ८२ ॥ द्विगुणः पक्षशुद्ध्याऽभूत्, शैशवात्त्रिगुणस्तथा । आसीत्कलाभिर्यल्लोकश्चन्द्रात्सार्धचतुर्गुणः ॥ ८३ ॥ तत्राऽरिदमनः कामं, भूषिताऽशेषभूतलः । सुशर्म्मा यः सुपर्व्वेव, सुशर्म्मा नाम पार्थिवः ॥ ८४ ॥ तच्चित्तकरिवारीव, रतिरूपविजित्वरा । तस्यासीन्महिषी मान्या, मृगनेत्रा मृगावती ॥८५॥ सा भूपवर्जमन्येषां, नराणां वदनान्यपि । न पश्यति स्म नियतं, सतीव्रतविधित्सया ॥८६॥

---

१ अस्य पूर्वार्धश्चिन्त्यः.    २ नन्तं प्र०

बुभुजेऽन्नान्यपि न सा, यानि स्युर्नरनामभिः । इत्थं मायाविनी राज्ञी, हृज्जग्राह नरेशितुः ॥ ८७ ॥ दीपोत्सवदिने लोका, भूपतेरुपदाकृते । आनिन्युश्चित्रवस्तूनि, स्वस्ववंशोचितानि च ॥ ८८ ॥ निर्णेजयित्वा नीरेण, विशदां तारपत्रवत् । भूपाय ढौकयामास(सुः), मीनमालां च धीवराः ॥ ८९ ॥ तां भूपप्रेषितां मालां, वीक्ष्य राज्ञी जगौ रुषा । मत्स्याः पुरुषनामानस्तेन नाहं विलोकये ॥ २९० ॥ वाक्येन तेन तत्रैकस्तिमिरट्टाहसीत् ततः । सञ्जातविस्मया राज्ञी, विषसाद स्वचेतसि ॥ २९१ ॥ ज्ञातुं तन्मत्स्यवृत्तान्तं, न भुङ्क्ते स्म मृगावती । गतासुरपि मीनोऽसौ, विरराम न हासतः ॥ ९२ ॥ न तंत्रज्ञो न शास्त्रज्ञो, न ज्ञानी न च भूतवित् । अन्योऽपि कोऽपि धीधुर्यो, मीनहास्यं विवेद न ॥ ९३ ॥ स्त्रीग्रहेण नरेन्द्रोऽपि, पण्डितानित्यभाषत । यन्त्रे निपीडयिष्यामि, ब्रूत वा हास्यकारणम् ॥ ९४ ॥ पशुवद्वाटके क्षिप्ताः, पण्डिताः क्षीणबुद्धयः । ययाचिरे ते दिवसत्रयं भूपतिभीरवः ॥ ९५ ॥ भीतानुद्वीक्ष्य तान् काचिदब्रवीत् पण्डितस्नुषा । महिषीं बोधयिष्यामि, यूयं मा कुरुताधृतिम् ॥ ९६ ॥ ततो विनीता सा राजगृहिणीं निबिडाग्रहाम् । सामवाक्यैर्मर्मभिद्भिः, सान्त्वयामास दम्भिनीम् ॥ ९७ ॥ यथा यथा सुवाग्नीरैरभ्यषिञ्चन्नृपप्रियाम् । तथा तथा सा काठिन्यं, सणग्रन्थिरिवादधौ ॥ ९८ ॥ देवि ! गृह्णन्ति कार्यस्य, ये पारं पुरुषाधमाः । ते सीदन्ति क्षणादेव, मूर्खद्विजसुताविव ॥ ९९ ॥ कौ तौ द्विजसुतौ मुग्धे !, पृष्टा सा भावकोविदा । महिष्याः प्रतिबोधार्थमाचचक्षे कथामिमाम् ॥ ३०० ॥

नन्दिग्रामे द्विजः कश्चित्तस्य स्तस्तनयावुभौ । तौ भिक्षया स्वदिवसानतिचक्रमतुः क्रमात् ॥ ३०१ ॥ एकदा क्वापि गच्छन्तौ, करम्बपुटवाहिनीम् । वाहिनीं वीक्ष्य तौ विप्रौ, मुदा गाढं ननर्त्ततुः ॥ २ ॥ करम्बकं तु तत्रैव, भक्षयन्तौ बुभुक्षया ।

कदेति दध्यतुश्चित्ते, कुतोऽसौ पुटिकागमः ॥ ३ ॥ नदीतटेन यान्तौ तौ, नरमेकं ददर्शतुः[1] । मोचयन्तं पत्रपात्रीं, करम्बकभृतां जले ॥ ४ ॥ ताभ्यामागत्य तत्पार्श्वे, पुटिकामोचकारणम् । पृष्टं निवेदितं तेन, याथातथ्यं तयो ( ? ) दितम् ॥ ५ ॥ मदीय-भर्तुरुदरे, व्रणमास्ते सवेदनम् । अतः पीडोपशान्त्यर्थं, करम्बस्तत्र वध्यते ॥ ६ ॥ यथा नोल्लङ्घते कोऽपि, वाहिन्यां वाह्यते ततः । श्रुत्वेति तन्मुखाद्वृत्तं, विषादं प्रापतुर्द्विजौ ॥ ७ ॥ धिगिदं किं कृतं कर्म्म, सर्वजनविगर्हितम् । अतो विषण्णौ तौ नद्यां, पतित्वा मृत्युमापतुः ॥ ८ ॥

कार्यस्य कारणं तस्मान्न द्रष्टव्यं नृपप्रिये ! । विमर्शय कथामेनां, भाषिष्ये यद् हसत्त्यमी ॥ ९ ॥ इत्थं कथासुदृष्टान्तै-र्मासमेकं नृपप्रिया । बोधिताऽपि हि नाबोधि, यतः स्त्रीषु कुतो मतिः ? ॥ ३१० ॥ मत्वा वारितवामां तां, वधूस्तत्र नृपाज्ञया । गर्त्तामखानयत्पृथ्वीं, हास्यसङ्केतहेतवे ॥ ३११ ॥ समाहूय मृगावत्या, दासीवृन्दं च सावदत् । रेरे शृणुत मद्वाक्यं, सुधा-रससहोदरम् ॥ १२ ॥ क्षिप्ता यस्या दृषत् शीघ्रं, गर्त्तातीरं गमिष्यति । तस्यै दास्यति हृष्टात्मा, मुक्ताहारं महीपतिः ॥ १३ ॥ तत्रैकवर्जं सर्व्वासां, गर्त्तान्तर्दृषदोऽपतन् । ततो राज्ञीं वधूः प्राह, विद्ध्येनं त्वं निदर्शनम् ॥ १४ ॥ सरोषा राजरमणी, हस्तेत्रान्धा पुनर्जगौ । वद द्राग् मीनहासस्य, कारणं दुःखवारणम् ॥ १५ ॥ वक्ष्येऽहं ह्यस्तनादिने, देवि ! चिन्तय चेतसा । सुभगं गुप्तमेव स्यात्, कार्यं नारीवराङ्गवत् ॥ १६ ॥ द्वितीयेऽपि दिने बुद्ध्वा, राजपत्नीं कृताग्रहाम् । भूपालमालपद्विप्रवधूः सुदृढमानसा ॥ १७ ॥ देव्याश्चेटीः समग्रास्त्वं, विवस्त्राः कुरु भूपते ! । यथा जानासि मीनस्य, हसनं वचनं विना ॥ १८ ॥

---

१ ददृशतु; इति स्यात्.

कुर्व्वन् तदुक्तं साश्चर्यं, तमेकं पुरुषं दृशा । ददर्श श्यामलतनुं, हीनवंशं विशांपतिः १९ ॥ स्वामिन्नसौ स्त्रीवेषेण, भुङ्क्ते देवीं मृगावतीम् । तेन मीनो महीनाथ !, देवीवाचाऽहसद्भृशम् ॥ ३२० ॥ तदस्मान् शुभ्रवपुषः, कथं त्यजसि लंपटे ! । त्वदीयं चरितं सर्व्वं, वयं जानीमहे यतः ॥ ३२१ ॥ इति प्रत्यक्षदृष्टान्तात्, कुपितो वसुधाधिपः । राज्ञीमाकर्षयामास, समं तेनापराधिना ॥ २२ ॥

दुःखखानिरगाधेयं, कलेर्मूलं भयस्य च । पापबीजं शुचां कन्दोऽनभ्राऽशनिर्नितम्बिनी ॥ २३ ॥ ननु सन्ति जीवलोके, काश्चिच्छमशीलसंयमोपेताः । निजवंशतिलकभूताः, श्रुतसत्यसमन्विता वनिताः ॥ २४ ॥ यावन्नायाति मे नारी, तावत्कश्चित्करोम्यहम् । उपायं प्रथमं येन, पश्चात्तापो भवेन्न मे ॥ २५ ॥ ध्यात्वैवं खचरेणाथ, सप्रभावा महौषधिः । समानीय द्रुतं बद्धा, सुप्तस्य नृपतेः करे ॥ २६ ॥ तत्प्रभावात् क्षणेनैव, नारीरूपो नृपोऽभवत् । कृत्वैवं खेचरो मध्ये, ययौ देवार्चनाकृते ॥ २७ ॥ अथ विद्याधरी तस्य, भार्या तत्रागता तदा । स नृपः प्रमदारूपधरः सुप्तस्तयेक्षितः ॥ २८ ॥ देवकन्यासमं वीक्ष्य, तद्रूपं विस्मिता हृदि । चिन्तामिति चकारासौ, खेचरी तुच्छमानसा ॥ २९ ॥ मुक्त्वा हि मामिमां नारीं, वल्लभो मे करिष्यति । पुरुषा भ्रमरा एव, वर्ण्यन्ते वसुधातले ॥ ३३० ॥ नराणां चञ्चला दृष्टी, रम्यारम्येषु तिष्ठति । कृत्याकृत्यं न जानन्ति, ते कामेन विडम्बिताः ॥ ३३१ ॥ यतः—स्नुषां श्वश्रूं सुतां धात्रीं, गुरुपत्नीं तपस्विनीम् । तिरश्चीमपि कामार्त्तो, नरः स्त्रीं भोक्तुमिच्छति ॥ ३२ ॥ अक्षाय वह्नौ विहवो विशन्ति, शस्त्रैः स्वदेहानि विदारयन्ति । तपांसि कृच्छ्राणि समाचरन्ति, रागादि-

१ कन्दः श्वभ्रावनिर्नितम्बिनी. प्र०

वीरान् विरला जयन्ति ॥ ३३ ॥ दृष्टाश्चित्रेऽपि चेतांसि, हरन्ति हरिणीदृशः । किं पुनस्ताः स्मितस्मेरविभ्रमभ्रमितेक्षणाः ॥३४॥ यतः—सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः । स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥ ३५ ॥ एवं ध्यात्वा तयाप्येकां, समानीय महौषधीम् । वामांह्रौ कृष्णसूत्रेण, बध्वा कुब्जीकृतो नृपः ॥ ३६ ॥ विधायैवं सुरं नत्वा, खचरीखेचरौ गतौ । भूपो जागरितोऽपश्यत्, कुब्जीभूतं निजं वपुः ॥ ३७ ॥ निजाङ्गं वीक्षमाणेन, दृष्टं तेनौषधीद्वयम् । विस्मितः प्रथमं पादात्, छोटयामास तां नृपः ॥ ३८ ॥ मुक्त्वा कुब्जत्वमात्मानं, नारीत्वं पश्यति स्म सः । पुनः स्वरूपवान् जातश्छोटयित्वा करौषधीम् ॥ ३९ ॥ ज्ञात्वा तत्तत्प्रभावं तद्वशीकृत्य जटीद्वयम् । उत्थाय भूपतिर्भूयो, गतः प्रव्राजिकामठे ॥३४०॥ कृतः प्रश्नः तपस्विन्या, कथं चिन्तातुरोऽसि भोः ! । का चिन्ता तव चित्तेऽस्ति, तां प्ररूपय मां प्रति ॥ ३४१ ॥ तस्या अग्रे नृपेणाथ, स्वरूपं स्वप्नसम्भवम् । प्रोच्य प्रोचे च कन्यायाः, प्राप्तेश्चिन्तास्ति मेऽधुना ॥ ४२ ॥ ततस्तपस्विनी प्रोचे, सा नारी नरमत्सरी । पुरुषेण समं क्वापि, न करोत्येव भाषणम् ॥ ४३ ॥ नृपेणोक्तमहं मातर्मानिनीरूपमाश्रितः । तया समं वाग्विलासं, विधास्यामि तवाज्ञया ॥ ४४ ॥ तच्छ्रुत्वा तापसी प्रोचे, शक्तिस्तेऽस्ति यदीदृशी । तव सेत्स्यति कार्यं तत्कोऽप्युपायोऽस्ति नापरः ॥ ४५ ॥ ततो दिने द्वितीये स, विधाय वनितावपुः । तपस्विन्याश्रमे गत्वा, नत्वा चैनामुपाविशत् ॥ ४६ ॥ अत्रान्तरे कमलश्रीरागता तन्मठे रयात् । भक्तिपूर्वं नमस्कृत्य, तापसीं प्रति चाब्रवीत् ॥ ४७ ॥ एषा का दृश्यते रामा, कुतः स्थानादिहागता । रम्यरूपा किमर्थञ्च, स्थिता युष्माकमन्तिके ॥ ४८ ॥ सा वृद्धा तापसी साह, सुभगे ! शृणु मे वचः । सुलोचनाभिधानेयं, मदीया भ्रातृनन्दिनी ॥ ४९ ॥ मन्मिलनाय सोत्कण्ठा, पद्मिनीपुरतोऽधुना । समायाता च

पार्श्वे मे, दिनान् स्थास्यति कत्यपि ॥ ३५० ॥ श्रुत्वैवं कमलश्रीः सा, तां परिव्राजिकां जगौ । मातस्ते कथ्यते किञ्चिन्मदुक्तं यदि मन्यसे ॥ ३५१ ॥ तव या भ्रातृजा सा मे, भगिनी तदिमां मम । पार्श्वे मुञ्च यथा यान्ति, दिवसा वार्त्तया सुखम् ॥५२॥ तपस्विन्युपदेशेन, तया नीता निजे गृहे । द्वे अपि क्रीडतः प्रीत्या, गोष्ठीश्च कुरुतो मिथः ॥ ५३ ॥ भोजनादि तया साकं, कुरुते राजनन्दिनी । तपस्विन्याश्रमे सार्द्धं, ते च यातः प्रमोदतः ॥ ५४ ॥ कुरुतस्ते कलाभ्यासं, मिथः स्नेहविमोहिते । कतिचिद्वासरानेवं, गमयामासतुः सुखम् ॥ ५५ ॥ सुलोचनान्यदाऽवादीत्प्रीत्या राजसुतां प्रति । कथं मातृपितृभ्यां ते, नोद्वाहो यौवने कृतः ॥ ५६ ॥ रूपं रम्यं वयो नव्यमस्ति विज्ञानकौशलम् । आरोग्यं तर्हि तारुण्यं, त्वं हारयसि किं मुधा ? ॥ ५७ ॥ ततो नृपसुताप्याख्यत्, बाष्पसंपूर्णलोचना । मम चेद्धर्म्यभगिनी, तत्त्वं पुंनाम मा वद ॥ ५८ ॥ ऊचे सुलोचना भद्रे !, पुरुषद्वेषकारणम् । वद यत्कौतुकं मेऽस्ति, कन्योचे शृणु सुन्दरि ! ॥ ५९ ॥ पितृपट्टगजे दृष्टेऽभूज्जातिस्मरणं मम । ज्ञात्वा प्राग्भवजां वार्त्तां, जाताहं नरमत्सरा ॥ ३६० ॥ नारीरूपधरो भूपः, पुनः पप्रच्छ कुञ्जरे । दृष्टे कथं नरद्वेषः, प्राग्भवः कीदृशश्च ते ? ॥ ३६१ ॥ कमलश्रीस्ततोऽभाणीत्, शृणु त्वं हे सुलोचने ! । मम पूर्व्वभवं येन, जाताहं नररोषिणी ॥ ६२ ॥

मलयाद्रौ महाटव्यां, मणिभद्राभिधः करी । प्रियङ्करीति नाम्नाऽभूत्करिणी तस्य च प्रिया ॥ ६३ ॥ स्वेच्छया क्रीडतस्तौ द्वौ, मिथः प्रेमपरायणौ । अन्यदा दैवयोगेन, दवो लग्नो महान् वने ॥ ६४ ॥ तत्राटव्यां स्थण्डिलानि, पञ्च सन्ति पुरा तदा । तृणवृक्षविहीनानि, दवदुःखं हि तत्र न ॥ ६५ ॥ दवं दृष्ट्वा स नागेन्द्रः, प्रनष्टः करिणीयुतः । प्राक् स्थण्डिले गतौ यावत्तावत्तत्पूर्णमङ्गिभिः ॥ ६६ ॥ अग्निभीतान् वनचरान्, तत्र तान् वीक्ष्य हस्तिराट् । कृत्वा तेषां दयां मुक्त्वा,

स्थण्डिलं तत्पुरो ययौ ॥ ६७ ॥ एवं दृष्ट्वा स्थण्डिलेषु, द्वितीयादिषु देहिनः । स हस्ती हस्तिनीयुक्तो, गतः पञ्चममण्डले ॥ ६८ ॥ तदप्यरण्यजैर्जीवैः, शशखाङ्गिमृगादिभिः । पूर्णं दृष्ट्वा प्रियायुक्तस्तस्य कोणे स्थितो गजः ॥ ६६ ॥ दावाग्निर्विषमो जातो, वातेन प्रेरितः पुनः । तेनारण्यं निमेषेण, कृतं प्रज्वाल्य भस्मसात् ॥ ३७० ॥ वनानि दहतो वह्नेः, सखा भवति मारुतः । स एव दीपनाशाय, कृशे कस्यास्ति सौहृदम् ॥ ७१ ॥ विध्वस्ता मृगपक्षिणो विधुरतां नीताः स्थलीदेवता, धूमैरन्तरिताः स्वभावमलिनैराशा मही तापिता । भस्मीकृत्य सपुष्पपल्लवलतानेतान्महापादपा–नुद्वृत्तेन दवानलेन विहितं वल्मीकशेषं वनम् ॥ ७२ ॥ स्थण्डिलान्तःस्थिताक्रान्ता, दैवाद्दावेन हस्तिनी । नष्टो दवभयाद् हस्ती, दह्यमानां विमुच्य ताम् ॥ ७३ ॥ मुखं लात्वा निजं जीवं, करे कृत्वा सुवेगतः । पतिं पलायितं वीक्ष्य, करिणी कोपमादधौ ॥ ७४ ॥ पुनश्चित्तं तया स्वस्थं, विहितं क्रोधशान्तितः । पूर्वं मुनिप्रसङ्गाच्च, जाताऽस्याः पुण्यसन्मतिः ॥ ७५ ॥ तद्वने श्रीयुगादीशजिनप्रासाद उत्तमः । पुरा दृष्टस्तदा चित्ते, स स्मृतो भाग्यतस्तया ॥ ७६ ॥ नमस्कारप्रभावश्च, श्रुतो मुनिमुखात्तया । सान्ते तद्ध्यानतो मृत्वा, दवदग्धा दिवङ्गता ॥ ७७ ॥ भुक्त्वा स्वर्गसुखं च्युत्वा, सा जाताऽहं नृपाङ्गजा । दृष्टे गजेऽत्र मे जातिस्मृतिर्जाता सुलोचने ! ॥ ७८ ॥ मां ज्वलन्तीं दवे मुक्त्वा, गजो नष्टः स निष्ठुरः । नरा एवंविधाः क्रूरास्तन्मुखं वीक्ष्यते कथम् ? ॥ ७६ ॥ स्वर्गभोगा मया भुक्ता, मेरुतुल्या हि हे सखि ! । तत्किं सर्षपसदृशैर्मानुषैस्तृप्यते मनः ? ॥ ३८० ॥ काव्यम्–असुरसुरपतीनां यो न भोगेषु तृप्तः, कथमिह मनुजानां तस्य भोगेषु तृप्तिः ? । जलनिधिजलपानाद् यो न जातो वितृष्ण–स्तृणशिखरगताम्भःपानतः किं स तृप्येत् ? ॥ ३८१ ॥ विषयसुखं दुग्धमिवास्वादयति जनो बिडाल इव मुदितः । नोत्पाटितलकुटमिवोत्प-

स्यति यममहह किं कुर्म्मः ? ॥ ८२ ॥ ध्यानैः किं गुरुभिः परैः किमुरुभिस्तैस्तैस्तपोभिर्वरैः, किञ्चान्यैरपि देवतादिविषय-स्तोत्रैः प्रपञ्चैः कृतैः । आतश्चित्त ! परं सुखं स्पृहयसि त्वं चेत्तदा दूरतो, वातान्दोलितलोलदीपकशिखामित्राणि कामां-स्त्यज ॥ ८३ ॥ विचार्यैवं ममाग्रे च, हे हले विषयादिकम् । पुनः पुरुषनामापि, कथनीयं कदापि न ॥ ८४ ॥ प्रियां प्रेम-परां मुक्त्वा, ज्वलन्तीं यद्गतः करी । पुरुषार्थः स किं श्रेष्ठः, स नरो मन्यते कथम् ? ॥८५ ॥ सुलोचनाऽवदन्नार्य्याः, कन्या-त्वं भाति नो चिरम् । एवं तदाग्रहाद् भूयः, कमलश्रीरिदं जगौ ॥ ८६ ॥ यदि प्राग्भवभर्त्तारं, क्वापि जानामि तद्गुणान् । दृष्ट्वा कदाचिदप्येनं, स्नेहात्परिणयाम्यहम् ॥ ८७ ॥ इत्थं निशम्य भूपत्नी, चिन्तासागरसङ्गता । सा जातिस्मरणं प्राप, ज्ञातः पूर्व्वभवो निजः ॥ ८८ ॥ अन्येद्युः तापसीपार्श्वे, गत्वा भूपतिरामया । कन्यायाश्चात्मनः पूर्व्वभववृत्तं निवेदितम् ॥ ८९ ॥ तपस्विन्या ततस्तच्च, चरित्रं चित्रपट्टके । लिखितं लिखिता तत्र, साटवी दवसंयुता ॥ ३९० ॥ प्रियां प्रज्वलितां प्रेक्ष्य, गतो नागोऽम्बुहेतवे । नीरमानीय तां दग्धां, सिञ्चति स्म द्रुतं करी ॥ ९१ ॥ पुनर्याति तथाऽऽयाति, नीरं नीत्वा स वेगतः । एवं गमागमौ कुर्व्वन्, दवदग्धो मृतो गजः ॥ ९२ ॥ कृतानि हस्तिहस्तिन्योरेवं रूपाणि पट्टके । शिक्षां दत्वा ददौ राजा, पट्टं सुमतिमन्त्रिणे ॥९३ ॥ तेन चतुष्पथे पट्टो, मण्डितो महिमान्वितः । किमेतदिति यः कोऽपि, पृच्छेत्तदेति वक्त्यसौ ॥९४॥ मत्स्वामिचरितं ह्येतन्महाश्चर्यविधायकम् । परम्परागता पट्टवार्त्ताऽथ कन्यया श्रुता ॥ ९५ ॥ आकारितस्तया तत्रागतोऽसौ पट्टहस्तकः । दृष्टश्च चित्रितः पट्टोऽटवी दृष्टा दवान्विता ॥ ९६ ॥ दृष्टानि गजरूपाणि, ज्ञातं तद्वृत्तमात्मनः । सा तं पूर्व्व-पतिं वीक्ष्य, रुरोदोच्चैः पुनः पुनः ॥ ९७ ॥ अग्निदग्धं गजं दृष्ट्वा, मुक्त्वा च नरमत्सरम् । दध्यौ सा मम कार्ये हा, स्नेहबद्धो

मृतः पतिः ॥ ९८ ॥ स्नेहो मूलमनर्थानां, स्नेहो दुःखपरम्परा । स्नेहेन सहते जन्तुर्मथनं दधिवत्सदा ॥ ९९ ॥ यतः—प्रिया-कृते शृङ्खलतां मुरारिः, शशी कलङ्कं रविरङ्गतत्त्वाम् । देहार्द्धतां शम्भुरुरीचकार, प्रेम्णो विकारः खलु दुर्निवारः ॥ ४०० ॥ सीदन्तु स्वजना हसन्तु पिशुनाः शोचन्त्वमी बान्धवा, आरोहन्त्ववसवस्तुलां नयविदो निन्दन्तु यान्तु श्रियः । सेव्योऽभीष्ट-जनस्तथापि रभसा निःशङ्कमुच्चैर्यतो, युक्तायुक्तविचारणा यदि भवेत् स्नेहाय दत्तं जलम् ॥४०१॥ न दृष्टोऽथ पतिः सिञ्चन्, दावपीडितया मया । धिग् मां यया कृतो द्वेषः, प्रायो नार्योऽल्पबुद्धयः ॥२॥ ध्यात्वैवं स तया पृष्टः, केन चित्रेऽर्पितं ह्यदः । तेनोक्तं शृणु मे स्वामी, राजाऽस्ति पद्मिनीपुरे ॥ ३ ॥ पुरुषोत्तमनामा स, जातिस्मृत्याऽवगम्य च । पट्टेषु लेखयामास, चरित्रं पूर्व्वजन्मनः ॥ ४ ॥ निजप्राग्भवभार्याया, ज्ञानार्थं मतिमोहतः । सर्वत्र राज्यसंस्थाने, ते पट्टास्तेन प्रेपिताः ॥ ५ ॥ यतः—कर्म्माणि सर्वाणि च मोहनीये, दुःखानि सर्वाणि दरिद्रतायाम् । पापानि सर्वाणि च चौर्यभावे, दोषा अशेषा अनृते भवन्ति ॥ ६ ॥ जाग्रतामपि निद्रा या, पश्यतामपि याऽन्धता । श्रुते सत्यपि जाड्यं यत्, सप्रकाशे च यत्तमः ॥ ७ ॥ दाराः परि-भवकारा, बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो, ये रिपवस्तेषु सुहृदाशा ॥ ८ ॥ अतः प्राग्भवजो मोहो, मोचितोऽपि न मुञ्चति । तेनाहं पट्टमादाय, स्वामिवाक्यादिहागतः ॥ ९ ॥ ततो हर्षभरात्सोचे, जातिस्मृत्येति वेद्म्यहम् । सैव हस्तिन्यहं जाता, प्राक्पतिर्मे नृपः स तु ॥ ४१० ॥ सा तस्मिन् रागिणी प्रोक्त्वा ( च्य ), सम्बन्धं पितरं जगौ । पद्मिनीपुरभूपेन, समं मां त्वं विवाहय ॥ ११ ॥ हृष्टचित्तेन राज्ञाऽथ, कृता सामग्रिकाऽखिला । महर्ध्या सर्वसारेण, सुबुद्धि-सचिवान्विता ॥ १२ ॥ शुभेऽह्नि कमलश्रीः सा, प्रहिता तां पुरीं प्रति । क्रमात् सुलोचनायुक्ता, प्राप्ता च पद्मिनीपुरम् ॥ १३ ॥

युग्मम् ॥ तत्रोद्याने पटकुट्यां, स्थिता सैन्यसमन्विता । पुरे प्रकटिता वाणी, कन्याऽऽयाता स्वयंवरा ॥१४॥ सुमतिः प्राक् पुरे गत्वा, वाद्यनिर्घोषपूर्व्वकम् । ससैन्यः सम्मुखं गत्वा, तस्या आतिथ्यमातनोत् ॥ १५ ॥ यतः—उत्तिष्ठन्ति निजासनान्नतशिरः पृच्छन्ति च स्वागतं, सन्तुष्यन्ति हसन्ति यान्ति च चिरं प्रेमाश्रितां सङ्गतिम् । सिञ्चन्तो वचनामृतेन हृदयं सन्तः समीपागते, किं वा न प्रियमप्रियेऽपि हि जने कुर्व्वन्ति जल्पन्ति च ॥ १६ ॥ स्वगृहेऽहं गमिष्यामीत्युक्त्वा राजसुतां प्रति । नारीरूपधरो भूपोऽप्याजगाम पुरान्तरे ॥ १७ ॥ छोटयित्वा जटीं भूपो, बभूव निजरूपवान् । राजानमागतं ज्ञात्वा, चक्रे पुर्य्यां जनैर्महः ॥ १८ ॥ सकला मन्त्रिसामन्ता, आगत्य प्रणिपत्य च । नृपं वर्द्धापयामासुर्हर्षपूरितमानसाः ॥ १९ ॥ अथास्थानं समाश्रित्य, ज्योतिःशास्त्रविदं द्विजम् । आकार्य च विवाहस्य, लग्नं पप्रच्छ भूपतिः ॥ ४२० ॥ तेनालोक्य शुभं चाष्टादशदोषविवर्जितम् । रेखाशुद्धं बलोपेतं, दत्तं लग्नं निशामुखे ॥ २१ ॥ सुमतिश्च सुबुद्धिश्च, द्वौ मिलित्वा प्रमोदतः । सामग्रीं चक्रतुः सर्वां, विवाहे वरकन्ययोः ॥ २२ ॥ मनोरथशतैः सार्धं, भूभुजा पुण्ययोगतः । दृष्टा स्वप्नेऽपि सा साक्षात्, परिणीता हि पद्मिनी ॥ २३ ॥ मासमेकं महोत्साहात्, सम्मान्य स्वजनान्नृपः । यथायोग्यं ददौ तेभ्यो, वस्त्रालङ्करणादिकम् ॥ २४ ॥ सुबुद्धिसचिवाद्या ये, येऽन्ये प्राघूर्णका अपि । सम्पूज्य परया भक्त्या, तान् सर्वान् विससर्ज सः ॥ २५ ॥ पूर्व्वं पद्मावती पट्टदेवी राज्ञोऽभवद्यथा । लब्धा स्वप्नानुसारेण, कमलश्रीरभूत्तथा ॥ २६ ॥ रतिप्रीतिसमानेन, तेन भार्याद्वयेन सः । राजा रराज सद्रूपः, कन्दर्प इव मूर्तिमान् ॥ २७॥ पद्मिनीहस्तिनीभेदास्तस्य जाताः प्रियाः पराः । सार्द्धं ताभिर्बुभोजासौ, भोगान् राज्यं च चक्रिवत् ॥ २८ ॥ प्राग्जन्ममोहतो राज्ञो, विशेषात् कमलश्रियाम् । रागोऽभूत्तेन न प्राप, स रतिं तां विना क्वचित्

॥ २६ ॥ राज्यं पालयतस्तस्य, न दुर्भिक्षं न विड्वरम् । न दुःखं नैव चान्यायो, न पापं चाभवद्भुवि ॥ ४३० ॥ न्यवारय-
दसौ सप्त, व्यसनान्यवनीतले । सप्तक्षेत्रेषु वित्तानि, वपति स्म सुवित्तवान् ॥ ३१ ॥ तस्याथ भुञ्जतो भोगान्, घनः कालो
गतस्ततः । पद्मावती कमलश्री, पत्न्यौ गर्भं च बभ्रतुः ॥ ३२ ॥ पुत्रौ क्रमाद् द्वयोर्जातौ, पित्रा हर्षेण सोत्सवम् । श्रीषेणो
हरिषेणश्चेति नाम्नी विहिते तयोः ॥३३॥ पूर्व्वं तौ लालितौ पश्चात्, पाठितौ सकलाः कलाः । क्रमात् प्रवर्धमानौ च, प्रापतुर्यौ-
वनं वरम् ॥ ३४ ॥ यतः–बाल्ये शास्त्रकलापरिश्रमपरः शिक्षावपुःपोषक–स्तारुण्ये विभवार्जनश्च विषयी पित्रोः परं पालकः ।
धर्म्मिष्ठश्च मनोविकारविरहस्त्वच्छेन्द्रियो वार्द्धके–ऽपीदृक्तस्तनयो भवेदिह परत्रासङ्ख्यसौख्याय वै ॥ ३५ ॥ द्वावपि भ्रातरौ
तौ हि, रामलक्ष्मणवत्सदा । परस्परं प्रेमबद्धौ, भुञ्जाते क्रीडतः सह ॥ ३६ ॥ यतः—कान्तारे व्यसने विवादकलहे दुःखे सुखे
सङ्गरे, यात्रायां व्यवहारकर्म्मणि कुलाचारे विवाहक्रमे । अन्यत्रापि शुभाशुभेषु विधिषु प्रायः सहायः सदा, यस्तस्मै निजब-
न्धवे स्पृहयति स्वैरं न किं बान्धवः ? ॥ ३७ ॥ सर्व्वमप्याप्यते वस्तु, पौरुषेण धनेन वा । न भ्राता प्राप्यते क्वापि, पुण्यवान्
विनयी गुणी ॥ ३८ ॥ अथ तन्नगरासन्ने, वने भूरिगुणान्वितः । आगात् श्रीसम्भवः सूरिर्दूरीकृततमोभरः ॥ ३९ ॥ प्रासुकं
स्थण्डिलं प्रेक्ष्य, शिष्यसप्तशतैर्वृतः । तत्र स्थितश्चतुर्ज्ञानी, चतुर्धा धर्मभापकः ॥४४०॥ उद्यानपालकाद् ज्ञात्वा, गुरोरागमनं
नृपः । आगत्य चानमत् सूरिं, शुश्रावेति च देशनाम् ॥ ४१ ॥ भो भव्याः ! भवपाथोधौ, विरसे कश्मलाविले । एकः प्रश-
स्यते धर्मश्चिन्तामणिरिवामलः ॥ ४२ ॥ विद्वेषो व्यसनेषु साधुषु महाप्रीतिर्गुणेष्वादरः, सद्विद्यासु रतिः सुभाषितरसास्वादेषु
कौतूहलम् । शक्तिः सूक्तिकृतौ परार्त्तिशमने यत्नो जिनाराधने, तात्पर्यं जगतीह कस्यचिदहो धन्यस्य सम्पद्यते ॥ ४३ ॥

समत्वं भज भूतेषु, निर्ममत्वं विचिन्तय । अपाकृत्य मनःशल्यं भावशुद्धिं समाश्रय ॥ ४४ ॥ श्रुत्वेति देशनां राजा, भृशं वैराग्यरञ्जितः । पृच्छति स्म निजं पूर्व्वभवं पुण्यं च यत्कृतम् ॥ ४५ ॥ गुरुरूचे महीनाथ ! शृणु जन्मान्तराणि ते । यत्तपसाऽर्जितं पुण्यं, स्फुटं तत्कथयामि ते ॥ ४६ ॥ चेत्रेऽत्रैव पुरी रम्या, नरकान्ताभिधाऽभवत् । नरसेनो नृपस्तत्र, कुञ्जरश्रेणिशोभितः ॥ ४७ ॥ तत्पुरे गुणसारोऽभूत्सार्थवाहो महाधनी । गुणश्रीस्तत्प्रिया चासीत्पतिचित्तानुवर्त्तिनी ॥ ४८ ॥ दिनैः कतिपयैस्तस्य, दुर्द्दशायोगतः खलु । नरकच्युतैकजन्तुर्गुणश्रीकुक्षिमागतः ॥ ४९ ॥ तस्योत्पत्तिवशात्साऽथ, दोहदानशुभान् दधौ । पर्य्यधान्मलिनं वस्त्रं, कुत्सितान्नं च रोचते ॥ ४५० ॥ दानं नाहं ददाम्येव, कथमायान्ति मद्गृहे । भिक्षुका इत्यभूत्तस्या, उक्तिर्गर्भानुभावतः ॥ ५१ ॥ अभाग्यवशतस्तस्या, गुणसारः पतिर्मृतः । संकलापि गता लक्ष्मीर्जलस्थलगृहस्थिता ॥ ५२ ॥ यद् यस्य चटितं हस्ते, गृहीतं तेन तद्धनम् । अथ तस्मिन्सुते जाते, मृता माता कियद्दिनैः ॥ ५३ ॥ कृशः कपिलकेशश्च, कुब्जो वामन एव च । कुरूपो दुर्भगो बालः, सोऽभवत् पूर्वपातकात् ॥ ५४ ॥ कुटुम्बं संहृतं तेन, दयया पालितो जनैः, सुगुणं विगुणं नैव, गणयन्ति दयालवः ॥ ५५ ॥ संवृतं सकलं तेन, तस्मात्कारणतो जनैः । संवरोऽस्य कृतं नाम, प्रसिद्धं बालकालतः ॥ ५६ ॥ यत्रासौ याति तत्रोच्चैर्दुर्वाक्यैस्ताड्यते जनैः । केषांचिद्गृहहट्टादौ, दौर्भाग्यात्प्राप न स्थितिम् ॥ ५७ ॥ वसतिं कुरुते यत्र, तत्र डिम्भैः प्रपीड्यते । काकेभ्यो घूकवत्तेभ्यः, पीडनं सहते स्म सः ॥ ५८ ॥ राजद्वारे गतः सोऽथ, ताड्यते द्वारपालकैः । तारुण्येऽपि विरूपं तन्न गतं तस्य कर्म्मतः ॥ ५९ ॥ इत्थं प्रवर्त्तमानेऽथ, कालेऽतिदुर्दशान्विते । दौर्भाग्यदुःखतश्चित्ते, आत्मना स व्यचिन्तयत् ॥ ४६० ॥ अहो मे कीदृशं पापं, वर्त्तते युगपद्यतः । मातापित्रोर्विनाशोऽभूत्,

कुटुम्बस्य च सम्पदाम् ॥ ६१ ॥ उक्तञ्च—उत्पद्यन्ते च हृद्येव, हृद्येव च विलिल्यिरे । अहो मे मन्दभाग्यस्य, रोरस्येव मनोरथाः ॥ ६२ ॥ मानिता न सुहृद्वाचो, गणितं नात्मलाघवम् । जनवादाच्च नो भीतं, कुलाङ्गारेण हा मया ॥ ६३ ॥ सौनिकेषु कृतघ्नेषु, व्याधेषु व्रतलोपिषु । विश्वस्तघातकेष्वेषु, मत्समो नैव पापभाक् ॥ ६४ ॥ कषायविषयान्धेषु, तिर्यग्नरकगामिषु । प्रच्छन्नपापकार्येषु, संसारानन्तचारिषु ॥ ६५ ॥ अभव्येषु मदान्धेषु, मांसाशनरतेष्वपि । कुलमालिन्यकेष्वेषु, मत्तुल्यो नैव दुर्दशः ॥ ६६ ॥ युग्मम् ॥ वरमन्धो वरं मूर्खो, वरं कुष्ठी वरं कुणिः । वरं पत्ती वरं म्लेच्छो, नाहं कुलजमानवः ॥ ६७ ॥ काव्यम्—केचिज्जनाः सकलमेव जगत्समर्था, भर्त्तुं कुटुम्बमपरे तनुमात्रमन्ये । अस्मद्विधाः पुनरभाग्यभुजङ्गदष्टाः, शक्ता भवन्ति न निजोदरपूरणेऽपि ॥ ६८ ॥ भ्रान्तं याचनतत्परेण मनसा देहीति वाक् प्रेरिता, भुक्तं मानविवर्जितं परगृहे साशङ्कया काकवत् । साक्षेपं भ्रुकुटीकटाक्षकुटिलं दृष्टं खलानां मुखं, तृष्णे देवि ! यदन्यदिच्छसि पुनस्तत्रापि कुर्मो वयम् ॥ ६९ ॥ दृष्टं दुर्जनचेष्टितं परिभवो लब्धः समानाज्जनात्, मित्रार्थे धनिनां कृतं सुललितं भुक्तं कपालेष्वपि । पद्भ्यामध्वनि संप्रयातमसकृत् सुप्तं तृणस्रस्तरे, यच्चान्यत्र कृतं कृतान्त ! कुरु तत्तत्रापि सज्जा वयम् ॥ ४७० ॥ स पुनश्चिन्तयामास, पराभवगृहस्य मे । दुर्भगस्य स्थितिर्नैव, युज्यते नगरान्तरे ॥ ७१ ॥ विचार्य्यैवं पुरं त्यक्त्वा, ययौ यावद्वनान्तरे । गोपालैस्तत्र पाषाणैर्लकुटैः कुट्टितस्तदा ॥ ७२ ॥ तेनानुमोदना चैवं, चक्रे धृत्वा क्षमां तदा । रे जीव ! कृतकर्माणि, सहनीयानि सर्व्वथा ॥ ७३ ॥ दारिद्र्यदवदग्धानामाधिव्याधिधृतात्मनाम् । कृपणानामशक्तानां, गतिरेका क्षमोदिता ॥ ७४ ॥ गच्छन्सोऽग्रे महारण्ये, प्रविष्टो भवभीतिधृत् । सिद्धासने स्थितस्तत्र, दृष्टस्तेन मुनीश्वरः ॥ ७५ ॥ मुनिना

तं समायातं, दीनं वीक्ष्येति जल्पितम् । आगच्छागच्छ वत्सात्र, तच्छ्रुत्वा तेन चिन्तितम् ॥ ७६ ॥ अहो मे साम्प्रतं किञ्चिद्भाग्यं जागरितं खलु । आगच्छेति हि वार्त्ता प्राग्, नोक्ता केनापि मां प्रति ॥ ७७ ॥ मुञ्चन्नश्रूणि सोऽजल्पत्, लगित्वा मुनिपादयोः । अद्य जातः कृतार्थोऽहं, भगवंस्तव दर्शनात् ॥ ७८ ॥ बाहौ धृत्वाऽथ मुनिनाऽऽश्वास्य स्वस्थीकृतश्च सः । वैराग्यविषये तस्य, प्रदत्ता चेति देशना ॥७९॥ यतः—दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवे गर्भवासे नराणां, बालत्वे चापि दुःखं मलमलिनतनुः स्त्रीपयःपानमिश्रम् । तारुण्ये चापि दुःखं भवति विरहजं वृद्धभावोऽप्यसारः, संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥ ४८० ॥ संसार एष कूपः सलिलानि विपत्तिजन्मदुःखानि । इह धर्म्म एव रज्जुस्तस्मादुद्धरति निर्मग्नान् ॥ ८१ ॥ दित्सा स्वल्पधनस्याप्यवष्टम्भः कष्टितस्य च । गतायुषोऽपि धीरत्वं, स्वभावोऽयं महात्मनः ॥ ८२ ॥ संवरः स्माह हे साधो !, दुःखं मेऽत्र भवे महत् । मुनिर्जगाद नृभवे, दुःखमेतत्कियत्तव ? ॥ ८३ ॥ नरके यानि दुःखानि, जीवैर्भुक्तान्यनन्तशः । लेशतस्तानि कथ्यन्ते, सावधानतया शृणु ॥ ८४ ॥ यतः—खण्ड्यन्ते तिलशो यत्र, कुट्टयन्ते वज्रमुद्गरैः । पच्यन्ते वह्निकुम्भीषु, छिद्यन्ते निशितासिभिः ॥ ८५ ॥ करपत्रैर्विदार्यन्ते, भक्ष्यन्ते कोलकुर्कुरैः । महायन्त्रेषु पीड्यन्ते पाय्यन्ते, गलितं त्रपुः ॥ ८६ ॥ अयोरथेषु योज्यन्ते, आस्फाल्यन्ते शिलातले । क्षिप्यन्ते वह्निकुण्डेषु, स्वाप्यन्ते तप्तधूलिषु ॥ ८७ ॥ क्षेत्रस्वभावजं नित्यमन्योऽन्येन कृतं तु यत् । वेदयन्ति महादुःखं, नारका गाढमत्सराः ॥ ८८ ॥ ज्वरोष्णदाहा भयशोकतृष्णा—कण्डूबुभुक्षा अपि पारवश्यम् । शीतं पुनर्नारकिणामतीव, दश प्रकाराः प्रभवन्ति पीडाः ॥ ८९ ॥ तिरिया कसंकुसारानिवायवहबन्धमारणसयाइं । नवि इहयं पावंता, परत्थ जइ नियमिया हुन्ता ॥ ४९० ॥

एवं संसारदुःखानि, श्रुत्वा वैराग्यतोऽथ सः । खड्गधारासमं तीव्रं, नी(ला)त्वा व्रतमपालयत् ॥ ९१ ॥ गुरुशिक्षां दधच्छीर्षे, गीतार्थः सोऽभवत् क्रमात् । तपांसि प्रतिमादीनि, सर्व्वाण्येवाकरोत्पुनः ॥ ९२ ॥ जिनकल्पधरो जातः, पाण्मासिकतपोधरः । कार्योत्सर्गेऽन्यदाऽरण्ये, स्थितोऽसौ मेरुवत्स्थिरः ॥ ९३ ॥ स्वर्गे तदा सुरेशेन, तत्स्थिरत्वं प्रशंसितम् । मिथ्यादृष्टिः सुरः कश्चित्तत्प्रशंसां न श्रद्दधौ ॥ ९४ ॥ तेनैवं कथितं चाहं, चालयामि द्रुतं मुनिम् । मनुजे किं स्थिरत्वं यद्देवैरपि न चाल्यते ? ॥ ९५ ॥ इत्युक्त्वाऽऽगात्सुरस्तत्र, स मुनिर्यत्र संस्थितः । कृतस्तु मायया सार्थो, ग्रीष्मकालोऽवतारितः ॥ ९६ ॥ मित्रस्यापि कठोरत्वं, तृष्णावृद्धी रसत्रुटिः । जलवल्लभता ग्रीष्मे, कलिकाल इवाभवत् ॥ ९७ ॥ सार्थपो मुनिपार्श्वे स, समुदाययुतोऽवसत् । क्षुत्तृपार्त्तिर्मुनेर्देहे, सृष्टा देवेन मायया ॥ ९८ ॥ शीतलाम्बुकरम्बाद्यं, मुनेरग्रे त्वढौकयत् । नाग्रहीत्तन्मुनिः किञ्चित्, यत्षण्मासीतपोविधिः ॥ ९९ ॥ यामिन्यर्द्धे च देवेनातपं कृत्वेति भाषितम् । ममोपरि दयां कृत्वा, कायोत्सर्गं हि पारय ॥ ५०० ॥ सर्व्वान्नं प्रासुकं मेऽस्ति, त्वं तु प्रासङ्गिकोऽतिथिः । तच्छ्रुत्वा मुनिनाऽचिन्ति, निशायां कथमातपः ॥ ५०१ ॥ मायया केन देवेन, क्रियते मत्परीक्षणम् । कायोत्सर्गं ततो नाहं, पारयाम्यवधिं विना ॥ २ ॥ चतुर्विधाऽऽहारमुक्तः, कायोत्सर्गे स्थितो मुनिः । देवेन व्याघ्रसर्प्पाणामुपसर्गाः कृता घनाः ॥ ३ ॥ नोपसर्गैश्चचालर्षिर्विरराम स्वयं सुरः । सानुकूलो हृष्टमनाः, प्रकटीभूय चावदत् ॥ ४ ॥ प्रभो ! यादृक् सुरेन्द्रेण, वर्णितस्त्वं ततोऽधिकः । परीक्षितो मया यत्त्वं, क्षन्तव्यं तन्महामुने ! ॥ ५ ॥ किं वातैः प्रबलैर्विश्वैर्मेरुशृङ्गं हि चालितम् । इति स्तुत्वा पुष्पवृष्टिं, कृत्वा नत्वा सुरो गतः ॥ ६ ॥ षण्मास्यन्ते संवरर्षिश्चकार विधिपारणम् । तपसा लब्धयो जाता, अणिमाद्या अनेकशः ॥ ७ ॥ चिरं तीव्रतपस्तप्त्वा, प्रान्ते पक्षोपवासतः ।

मृत्वाऽभूत्सप्तमे कल्पे, इन्द्रसामानिकः सुरः ॥ ८ ॥ वैताढ्ये दक्षिणश्रेण्यां, पुरी क्षेमंकराऽभवत् । गुणचूडनृपस्तत्र, राज्ञी मदनवल्लिका ॥ ९ ॥ सप्तदशसागरायुर्भुक्त्वाऽथ स्वर्गतश्च्युतः । देवः संवरजीवः स, राज्ञीकुक्षाववातरत् ॥ ५१० ॥ समये सुषुवे साऽथ, रणचूडाभिधं सुतम् । क्रमेण वर्द्धितः सोऽपि, जज्ञे विद्याविशारदः ॥ ११ ॥ अन्यदा रणचूडेन, व्रजता व्योम्नि कस्यचित् । वाणारस्यां युवत्येका, दृष्टा सद्रूपधारिणी ॥ १२ ॥ रागतो विद्यया हृत्वा, सा नीता निजसद्मनि । विषयासक्तचित्तेन, कृता प्रियतमा निजा ॥ १३ ॥ यतः—किं न कुर्य्यान्न किं दद्यात्, किं न गच्छेत् न किं वदेत् । क च न प्रविशेज्जन्तुर्बाधितो विषयेच्छया ॥ १४ ॥ तीव्राभिलाषतोऽत्यन्तं, सेवे विषयजं ( सिषेवे भोगजं ) सुखम् । कालेन कियता तस्य, देहत्रुटिरभूत्ततः ॥ १५ ॥ राजयक्ष्मादिरोगाश्च, तस्याङ्गे जज्ञिरे भृशम् । अतिसम्भोगतो यस्माद्रोगोत्पत्तिः प्रकीर्त्तिता ॥ १६ ॥ यतः—कम्पः स्वेदः श्रमो मूर्च्छा, भ्रमिर्ग्लानिर्बलक्षयः । राजयक्ष्मादिरोगाश्च, भवेयुर्मैथुनोत्थिताः ॥ १७ ॥ यतः—अत्यासन्ना विनाशाय, दूरस्था न फलप्रदाः । सेव्या मध्यमभावेन, राजवह्निगुरुस्त्रियः ॥ १८ ॥ अतो हि धीमतां प्रोक्ता, स्त्रीसेवासमता शुभा । वह्नी क्षयाय विज्ञेया, वदन्तीति विचक्षणाः ॥ १९ ॥ आर्त्तध्यानेन रोगार्त्तो, रणचूडो मृतस्ततः । विन्ध्याचलासन्नवने, सोऽभून्मत्तो मतङ्गजः ॥ ५२० ॥ यतः—अट्टेण तिरिक्खगई, रुद्दज्झाणेण पावए नरयं । धम्मेण देवलोओ, सिद्धिपुरी सुक्कझाणेणं ॥ २१ ॥ आर्त्तं रौद्रं तथा ध्यानं, तस्मात्त्याज्यं विवेकिना । ध्येयं धर्म्यं तथा शुक्लं, याऽन्ते मतिश्च सा गतिः ॥ २२ ॥ प्रचण्डशुण्डादण्डोग्रो, दुर्दान्तो दीर्घदन्तभृत् । दुस्सहो वनसत्त्वानां, दुर्निरीक्ष्यो महाबलः ॥ २३ ॥ क्रमेण वर्द्धमानोऽथ, विन्ध्याचल इवापरः । अत्युच्चः स गजो जात, ऐरावणसमः शुभः ॥ २४ ॥ युग्मम् ॥ रणचूडप्रिया पश्चाद्वैधव्येन प्रपीडिता ।

भर्तुर्वियोगविधुरा, सञ्जाताऽतीव दुःखिता ॥ २५ ॥ यतः–विभूतिस्त्यागशून्येव, सत्यशून्येव भारती । विद्या विनयशून्येव, न भाति स्त्री पतिं विना ॥ २६ ॥ मानो दर्पोऽप्यलङ्काराः, कुलपूजा च बन्धुषु । पुत्रे भृत्ये जने चाज्ञा, वैधव्येन प्रणश्यति ॥ २७ ॥ सा च दुःखार्दिता मृत्वा, विन्ध्याचलमहावने । उत्पन्ना करिणी तत्र, हस्ती यत्राऽस्ति तत्पतिः ॥ २८ ॥ तां दृष्ट्वा रणचूडेभस्तत्पृष्ठिं कामविह्वलः । नामुञ्चत्पूर्वमोहेन, मोहस्य गतिरीदृशी ॥ २९ ॥ यतः—अर्द्धाङ्गे गिरिजां बिभर्त्ति गिरिशो विष्णुर्वहत्यन्वहं, शस्त्रश्रेणिमथाक्षसूत्रवलयं धत्ते च पद्मासनः । पौलोमीचरणाहतिं च सहते धृष्टः सहस्रेक्षण–स्तन्मोहस्य विजृम्भितं निगदितं तिर्यग्जने का कथा ? ॥ ५३० ॥ स करी करिणीयुक्तश्चिक्रीड स्वेच्छया वने । रेवोत्तुङ्गतरङ्गैश्च, चकार जलखेलनम् ॥ ३१ ॥ अन्यदा तद्वने कश्चित्, मुनिर्ज्ञानी समागतः । मुनिं दृष्ट्वा गजः क्रोधाद्, दधावे तं प्रति द्रुतम् ॥ ३२ ॥ मुनिना स तपोलब्ध्या, स्तम्भितः कुञ्जरस्तदा । स शान्तो मुनिपादाब्जान्, ववन्दे हस्तिनीयुतः ॥ ३३ ॥ स पूर्व्वभववृत्तान्तैः, साधुना प्रतिबोधितः । सम्यक्त्वं च तदा भेजे, जातिस्मृत्या प्रियायुतः ॥ ३४ ॥ सचित्ततृणकाष्ठानि, पत्रपुष्पफलानि च । वर्जयामास नागेन्द्रो, भुङ्क्ते स्म प्रासुकानि च ॥ ३५ ॥ ईर्यासमितिसंयुक्तो, दयया सञ्चचार सः । शान्तात्मा च तपश्चक्रे, दुस्सहं पूर्वजन्मवत् ॥ ३६ ॥ तत्याज हस्तिनीसङ्गं, मुनिवाक्यप्रबोधतः । जातिस्मृत्यनुभावात्स, पुण्यमेवमपालयत् ॥ ३७ ॥ तद्वने श्रीयुगादीशप्रासादोऽभूत्सतोरणः । कृतो मलयदेव्या यो, जिनार्च्चार्थं विनोदकृत् ॥ ३८ ॥ स हस्ती हस्तिनीयुक्तो, जिनवन्दनहेतवे । नित्यं जिनालये याति, कालमेवं निनाय च ॥ ३९ ॥ अन्यदा तद्वने दैवाद्दावाग्निः समजायत । प्राक् कृतेषु स्थण्डिलेषु, दवभीतो ययौ गजः ॥ ५४० ॥ वनसत्त्वैः स्थण्डिलानि, पूरितानि तदा

भृशम् । पञ्चमस्थण्डिलस्यान्ते, प्रियायुक्तः स्थितो गजः ॥ ४१ ॥ मा यान्तु मद्भयत्रस्ता, अमी जीवा दवानले । दयया चिन्तयित्वेति, तस्थौ संवृत्य तत्र सः ॥ ४२ ॥ वातेन प्रेरिता तत्र, दवज्वाला समागता । वह्निना हस्तिनी दग्धा, स्थण्डिले कूपसंस्थिता ॥ ४३ ॥ हस्ती पानीयमानीय, मोहात्सिषेच हस्तिनीम् । कुर्व्वन् गमागमौ सोऽपि, पश्चाद्दग्धो दवाग्निना ॥ ४४ ॥ नमस्कारं स्मरन्तौ तौ, विधायानशनं तदा । धर्म्मध्यानपरौ भूत्वा, सौधर्म्मेऽभवतां सुरौ ॥ ४५ ॥ च्युत्वाऽथ स्वर्गतो राजन् !, जातस्त्वं पुरुषोत्तमः । जाता च हस्तिनीजीवः, कमलश्रीस्तव प्रिया ॥ ४६ ॥ विद्याधरभवे मोहात्परनारी हृता त्वया । प्राप्तस्त्वं कर्म्मणा तेन, तिर्यग्योनिं तया सह ॥ ४७ ॥ तपोदयादिकं पुण्यं, यत्कृतं पूर्वजन्मसु । तेन त्वं प्रेयसीयुक्तः, प्राप राज्यादिकं सुखम् ॥ ४८ ॥ पूर्व्वं जातिस्मृतित्वेन, जानाति प्राग्भवं नृपः । विशेषाद्गुरुवाक्येन, सर्व्वं सत्यममन्यत ॥ ४९ ॥ पुनः पुण्यफलं ज्ञातुं, विशेषात्पृष्टवान्नृपः । दानशीलतपोभावमध्ये कस्याधिकं फलम् ॥ ५५० ॥ गुरूरूचे चतुर्धापि, धर्मः संसेवितो नृप ! । नानाविधं फलं दत्ते, परं भावेन संयुतः ॥ ५१ ॥ यतः—दानं दारिद्र्यनाशाय, शीलं दुर्गतिनाशनम् । तपः कर्म्मविनाशाय, भावना भवनाशिनी ॥ ५२ ॥ दानं तपो देवपूजा, दाक्षिण्यं दक्षता दमः । शीलं विवेक इत्यादि, धर्माङ्गानि विदुर्बुधाः ॥ ५३ ॥ यथा पञ्चेन्द्रियः प्राणी, अङ्गोपाङ्गैर्विराजते । तथा जिनोक्तधर्मोऽयं, सर्व्वाङ्गैः शोभते भृशम् ॥ ५४ ॥ कन्दः कल्याणवल्ल्याः सकलसुखफलप्रापणे कल्पवृक्षो, दारिद्र्योद्दीप्तदावानलशमनघनो रोगनाशैकवैद्यः । श्रेयःश्रीवश्यमन्त्रो विगलितकलुषो भीमसंसारसिन्धो–स्तारे पोतायमानो जिनपतिगदितः सेवनीयोऽत्र धर्म्मः ॥ ५५ ॥ यथाऽर्ज्जितं पुरा पुण्यं, पुण्यसारेण धीमता । श्रुत्वोदाहरणं तस्याराध्यं पुण्यं सदा तथा ॥ ५६ ॥ तथाहि–

पुरं साकेतमित्यस्ति, श्रियां सङ्केतभूरिव । तत्र नाम्ना तथा धाम्नाऽप्यभूद्भानुप्रभो नृपः ॥ ५७ ॥ तत्राभवन्मितधनो, धनमित्राऽभिधो गृही । गुणैरप्यनुरूपाऽऽसीत्, धनश्रीस्तत्प्रिया वरा ॥ ५८ ॥ एकदा सा निशाशेषेऽनेकरत्नोत्कराद्भुतम् । हेमकुम्भं विलोक्यास्ये, प्रविशन्तमजागरीत् ॥ ५९ ॥ अथ सोत्थाय तं स्वप्नं, पत्युरग्रे न्यवेदयत् । सद्भाग्यस्ते सुतो भावीत्यभ्यनन्दत्स तां मुदा ॥ ६० ॥ क्रमात्पुत्रः समुत्पेदे, तस्या लक्षणलक्षितः । हृष्टस्तज्जन्मनि श्रेष्ठी, वर्द्धापनमचीकरत् ॥ ६१ ॥ अगण्यपुण्यतां तस्य, ज्ञात्वा स्वप्नानुसारतः । पुण्यसार इति श्रेष्ठी, सुतस्य विदधेऽभिधाम् ॥ ६२ ॥ पद्मात् पद्मान्तरं हंस, इव गच्छन्सरोवरे । करात्करान्तरं तत्र, स व्रजन्नभ्यवर्द्धत ॥ ६३ ॥ श्रेष्ठी ग्रासावियुक्तोऽभूत्तज्जन्मादिवसादपि । स्यादभङ्गुरभाग्यानां, योगे किं किं न वा शुभम् ? ॥ ६४ ॥ स जग्राहोचिते काले, कला योग्याः कलागुरोः । पुपोष रूपलावण्ये विशेषाद्यौवनोन्मुखः ॥ ६५ ॥ अथान्यस्येभ्यस्य सुतां, रूपादिगुणविश्रुताम् । धन्याभिधानां तां श्रेष्ठी, महर्ध्या पर्यणाययत् ॥ ६६ ॥ यतः—प्रियानुकूला कलहेन वर्जिता, प्रियंवदा निर्मलशीलशालिनी । स्वरूपसौन्दर्यविनिर्जिताप्सरा, भवेत्सुपुण्यस्य गृहे सुगेहिनी ॥ ६७ ॥ पुण्यसारोऽन्यदा रात्रौ, सुखसुप्तः स्ववेश्मनि । अहं त्वद्गृहमेष्यामीत्युक्तो देव्या श्रिया स्वयम् ॥ ६८ ॥ प्रातः समुत्थितो वेश्मचतुष्कोणेषु सोऽद्भुतान् । सौवर्णकलशान् वीक्ष्य, चेतस्येवमचिन्तयत् ॥ ६९ ॥ लक्ष्म्या यदुदितं रात्रौ, सत्यीचक्रे तयेति तत् । कदाप्यनर्थः स्यादेषां, गृहे खलगिरा नृपात् ॥ ५७० ॥ एवं विमृश्य स क्ष्मापपार्श्वे गत्वा ततोऽभ्यधात् । आनाययन्निजनरैः, राजा तान् विस्मितो हृदि ॥ ७१ ॥ श्रीगृहेऽस्थापयत्सर्वान्, द्वितीयदिवसेऽप्यथ । पुण्यसारः प्रगे दृष्ट्वा, हेमकुम्भांस्तथा गृहे ॥ ७२ ॥ गत्वा भूयोऽपि राज्ञोऽग्रेऽकथयत्तेन तानपि । तथैवानाय्य

भूभर्त्ता, भाण्डागारे न्यवेशयत् ॥ ७३ ॥ तृतीयेऽपि दिने वीक्ष्य, पुण्यसारस्तथैव तान् । गत्वाऽभ्यधान्नृपस्याग्रे, पुनः सोऽप्यतिविस्मितः ॥ ७४ ॥ तानप्यानाययद्यावत्तावन्मन्त्रीदमभ्यधात् । पूर्वानायितहैमाष्टकुम्भशुद्धिं विधापय ॥ ७५ ॥ पूर्वमेवाथ राज्ञापि, कारिते तद्विलोकने । श्रीगृहस्यान्तरे पुम्भिस्तदभावोऽभ्यधीयत ॥ ७६ ॥ सत्येन पुण्यसारोऽपि (सि), पुण्यसार ! त्वमत्र भोः ! । यस्याभिसारिकेव श्रीरेत्योकोऽभिसृता स्वयम् ॥ ७७ ॥ अन्यथा हेमकुम्भास्ते, मया लोभवशादिह । आनायिता अपि कथं, पुनस्त्वन्मन्दिरं श्रिताः ? ॥ ७८ ॥ राज्ञाऽतिविस्मितेनेति, प्रोच्य तस्य निजे पुरे । अभ्यर्थ्य सादरं श्रेष्ठिश्रेष्ठता तत्र निर्ममे ॥ ७९ ॥ सन्मान्य वस्त्रालङ्कारैः, स्वप्रधानजनैः समम् । नृपेण पुण्यसारस्तु, प्रहितः स्वगृहं ययौ ॥५८०॥ एवं तत्र पुरेऽनेकपौरलोकनिषेवितः । कमलां सफलां स्वस्य, दानादिनिरतो व्यधात् ॥ ८१ ॥ तत्रैव नगरेऽन्येद्युः, सुनन्दः श्रुतकेवली । आगत्य समवासार्षीत्, सूरिर्भूरिविनेययुक् ॥ ८२ ॥ तं नन्तुमगमद्भूपः, पौरलोकसमन्वितः । पुण्यसारोऽपि च पितृमातृपत्न्यादिभिर्युतः ॥ ८३ ॥ अवन्द्यास्तत्पदद्वन्द्वं, नत्वा सर्व्वेऽप्युपाविशन् । उवाच सोऽपि सद्धर्म्मवाचं वाचंयमाग्रणीः ॥ ८४ ॥ यतः–सर्व्वज्ञो हृदि वाचि तद्गुणगणः काये च देशव्रतं, धर्म्मे तत्परता परः परिणतौ बोधो बुधश्लाघ्यता । प्रीतिः साधुषु बन्धुता बुधजने जैने रतिः शासने, यस्यैवं जनरञ्जको गुणगणः स श्रावकः पुण्यभाक् ॥ ८५ ॥ प्रणम्य धनमित्रस्तं, पप्रच्छेदमतुच्छधीः । प्रभो ! मत्सूनुना किं किं, सुकृतं प्राग्भवे कृतम् ? ॥ ८६ ॥ येनास्य गृहदासीव, लक्ष्मीर्गृहमधिश्रिता । सौभाग्यं वपुरारोग्यं, राजादिजनमान्यता ॥ ८७ ॥ युग्मम् ॥ सूरिः प्राह पुरेऽत्रैव, पुराऽसाविभ्यसूरभूत् । धनदाह्वः प्रकृत्यैव, कृतज्ञस्त्यागसुन्दरः ॥ ८८ ॥ संयोगे सद्गुरोर्देशविरतिं प्रत्यपद्यत । जगृहे नियमं पञ्चोदुम्बरादिकवस्तुनः ॥ ८९ ॥ सप्तक्षेत्र्यां

वित्तबीजमवपन्निजकं सदा । प्रव्रज्यामपि शिश्राय, सद्गुरोः पुरतोऽन्यदा ॥५९०॥ सिद्धान्तपाठविनयतपःक्षान्त्यादिसद्गुणैः । विभूषितश्चिरं सम्यक्, स श्रामण्यमपालयत् ॥ ९१ ॥ प्रपद्यानशनं प्रान्ते, विपद्य च समाधिना । कल्पे तृतीये संजज्ञे, शक्रसामानिकः सुरः ॥ ९२ ॥ तत्राद्भुतान् दिव्यभोगान्, भुक्त्वा च्युत्वाऽऽयुषः क्षये । तत्पुण्यशेषादत्रैव, त्वत्पुत्रः समपद्यत ॥ ९३ ॥ जातिस्मृत्या स्वप्राग्भवौ, पुण्यसारोऽपि तौ मुदा । ज्ञात्वा सूरिं प्रणम्यैवमवदद्विहिताञ्जलिः ॥ ९४ ॥ जातिस्मृत्या मयाप्येतत्, सर्व्वं ज्ञातं मुनीश्वर ! । तत्सम्प्रत्यपि तेष्वेव, यतिष्येऽहं गुणेष्वपि ॥ ९५ ॥ इत्युक्त्वा देशविरतिं, स प्रपेदे तदा गुरोः । राज्ञा पित्रा तथा मात्रा, पत्न्यापि च समन्वितः ॥ ९६ ॥ गुरुं नत्वा ययुः स्वस्वगृहे श्रेष्ठिभवोऽथ सः । देवपूजादिनिरतः, श्राद्धधर्म्ममपालयत् ॥ ९७ ॥ निवेश्य स्वपदेऽन्येद्युर्धन्याकुक्षिभवं सुतम् । पित्रादिभिः समं दीक्षां, सुनन्दगुरुतोऽग्रहीत् ॥९८॥ व्रतं सुतीव्रं मुनिपुण्यसार–श्चिरं प्रपाल्यानशनेन मृत्वा । देवत्वमाप्तोऽथ सुमानुषत्वं, क्रमेण मोक्षस्य सुखान्यवाप ॥९९॥

इति श्रीपुण्यसारकथा समाप्ता ।

येनानीतः कुलममलिनं लम्भितश्चारु रूपं, श्लाघ्यं जन्म श्रियमुदयिनीं बुद्धिमाचारशुद्धाम् । पुण्यान्पुत्रानतिशयवतीं प्रेत्य च स्वःसमृद्धिं, पुण्यं नो चेत्तमु(दु)पकुरुते यः कुतोऽसौ कृतज्ञः ? ॥ ६०० ॥ श्रुत्वैवं पुण्यमाहात्म्यं, राजा श्रीपुरुषोत्तमः । प्रियाद्वितयसंयुक्तः, प्रपेदे द्वादशव्रतीम् ॥ १ ॥ पुनरूचे गुरुर्भूप !, महामोहे पतन्ति ये । तैः संसारमहाकूपान्निर्गन्तुं नैव शक्यते ॥ २ ॥ एषा भार्या सुता गेहं, धनं ममेति मोहतः । एकेन्द्रियत्वमाप्नोति, धनप्रियवणिग् यथा ॥ ३ ॥

कुशार्त्तविषये शौर्यपुरे धनप्रियो वणिक् । धनश्रीस्तत्प्रिया देवान्, सन्तानार्थमपूजयत् ॥ ४ ॥ जम्बूदेवेन तुष्टेन, सुतो-

ऽभूत्सर्प्परूपभृत् । तदा धनप्रियो भूयो, देवमाराध्य पृष्टवान् ॥५॥ सुतः किं सर्प्परूपोऽस्या, देवोऽवक् शृणु कारणम् । प्राग्भवेऽपहृतं रत्नं, स्वसपत्न्या धनश्रिया ॥ ६ ॥ विंशतिप्रहरान्तेऽथ, तस्या रत्नं तयाऽर्प्पितम् । मृत्वा काले सपत्नी सा, सञ्जाता व्यन्तरी सुरी ॥ ७ ॥ रत्नापहारवैरेण, सुतः सर्प्पः कृतस्तया । अतो विंशतिवर्षान्ते, नरो भावी सुतस्तव ॥ ८ ॥ तच्छ्रुत्वा दम्पती तौ तं, नागं क्षिप्त्वा करण्डके ! शर्करादुग्धपानाद्यैः, पालयामासतुर्भृशम् ॥ ९ ॥ जम्बूदत्तेति नामाथ, पित्रा तस्य विनिर्ममे । सर्प्पो विंशतिवर्षान्ते, नरोऽभूद्देवयोगतः ॥ ६१० ॥ नागश्रीनामतः कन्यां, स पित्रा परिणायितः । चत्वारस्तनया जाता, जम्बूदत्तस्य च क्रमात् ॥ ११ ॥ सार्द्धं महेभ्यपुत्रीभिश्चत्वारः परिणायिताः । वृद्धवत्पुत्रपौत्राद्यैर्ववृधे स धनप्रियः ॥ १२ ॥ धनप्रियं विना सर्व्वे, जिनधर्म्मेण भाविताः । प्रान्ते प्रव्रज्य जम्बूः स, सभार्यः सिद्धिभागभूत् ॥ १३ ॥ अन्ये सर्व्वेऽपि सत्कृत्यं, कृत्वा स्वर्ग्गं गताः क्रमात् । धनस्तु तद्वियोगार्त्तः, पतितोऽथार्त्तिसागरे ॥ १४ ॥ महामोहविमूढात्मा, चित्तसन्तापकारकः । अजानन् धर्ममाहात्म्यं, स शोकं हृदये दधौ ॥ १५ ॥ मम पुत्राश्च मे लक्ष्मीर्गृहिणी मे गृहं मम । इत्यार्त्तवशतो मृत्वा, गतोऽथैकेन्द्रियेषु सः ॥ १६ ॥ ततोऽनन्तभवावर्त्ते, मोहाद्धनप्रियो वणिक् । पतितस्तेन नो कार्यो, महामोहो मनीषिभिः ॥ १७ ॥ श्रुत्वैवं पुरुषोत्तमो नरपतिः संवेगरङ्गं दध-न्नत्वा सूरिवरं जगाम सदने राज्यञ्च शिक्षान्वितम् । पुत्राय प्रददौ च मन्त्रिनिवहं चापृच्छ्य सन्तुष्टधीः, चारित्रग्रहणोद्यतः स्वयमभूत्संसारविच्छित्तये ॥ १८ ॥ चक्रे जिनेषु ध्वजपूजनाद्यं, गुरुश्च सङ्घं समपूजयच्च । हीनेषु दीनेषु ददौ धनं स, सन्तोषयामास समस्तलोकान् ॥ १९ ॥ भावारिषड्वर्गजयाय राजा, ययौ गुरोः पार्श्वमिभाधिरूढः । व्रतश्च शिक्षासहितं गृहीत्वा, चकार तीव्राणि तपांसि भावात् ॥ ६२० ॥ श्री-

षेणहरिषेणौ तौ, श्रीपुरुषोत्तमाङ्गजौ। पैतृकीं पदवीं प्राप्य, पालयामासतुश्चिरम् ॥ २१ ॥ संपाल्य वर्षलक्षायू, राजर्षिः पुरुषोत्तमः। संप्राप्तकेवलः प्राप, शान्तिकुन्थ्वन्तरे शिवम् ॥ २२ ॥ वीरो वदति हे सभ्या!, यथा श्रीपुरुषोत्तमः। महर्द्धि तपसा प्राप, लभन्तेऽन्ये तथा सुखम् ॥ २३ ॥ यतः—यद्दूरं यद्दुराराध्यं, यच्च दूरे व्यवस्थितम्। तत्सर्व्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ २४ ॥ काव्यम्—श्रीवीरोऽथ दृढप्रहारिमुनिपः स्वीयप्रतिज्ञादृढः, श्लाघ्यो बाहुबलिर्बलोऽप्यविचलः सन्नन्दिषेणो व्रती। आनन्दः सदुपासको व्रतरतिः श्रीसुन्दरीत्यादिकाः, कर्म्मोन्मूलनकोविदेन तपसा देवासुरैर्वन्दिताः ॥ २५ ॥ कर्म्मारण्यदवानलोऽभिलषिते सत्कामधेनूपमं, दुष्टारिष्टविनाशकं गुणकरं सौभाग्यसंवर्द्धनम्। श्रीमन्मुक्तिनरामरेशपदवीसम्पादने प्रत्यलं, शान्तं कान्तमसङ्गतावरतपः शक्त्या जिनेन्द्रोदितम् ॥ २६ ॥ धन्याः केऽपि मनोभवैकभवने तारेऽपि तारुण्यके, त्यक्त्वा मित्रकलत्रपुत्रविभवानुग्रं तपन्ते तपः। माङ्गल्यं त्रिदशार्च्चितं गदहरं कर्म्मद्रुमाशिस्तपो, भव्यैः सेव्यमनिन्दितं जितमदैर्मुक्त्यै हितार्थस्पृहैः ॥ २७ ॥ अहो भव्यजना! एवं, प्रोक्ता पुण्यद्रुमे मया। तृतीयैषा तपःशाखा, सेवनीया शुभङ्करी ॥ ६२८ ॥

इति श्रीवीरदेशनायां श्रीधर्मकल्पद्रुमे चतुश्शाखिके तृतीयतपःशाखायां श्रीपुरुषोत्तमनृपाख्याने षष्ठः पल्लवः, तृतीया तपःशाखा च समाप्ता ॥ ६ ॥

धर्म-
द्रुम
॥११॥

## । अथ सप्तमः पल्लवः ।

धर्म्मो मङ्गलमुत्तमं नरसुरश्रीभुक्तिमुक्तिप्रदो, धर्म्मः स्निह्यति बन्धुवद्दिशति वा कल्पद्रुवद्वाञ्छितम् । धर्म्मः सद्गुणसङ्क्रमे गुरुरिव स्वामीव राज्यप्रदो, धर्म्मः पाति पितेव वत्सलतया मातेव पुष्णाति च ॥ १ ॥ यस्यैकत्र तटे नवापि निधयः कल्पद्रुमाः कोणके, स्वर्ग्गक्षोणिरसातलेन्द्रपदवीश्रीश्च प्रदेशे क्वचित् । अंशे कापि वसन्ति दैवतवराः सार्द्धं महासिद्धिभिः, धर्म्मं प्रौढनिधिं बुधाः कुरुत तं किं वः प्रयासैः परैः ? ॥ २ ॥

यतः ग्रन्थान्तरे—चक्र १ चर्म्म २ छत्र ३ दण्डाः ४, कृपाणः ५ काकिणि ६ र्निधिः ७ ।
गजा ८ ऽश्व ९ गृह १० सेनानी ११ पुरोधः १२ स्थपति १३ स्त्रियः १४ ॥ ३ ॥

द्वादशयोजनायामा, नवयोजनविस्तृताः । मञ्जूषाकृतयः प्रादुर्बभूवुर्निधयो नव ॥ ४ ॥ नैसर्प्पः १ पाण्डुकश्चैव २, पिङ्गलः ३ सर्वरत्नकः ४ । महापद्मः ५ काल ६ महाकालौ ७ माणव ८ संख्यकौ ९ ॥ ५ ॥ स्कन्धावारपुरादीनां, निवेशाः प्रथमे निधौ १ । सर्वेषां धान्यबीजानामुत्पत्तिश्च द्वितीयके २ ॥ ६ ॥ नराणां महिलानां च, गजानां वाजिनां तथा । आरोहणविधिः सर्वो, निधौ पिङ्गलके ३ भवेत् ॥ ७ ॥ चतुर्दशापि रत्नान्युत्पद्यन्ते सर्वरत्नके ४ । महापद्मे च वस्त्राणां, रङ्गादीनां च सम्भवः ५ ॥ ८ ॥ काले कालत्रयज्ञानं ६, महाकाले च कीर्तितः । स्वर्णरूप्यलोहमणिप्रवालानाञ्च सम्भवः ७ ॥ ॥ ९ ॥ युद्धनीतिः समग्रापि, सर्व्वप्रहरणानि च । तनुत्राणादि योधानां, योग्यं माणवके भवेत् ८ ॥ १० ॥

तूर्याङ्गाणि समस्तानि, वाद्यश्चापि चतुर्विधम् । निधौ सञ्जायते संख्ये, नाट्यनाटकयोर्विधिः ९ ॥ ११ ॥ तेषु पल्योपमायुष्का, वसन्ति खलु देवताः । निधानसमनामानः, समये परिकीर्तिताः ॥ १२ ॥

## चतुर्दश रत्नानि नव निधानानि समाप्तानि ।

वैराग्यद्रुममञ्जरी कुचरितग्रन्थिच्छिदाकर्त्तरी, ज्ञानेन्दुद्युतिशर्वरी भवचयाम्भोजप्रजाधूमरी । श्रेयःपल्लववल्लरी शुभदिनारम्भध्वनेर्झल्लरी, चित्तान्तःप्रमुदित्वरी भवरुजां स्याद्भावना जित्वरी ॥ १३ ॥ अथोचे श्रीसुधर्म्माह्वः, श्रीमद्वीरजिनं प्रति । भगवंस्त्वत्प्रसादेन, श्रुतं शाखात्रयं स्फुटम् ॥ १४ ॥ दाने शीले च तपसि, धर्म्मकार्येऽपरेऽपि च । सहायो यो मतस्तस्य, भावस्य वद किं फलम् ? ॥ १५ ॥ इति प्रश्ने कृते वीरो, घनगम्भीरया गिरा । प्रोचे शृणु सुधर्म ! त्वं, तुर्यशाखाफलं महत् ॥ १६ ॥ कृषौ सुवातः किल वृद्धिहेतुः, शिशौ स्वमाता सुकृते कृपा च । राज्ये सुनीतिः प्रणये प्रतीति–स्तथा हि धर्म्मे शुभभावना च ॥ १७ ॥ सुस्वादतायै लवणं रसानां, यथाऽखिलानामपि दृष्टमिष्टम् । धर्मत्रयस्यापि विशेषसिध्यै, तथैव भाव्यो भुवि भावधर्म्मः ॥ १८ ॥ धनं दत्तं वित्तं जिनवचनमभ्यस्तमखिलं, क्रियाकाण्डं चण्डं रचितमवनौ सुप्तमसकृत् । तपस्तीव्रं तप्तं चरणमपि चीर्णं चिरतरं, न चेच्चित्ते भावस्तुषवपनवत्सर्व्वमफलम् ॥ १९ ॥ अज्ञानध्वान्तसन्धाने, ध्याने सिद्धिपुराध्वनि । अध्वगस्यात्मनो भाति, भावना रत्नदीपिका ॥ २० ॥ सद्दानशीलतपसां, भवयुद्धाय धावताम् । अग्रेसरी भवत्येका, भावनैव महाभटैः(टा) ॥ २१ ॥ चन्द्रोदयनरेन्द्रस्य, भावोपरि कथां शृणु । यां श्रुत्वा जायते शुद्धं, मानसं शारदेन्दुवत् ॥ २२ ॥ तथाहि जम्बूद्वीपेऽस्ति, क्षेत्रं भरतसंज्ञकम् । पुष्पभद्रपुरं तत्र, भद्रसन्ततिसंयुतम् ॥ २३ ॥

पुष्पचूलो नृपस्तत्राभवज्जातिसुपुष्पवत् । येनेदं सकलं विश्वं, यशोगन्धेन वासितम् ॥ २४ ॥ पुष्पमाला प्रिया तस्य, प्रेमाढ्या च प्रमोदिनी । सुभगा शुद्धशीला च, पतिचित्तानुवर्त्तिनी ॥ २५ ॥ तया समं स हर्षेण, रममाणो महीपतिः । न जानाति वयो गच्छत्, वेश्यायान्तीं च नो जराम् ॥ २६ ॥ तथा च–आदौ चित्ते ततः काये, सतां सञ्जायते जरा । असतां तु पुनः काये, चित्ते नैव कदाचन ॥ २७ ॥ पूर्व्वे वयसि यः शान्तः, स शान्त इति मे मतिः । धातुषु क्षीयमाणेषु, शमः कस्य न जायते ? ॥ २८ ॥ मोहेनैतन्न जानाति, स राजा कामलोलुपः । बुभोज विविधान् भोगान्, परं तस्य न सन्ततिः ॥ २९ ॥ एकदा तस्य भूपस्य, पत्नी सा पुष्पमालिका । गवाक्षस्था निरैक्षिष्ट, सौधाधो वरवापिकाम् ॥ ३० ॥ ददर्श तत्र हंसीश्च, लालयन्तीं निजान् शिशून् । स्वेच्छया ददतीं चूर्णिं, स्पृशन्तीं मूर्ध्नि बालकान् ॥ ३१ ॥ तां प्रेक्ष्य हृदि सा दध्यौ, हा मे जन्म गतं वृथा । न सन्तानसुखं प्राप्तं, जङ्गमा वन्ध्यवल्ल्यहम् ॥ ३२ ॥ सुतं विना न भाति स्त्री, यथा चन्द्रं विना निशा । सर्व्वत्र लभते मानं, विधवापि सुतान्विता ॥ ३३ ॥ विधवापि तथा नारी, राजते पुत्रदीपिता । दीपोत्सवेन कलिता, अमावास्यापि सिद्धिदा ॥ ३४ ॥ गन्धहीनं यथा पुष्पं, तटाकमिव निर्जलम् । कलेवरमिवाजीवं, धिग् नारीजन्म निःसुतम् ॥ ३५ ॥ गाथा–जम्मु निरत्थउ तीए, जीए महिलाइ मम्मणुल्लावो । धूलीधूसरदेहो, पुत्तो न रमेइ उच्छङ्गे ॥ ३६ ॥ उपालम्भान् ददौ साऽथ, दैवं प्रतीत्यनेकधा । कृतस्त्वयि विनाशः किं ?, येनाहं विफलीकृता ॥ ३७ ॥ सूनुशून्यं कथं दत्तं, राज्यं प्राज्यमिदं विधे ! । किञ्चिद्दुःखं हि जीवानामकृत्वा त्वं न तृप्यसि ॥ ३८ ॥ मया पूर्व्वभवे किं वा, साधूपकरणं हृतम् ? । पशुपक्षिनराणां वा, बालनाशः कृतः किमु ? ॥ ३९ ॥ आत्मानमिति निन्दन्ती, शोचन्ती निजकर्म्म च ।

मुञ्चन्ती चाश्रुधारां सा, विललाप घनं तदा ॥ ४० ॥ तस्मिन्नेव क्षणे राजा, गृहमध्ये समागतः। श्यामानना च शोचन्ती, दृष्टा प्राणप्रिया तदा ॥ ४१ ॥ राजाप्यथ धरन्दुःखं, समाह पत्नीं प्रति स्फुटम् । कथं रोदिषि हे देवि !, मम कष्टं महद्भवेत् ॥ ४२ ॥ राज्ञी प्रोचे शृणु स्वामिन्निर्भाग्याऽहं हि निर्मिता । पूर्वपापप्रभावेण, कर्म्महीना कलङ्किता ॥ ४३ ॥ वृथा मे राज्यसौख्यानि, वृथा मे जन्म जीवितम् । यौवनं भोगसंयुक्तं, निष्फलं दिनदीपवत् ॥ ४४ ॥ इति श्रुत्वा नृपोऽवादीत्, खेदः किं शुभलोचने ! । व्यक्तं ब्रूहि ममाग्रे त्वं, कारणं कमलानने ! ॥ ४५ ॥ तदा प्राणप्रिया प्रोचे, शृणु स्वामिन् ! यथातथम् । कष्टं मेऽस्त्यनपत्यत्वं, यन्मां व्यथति शल्यवत् ॥ ४६ ॥ ते हि नारीनरा धन्या, यदुत्सङ्गे स्तनन्धयाः । रुदन्ति च रमन्ते वा, जल्पन्त्यव्यक्तभाषणैः ॥ ४७ ॥ घनं किं कथ्यते स्वामिन् !, विना सन्तानमद्य मे । स्फारहारादिशृङ्गारोऽप्यसारः स्वप्नसन्निभः ॥ ४८ ॥ तच्छ्रुत्वा नृपतिश्चित्ते, ततोऽधिकमचिन्तयत् । सत्यं वक्ति प्रिया ह्येषा, येन मे नास्ति संततिः ॥ ४९ ॥ दृश्यते कुलविच्छेदः, सुतहीनस्य मेऽधुना । किङ्करोमि क्व गच्छामि, किं स्मरामि समीहितम् ? ॥ ५० ॥ मम दुष्टेन दैवेन, न्यूनमन्यत्कृतं न किम् ? । एकं सुतसुखं मह्यं, किं न दत्तं दुरात्मना ? ॥ ५१ ॥ दोषं दत्त्वेति दैवस्य, पुनर्भूपो व्यचिन्तयत् । अहो मे प्राक्तनं पुण्यं, हीनं नूनं प्रवर्त्तते ॥ ५२ ॥ भवेऽस्मिन्नपि तत्पुण्यं, भावनासहितं मया । प्रारभ्यते विशेषेण, येन सिध्यति वाञ्छितम् ॥ ५३ ॥ ततो भूपोऽवदत्पत्नीं, खेदं मा कुरु मानसे । उपायं तं करिष्यामि, येन भावी सुतोत्तमः ॥ ५४ ॥ साध्यते प्रथमं पुण्यं, पुण्यतः किङ्कराः सुराः । सुराः समीहितं दद्युः, साधितास्तपसा भृशम् ॥५५॥ यतः—निम्नेन तोयं हरितेन गावः, शान्तेन बाला विनयेन

सन्तः । अर्थेन चान्ये तपसा च देवाः, साध्या हि लोकाश्च हितप्रियेण ॥ ५६ ॥ भेदा धर्मस्य चत्वारः, प्रोक्ता ये श्रीजिनेश्वरैः । तन्मध्ये भावतः सेव्यं, तपो वाञ्छितसिद्धये ॥ ५७ ॥ तपोमाहात्म्यमेवं हि, ज्ञात्वा तत्साध्यतां प्रिये ! । सन्तोषं भज चित्ते च, हर्षं धेहि शुचं त्यज ॥ ५८ ॥ इतश्च समये तत्र, चारणर्षिः समागतः । वन्दापनाय भूपस्य, धर्म्मव्याख्याकृतेऽपि च ॥ ५९ ॥ नृपेणोत्तमसंस्थाने, निवेश्य मुनिपुङ्गवः । ववन्दे परया भक्त्या, तया राज्ञ्याऽपि भावतः ॥ ६० ॥ धर्म्माशिषं मुनिर्दत्त्वा, प्रारेभे धर्म्मदेशनाम् । अहो असारे संसारे, सारं सुकृतसेवनम् ॥ ६१ ॥ यतः—सर्प्पो हारलता भवत्यसिलता सत्पुष्पमालायते, सम्पद्येत रसायनं विषमपि प्रीतिं विधत्ते रिपुः । देवा यान्ति वशं प्रसन्नमनसः किं वा बहु ब्रूमहे, धर्मो यस्य नभोऽपि तस्य सततं रत्नैः परं वर्षति ॥ ६२ ॥ श्रुत्वा सद्देशनां प्रान्ते, मुनिं नत्वा नृपो जगौ । भगवन् ! ब्रूहि तत्सम्यग्, भवेद्येन सुतो मम ॥ ६३ ॥ मुनिरूचेऽन्यसावद्यं, वयं ब्रूमो न किञ्चन । कल्पवत्कामदं नित्यं, परं साधय सत्तपः ॥ ६४ ॥ किं कुर्व्वेऽहं तपश्चैवं, राज्ञा पृष्टेऽवदद्गुरुः । पुत्रेच्छा यदि ते तर्हि, कुरु चान्द्रायणं तपः ॥ ६५ ॥ नृपोऽवादीत्कृपां कृत्वा, तत्तपो विधिपूर्वकम् । प्रभो ! कथय येनाहं, साधयामि प्रियायुतः ॥ ६६ ॥ गुरुर्जगाद फाल्गुन्यां, प्रारम्भः प्राग्विधीयते । वैशाखीपूर्णिमायां तु, पूर्णं भवति तत्तपः ॥ ६७ ॥ फाल्गुनीपूर्णिमायां प्रागुपवासो विधीयते । चतुर्विधाहारमुक्तस्ततश्च प्रतिपद्दिने ॥ ६८ ॥ आहारे कवला ग्राह्याः, पञ्चदश सुमानतः । द्वितीयायां तिथौ ग्राह्याः, कवलाश्च चतुर्दश ॥ ६९ ॥ एवं तिथौ तिथौ प्रोक्ता, कवलैकैकहीनता । अमावास्यादिने ग्रास एक एव च गृह्यते ॥ ७० ॥ ततः शुक्लप्रतिपदि, ग्राह्यं च कवलद्वयम् । तृतीयादिष्विति ग्राह्या, ग्रासा एकैकवृद्धितः ॥ ७१ ॥ चतुर्दश्यां पञ्चदश, भवन्ति कवला इति । चैत्र्यां तु पूर्णिमायां स्याच्च-

तुर्धाहारवर्जनम् ॥ ७२ ॥ प्रतिपद्यपि कर्त्तव्य, उपवासस्तथैव च । तत्पारणे द्वितीयायां, कार्यमेकाशनं तपः ॥ ७३ ॥ ततश्चै-
कान्तराः कार्या, उपवासास्त्रयोदश । चतुर्दश्यां च वैशाख्यां, कार्यं षष्ठतपः पुनः ॥ ७४ ॥ एकाशनं पारणके, ह्येवं चान्द्रायणं
तपः । सम्यक्त्वशीलयुक्तेन, कार्यमेतत्तपो महत् ॥ ७५ ॥ कार्यमावश्यकं तत्र, विशेषाद्देवपूजनम् । कथा पुण्यस्य कर्त्तव्या,
कर्तव्या च कृपाऽङ्गिषु ॥ ७६ ॥ तपउद्यापनं पश्चात्, कर्त्तव्यमतिविस्तरात् । कार्यो वृक्षः सुवर्णस्य, तस्य मूलं च रूप्यजम्
॥ ७७ ॥ पत्राणि च प्रवालस्य, मणिसत्कफलानि च । कार्यं रूप्यमयं चन्द्ररूपं वृक्षस्य चोपरि ॥ ७८ ॥ चन्द्रप्रभजिनेन्द्राग्रे,
ढौकनीयो महातरुः । चन्द्रप्रभजिनध्यानं, कार्यं यावत्तपोविधि ॥ ७९ ॥ सप्तक्षेत्रेषु सद्वित्तं, वपनीयं स्वशक्तितः । श्रीसाधर्मिक-
वात्सल्यं, कार्यं सङ्घार्चनान्वितम् ॥ ८० ॥ इत्थं कृते महाराज !, तव सेत्स्यति वाञ्छितम् । भविष्यति सुतो भव्यो, निर्म्मलं
कुरु तत्तपः ॥ ८१ ॥ इति श्रुत्वा प्रजाधीशो, हर्षितः प्रियया युतः । आरेभे सुमुहूर्त्ते च, गुरूक्तविधिना तपः ॥ ८२ ॥ जाते
तपसि सम्पूर्णे, क्षमायुक्तः क्षमापतिः । उद्यापनं ततश्चक्रे, सम्पूर्णं विधिसंयुतम् ॥ ८३ ॥ सत्साधर्मिकवात्सल्यं, सङ्घपूजान्वितं
कृतम् । दीनोद्धारादिकं चक्रे, चक्रे मारिनिवारणम् ॥ ८४ ॥ सन्तोष्य सर्वलोकांश्च, पश्चात् पारणकं कृतम् । जिनालये विशे-
पेण, तद्दिने चोत्सवः कृतः ॥ ८५ ॥ सन्ध्याकाले दिने तस्मिन्पूजां कृत्वा जिनाग्रतः । कायोत्सर्गेस्थितौ तौ द्वौ, जिनध्यान-
परायणौ ॥ ८६ ॥ लयलीनोऽभवद्यावन्नृपो राज्ञीसमन्वितः । तावदाकाशमार्गेणागाद् यक्षो यक्षिणीयुतः ॥ ८७ ॥ युग्मम् ।
स च कीदृशः ? । श्यामस्त्रिनेत्रो द्विभुजाभिरामः, सुहंसयानो विजयाख्ययक्षः । चन्द्रं दधद्दक्षिणपाणिपद्मे, वामे तथा मुद्गर-
मद्भुतं च ॥ ८८ ॥ ज्वालादेवी पिशाङ्गा मृदुललितचतुर्दोर्भिराभासमाना, भक्ता चन्द्रप्रभस्य त्वरिततरतरा हस्तियानाधिरूढा ।

बिभ्राणा पाणियुग्मे निशिततममसिं दक्षिणे मुद्गरञ्च, स्फूर्जत्पर्शुञ्च वामे फलकमपि करे प्रीतये साऽस्तु देवी ॥ ८९ ॥ प्रत्यक्षीभूय यक्षोऽसौ, यक्षिणीसहितस्तदा। उवाच वचनं चारु, चातुर्यगुणगर्भितम् ॥ ९० ॥ अहो नरेन्द्र ! जानीहि, मां चन्द्रप्रभसेवकम् । तव पुण्येन तुष्टोऽहं, वरं याचस्व वाञ्छितम् ॥ ९१ ॥ युवयोस्तपसाऽऽकृष्टो, रञ्जितो जिनभक्तितः । अत्राहं विजयो यक्ष, आगतो यक्षिणीयुतः ॥ ९२ ॥ इत्थं श्रुत्वा च नत्वा तौ, राजोचे विनयान्वितः । देहि देव ! सुतं भव्यमन्यैः सम्पूर्णमेव मे ॥ ९३ ॥ भूयात्सुपुत्र इत्युक्त्वा, कृता वृष्टिः सुरेण च। स्वर्णषोडशकोटीनां, मणिकोटित्रयस्य च ॥ ९४ ॥ इयद्दत्वा नरेशाय, देवो देवीयुतो गतः । ध्यानं सम्पूर्य भूपोऽपि, प्रियायुक्तो मुदं दधौ ॥ ९५ ॥ एतस्मिन् समये कोऽपि, देव एको महर्द्धिकः । सम्पाल्य स्वायुरीशानस्वर्गाच्च्यवनमाप्तवान् ॥ ९६ ॥ पुष्पभद्रपुरे तस्मिन्, पुष्पचूलनरेशितुः । भार्यायाः पुष्पमालायाः, सोऽथ कुक्षाववातरत् ॥ ९७ ॥ सायं राज्ञी प्रतिक्रम्य, स्मृत्वा पञ्चनमस्कृतिम् । सुप्ता सुखेन शय्यायां, स्वप्नमेवं तदैक्षत ॥ ९८ ॥ ईशानतः सुरः कोऽपि, भास्वद्रूपो महर्द्धिकः । आगत्य मद्गृहे तस्थौ, गीर्वाणगुणपूरितः ॥ ९९ ॥ पुनर्जानाति सा चन्द्र, आश्विनपूर्णिमानिशि । सहसागत्य मत्कुक्षौ, प्रविवेश मुखाध्वना ॥ १०० ॥ जजागाराथ हृष्टा सा, संवीक्ष्य स्वप्नमीदृशम् । शय्यां विमुच्य गत्वाऽथ, नृपाग्रे तं न्यवेदयत् ॥ १ ॥ राजोचे स्वप्नमाहात्म्यात्, कश्चित्स्वर्गाच्च्युतः सुरः । तव भावी सुतः प्रौढः, फलितो मे मनोरथः ॥ २ ॥ श्रुत्वेति हर्षिता राज्ञी, पुण्यकृत्यं चकार सा । रराज बिभ्रती गर्भं, रत्नं रत्नखनिर्यथा ॥ ३ ॥ यथा च वर्द्धते गर्भ, ऋद्धिवृद्धिस्तथा गृहे । यद्यत्प्रार्थयते राज्ञी, तत्तद्भूपेन पूर्यते ॥ ४ ॥ प्राप्ते च सप्तमे मासे, महागर्भानुभावतः । सर्वाङ्गसुन्दरा दीप्ता, दधौ राज्ञीति दोहदम् ॥ ५ ॥ एवं जानाति

चित्ते स्वे, चन्द्रं पीत्वा ततः परम् । वैताढ्ये खेचरान् सर्वान्, साधयामि समाधिना ॥ ६ ॥ ईदृशे दोहदे जाते, दुष्पूरे बलिनोऽपि हि । तस्यासिद्धौ तदा राज्ञी, दुर्बलाभूद्दिने दिने ॥ ७ ॥ दुस्साध्यं दोहदं मत्वा, नृपः पप्रच्छ मन्त्रिणं । क्षीणदेहाऽभवद्राज्ञी, कोऽत्रोपायो विधीयते ? ॥ ८ ॥ विमृश्य सचिवः किञ्चित्, प्राह भूपं प्रति स्फुटम् । स्वामिन् ! बुद्धिप्रयोगेण, पूर्यतेऽत्रैष दोहदः ॥ ९ ॥ गृहजालान्तराच्चन्द्रे, भूमिस्थजलभाजने । प्रतिबिम्बितेऽथ राज्याश्चन्द्रं पिबेति कथ्यते ॥ ११० ॥ सान्धकारे ततो यावच्चन्द्रभ्रान्त्या पिबेज्जलम् । तावदाच्छाद्यते पुंसा, गृहच्छिद्रं शनैः शनैः ॥ ११ ॥ चन्द्रः पीत इति ज्ञाते, राज्ञ्या सेत्स्यति दोहदः । विद्याधरास्तु दुस्साध्या, नृणां वैताढ्यसंस्थिताः ॥ १२ ॥ तथाप्ययमुपायोऽस्ति, कश्चिदत्रेन्द्रजालिकः । आकार्यतेऽथ तेनैव कार्यते चेति नाटकम् ॥ १३ ॥ वैताढ्यं खेचरांश्चापि, विद्याधरपुराण्यपि । तदेन्द्रजालिकः सर्व्वं, रचयिष्यति विद्यया ॥ १४ ॥ युष्माकं सुभटीभूता, एके तेऽपीन्द्रजालिकाः । राज्ञीदृष्टौ रणं कृत्वा, साधयिष्यन्ति खेचरान् ॥ १५ ॥ राजन्नित्थं कृते गर्भे, सन्तोषो द्राग्भविष्यति । गर्भतोषे हि राज्ञीयं, हर्षात्पुष्टा भविष्यति ॥ १६ ॥ मन्त्रिप्रोक्तमिदं सर्व्वं, कारयित्वाऽथ भूभुजा । प्रियायाः पूरितो वेगाच्चन्द्रपानादिदोहदः ॥ १७ ॥ गर्भस्य पूर्णकालेऽथ, शुभयोगे शुभे दिने । ग्रहेषु स्वगृहस्थेषु, स्वोच्चस्थेषु च केषुचित् ॥ १८ ॥ सुलग्ने सौम्यवेलायां, निशि चन्द्रोदये सति । सुवारे शुक्लसप्तम्यां, राज्ञी पुत्रमजीजनत् ॥ १९ ॥ युग्मम् ॥ नृपं वर्द्धापयामासुस्तदा दास्यादयो जनाः । सद्वर्द्धापनिकां राजा, ददौ तेभ्यो यदृच्छया ॥ १२० ॥ पुत्रोत्पत्तिं नृपः श्रुत्वा, देहे हर्षेण नो ममौ । नानायुक्त्या निजनरैः, पुरीशोभामकारयत् ॥ २१ ॥ स्थाने स्थाने मल्लयुद्धं, नाटकानि चतुष्पथे । द्रव्यलक्षाणि

दीयन्ते, एवं जन्मोत्सवं व्यधात् ॥ २२ ॥ चन्द्रार्कदर्शनं ज्ञोन्यां, शयनं बलिदापनम् । इत्यादीनि सुते जाते, सर्वकर्माणि जज्ञिरे ॥ २३ ॥ स्वजने गौरवं कृत्वा, भोज्यवस्त्रादिदानतः । भगिनीवृद्धनारीणामग्रे नृपतिरब्रवीत् ॥ २४ ॥ अहं प्राक्तनपुण्येन, तपसां साधनेन च । श्रीचन्द्रप्रभभक्त्या च, देवतावरमाप्तवान् ॥ २५ ॥ मनोरथशतैः सार्द्धं, सञ्जातो मम नन्दनः । युष्मत्प्रसादतः सर्व्वं, वाञ्छितं फलितं मयि ॥ २६ ॥ चन्द्रोदयेति नामास्तु, चन्द्रस्वप्नात् सुतस्य मे । दोहदाच्चन्द्रपानस्य, चन्द्रोदरेति चापरम् ॥ २७ ॥ धात्रीभिः पाल्यमानोऽथ, स चन्द्रोदयनन्दनः । वर्द्धते स्म क्रमान्नित्यं, शुक्लपक्षे यथा शशी ॥ २८ ॥ विद्याग्रहणयोग्योऽसौ, सञ्जातः सप्तवार्षिकः । महोत्सवेन पाठार्थं, पण्डिताय समर्पितः ॥ २९ ॥ देवांशत्वात्स्वल्पकालेनाधीतं तेन वाङ्मयम् । शस्त्रश्रमादिकः सर्व्वः, कलाभ्यासश्च निर्ममे ॥ १३० ॥ क्रमात्स प्राप तारुण्यं, तरुणीमानमर्दनम् । करोति विविधां क्रीडां, सुमित्रैः सह सर्व्वदा ॥ ३१ ॥

इतश्च नगरे तस्मिन्महेभ्योऽभून्महर्द्धिकः । नामतोऽमरचन्द्राख्यश्चन्द्रलेखाप्रियाऽस्य च ॥ ३२ ॥ तयोः सागरचन्द्रोऽभूत्पुत्रो दक्षः कलासु च । सदाचारविचारज्ञः, संस्तुतः सज्जनैर्जनैः ॥ ३३ ॥ दानादिधर्मकर्म्माणि, नो त्यजति कदापि सः । इयदस्तीति तद्गेहे, धनसङ्ख्यां न वेत्ति कः ॥ ३४ ॥ सुखेनागमयत्कालं, कृपालुः सर्वजन्तुषु । कुलाचारं स नामुञ्चत्, प्राप्तायां विषमापदि ॥ ३५ ॥ तस्यान्तरायकर्म्मत्वान्महेभ्यस्यापि हाऽन्यदा । अपहारं विना लक्ष्मीः, क्षीणा जाता स्वभावतः ॥ ३६ ॥ तथाप्यसौ सदाचारं, दानधर्म्मंश्च नामुचत् । स्तोकादपि ददौ स्तोकं, साध्वादिभ्यो महादरात् ॥ ३७ ॥ एवं द्वादश वर्षाणि, ययुर्दुस्सहयोगतः । ततोऽन्तरायकर्म्मास्य, क्षयं प्राप्तं घनं क्रमात् ॥ ३८ ॥ एतस्मिन्समये तस्य, गृहे

कोऽपि मुनीश्वरः । आगतो लब्धिसम्पन्नः, कल्पद्रुरिव मूर्त्तिमान् ॥ ३६ ॥ तं तीर्थं जङ्गमं मत्वा, वन्दित्वा च सुहर्षतः । अन्नपानादिकं शुद्धं, दत्त्वा स्तुतिमसौ व्यधात् ॥ १४० ॥ काव्यम्–सोऽयं दिनः शुभमयः समयः स धन्यः, सा सुन्दरा रजनिरस्तु स एव यामः । यत्र प्रमोदभरनिर्भरलोचनानां, भव्यात्मनां हि भवता सह सङ्गमः स्यात् ॥ ४१ ॥ संप्राप्ततोपोऽथ मुनीश्वरोऽसौ, धर्म्मोपदेशं प्रददौ तदग्रे । धर्मं प्रपद्यैव जिनोदितं तं, तदाऽवदत्सागरचन्द्र एवम् ॥ ४२ ॥ प्रभो ! कृत्वा प्रसादं मे, कञ्चित्कथय साम्प्रतम् । उपायं सुलभं श्रेष्ठं, येन याति दरिद्रता ॥ ४३ ॥ मुनिः श्रुतोपयोगेन, प्रविलोक्येदमब्रवीत् । अस्त्यन्तरायकं कर्म्म, किञ्चित्ते तेन कथ्यते ॥ ४४ ॥ परमेष्ठिमहामन्त्रमध्ये यत्सप्तमं पदम् । तदाराधय दुष्कर्म्मनाशनं विधिपूर्वकम् ॥४५॥ ॐ नमः प्रथमं प्रोक्त्वा (च्य), सर्वपापप्रणाशनम् । इत्येकादशवर्णां तद्गृहचैत्याग्रतो जप ॥४६॥ प्रमादा दूरतस्त्याज्या, धार्यं ब्रह्मव्रतं त्वया । त्याज्या च विकथा निद्राहारं त्याज्यं चतुर्विधम् ॥ ४७ ॥ एवं कृतेऽत्र भो भद्र !, सप्तमे दिवसे तव । भविष्यत्येव प्रत्यक्षा, दक्षा शासनदेवता ॥ ४८ ॥ ततस्त्वद्भाग्ययोगेन, तुष्टा दास्यति यं वरम् । तमहं नैव जानामि, प्रोक्त्वे(च्ये)ति स गतो मुनिः ॥ ४६ ॥ अथो सागरचन्द्रेण, शुचीभूत्वा(य) शुभे दिने । सर्व्वसामग्रिकां कृत्वा, प्रारब्धं मन्त्रसाधनम् ॥ १५० ॥ सप्तमे दिवसे तत्र, मध्यरात्रे समागते । प्रत्यक्षीभूय देवी सेत्यवदत् पत्रिकान्विता ॥ ५१ ॥ पत्रीं वत्स ! गृहाणेमां, गाथाऽत्रास्ति महार्थयुक् । विक्रेया हेमलक्षेण, चन्द्रोदयस्तु लास्यति ॥ ५२ ॥ तादृशं नास्ति ते पुण्यं, किञ्चित् येनाधिकं ददे । इत्युक्त्वा चीष्टिकां दत्त्वा, गता देवी निजस्थितिम् ॥ ५३ ॥ ततः सागरचन्द्रोऽसौ, गाथां नीत्वा चतुष्पथे । गतश्चन्द्रोदयस्तत्र, क्रीडंस्तस्यामिलत्पथि ॥ ५४ ॥ तत्करे पत्रिकां दृष्ट्वा, ज्ञात्वा गाथाञ्च राजसूः ।

प्रोचे हे मित्र ! गाथैषा, मह्यं मूल्येन दीयताम् ॥ ५५ ॥ गाथामूल्यं हेमलक्षं, सागरेण निवेदितम् । दत्त्वा मूल्यं गृहीत्वा च, स गाथामित्यवाचयत् ॥ ५६ ॥ तद्यथा—अपत्थियं चिय जहा, एइ दुहं तह सुहंपि जीवाणं । ता मुत्तुं सम्मोहं, धम्मे चिय कुणह पडिबन्धं ॥ ५७ ॥ इमां गाथां गृहीत्वा स, गतश्चन्द्रोदरो गृहम् । सागरोऽपि निजस्थानं, प्रययौ स्वर्णलक्षयुक् ॥ ५८ ॥ अन्यदा राजपुत्रोऽसौ, क्रीडां कर्तुं वने गतः । सुमित्रैः सह चिक्रीड, विनोदैस्तत्र भूरिभिः ॥ ५९ ॥ इतश्च कोऽपि तत्रैको, दुष्टो देवः समागतः । अपहृत्य कुमारं तमुत्पत्य च गतोऽम्बरे ॥ १६० ॥ चन्द्रोदयो व्रजन् व्योम्नि, चिन्तयामास चेतसि । कस्मादहं हृतः केन, दुष्टदेवेन किं कृतम् ? ॥ ६१ ॥ विमृश्य हृदि धैर्यं च, धृत्वा चन्द्रोदयो जगौ । रे दुष्ट ! त्वं न मां वेत्सि, गृहीत्वा किङ्करिष्यसि ? ॥ ६२ ॥ धरन्कपालिवेषं स, देवोऽपीत्यवदत्तदा । अरे रे त्वद्बलिं कृत्वा, साधयिष्याम्यहं सुरीम् ॥ ६३ ॥ वृषभाख्यगिरेः शृङ्गे, विश्वघोरास्ति या दरी । तन्मध्येऽस्ति विरूपाक्षी, विकटा व्यालवाहना ॥ ६४ ॥ मया सा साधिता शक्तिर्जापहोमौ कृतौ भृशम् । देवी तथापि नाऽतुष्यत्, दत्तः स्वप्नः परं मम ॥ ६५ ॥ द्वात्रिंशल्लक्षणोपेतं, नरं भो मम कल्पय । येनाहं तव वेगेन, पूरयामि समीहितम् ॥ ६६ ॥ स्वप्नं विचार्य भूपीठे, भ्रमामि नरहेतवे । सर्वलक्षणसंपूर्णो, दृष्टस्त्वं जगृहे मया ॥ ६७ ॥ तदा चन्द्रोदयो दध्यौ, चेत्करिष्यति मद्बलिम् । तर्हि मे जीवितं धिग् धिग्, वधोऽयं पशुवत् यतः ॥ ६८ ॥ धृत्वा धैर्यं ततश्चित्ते, स्मृत्वा पञ्चनमस्कृतिम् । मुष्टिना प्रहतस्तेन, कोऽप्ययं योगिरूपभृत् ॥ ६९ ॥ दृष्ट्वा सत्त्वं कुमारस्य, स कपाली कुकर्मकृत् । जगाम सहसोत्पत्य, व्योम्नि मुक्त्वा कुमारकम् ॥ १७० ॥ निरालम्बः कुमारोऽथ, पपात व्योमतोऽर्णवे । पूर्वपुण्यप्रभावेण, फलकं चटितं करे ॥ ७१ ॥ घञ्चनाघोलना-

न्यायात्, संसारमतिदुस्तरम् । संपूर्य लाघवाज्जीवो, यथा प्राप्नोति सद्गतिम् ॥ ७२ ॥ भीषणं मत्स्यकूर्माद्यैः, सोऽवगाह्य तथाम्बुधिम् । कल्लोलैः प्रेरितस्तीरं, सम्प्राप नवभिर्दिनैः ॥ ७३ ॥ युग्मम् ॥ भूमिं प्रेक्ष्य दधन्मोदं, स बभ्रामाम्बुधेस्तटे । नालिकेरजलं चाङ्गे, मर्दयित्वाऽभवत्पटुः ॥ ७४ ॥ पत्रैः पुष्पैः फलै रम्यैः, प्राणयात्रां विधाय च । वने वने स चिक्रीड, प्राप्तद्वीप इवामरः ॥ ७५ ॥ मातापितृवियोगोत्थं, दुःखं गाथार्थचिन्तया । सोऽवगणय्य धैर्येण, बभ्राम सकले वने ॥ ७६ ॥ महारण्येऽन्यदा श्रुत्वा, रुदितं सोऽग्रतो ययौ । रुदन्त्यास्तत्र बालायास्तेनेति वचनं श्रुतम् ॥ ७७ ॥ रे दैवाहं कथं सृष्टा, निर्भाग्या दुःखभागिनी । अस्तु चेह परत्रापि, भर्त्ता चन्द्रोदयो मम ॥ ७८ ॥ एवं विलप्य सा चूतशाखायां पाशमात्मना । बध्वाऽमुञ्चत्स्वकण्ठे द्राग्, छिन्नश्चन्द्रोदयेन सः ॥ ७९ ॥ सचेतना कृता यावत्तदागात्कोऽपि खेचरः । कुमारेण च तस्याग्रे, कन्यापाशकथोदिता ॥ १८० ॥ खेचरः स्माह भद्र ! त्वं, परोपकृतिकारकः । दृश्यसेऽत्रैत्य यत्कन्यामरणं येन वारितम् ॥ ८१ ॥ विद्याधरश्च पप्रच्छ, कुमारोऽपि विचारवान् । द्वीपः क एष कस्तत्रश्च, का कन्या मृत्युसाधिका ? ॥ ८२ ॥ श्रूयतां खेचरः स्माह, द्वीपोऽयममराभिधः । अस्त्यत्रैवामरपुरं, स्वर्गखण्डमिव क्षितौ ॥ ८३ ॥ राजा तत्रास्ति भुवनचन्द्रश्चन्द्र इवोज्ज्वलः । चन्द्रावलीति तद्भार्या, सुता कमलमालिका ॥ ८४ ॥ एकदा सा सखीवृन्दसंयुता कानने गता । कर्तुश्च विविधां क्रीडां, प्रवृत्ता तत्र हर्षिता ॥ ८५ ॥ तदा किंनरकिंनर्यौ, मिलित्वा तत्र सुस्वरम् । चन्द्रोदयकुमारस्य, गायतः स्म गुणान् घनान् ॥ ८६ ॥ कुमारी तद्गुणान् श्रुत्वाऽपृच्छद्गत्वा तदन्तिके । अहो कोऽयं कुमारो यद्वर्णनं क्रियते सुरैः ? ॥ ८७ ॥ किंनरी प्राह हे कन्ये !, पुष्पभद्रपुरेश्वरः । पुष्पचूलोऽस्ति भूपालस्तत्पत्नी पुष्पमालिनी ॥ ८८ ॥

तत्कुक्षिसरसीहंसो, ज्ञेयश्चन्द्रोदयो महान् । गृहीता येन गाथका, लक्षकाञ्चनदानतः ॥ ८९ ॥ इत्युक्त्वा किंनरद्वंद्वं, गतं व्योमनि तत्क्षणात् । ततः कन्या कुमारं तं, स्पृहन्तीति व्यचिन्तयत् ॥ १९० ॥ अस्मिन्भवे परभवे, भर्त्ता चन्द्रोदयोऽस्तु मे । मनसाऽपि नरो नान्यः, प्रतिज्ञेति कृता तया ॥ ९१ ॥ ततो ज्ञात्वा स्वरूपं तत्पिता भुवनचन्द्रराट् । चन्द्रोदयवरार्थेऽथ, कुरुते यावदुद्यमम् ॥ ९२ ॥ तावत्संवीक्ष्य तां कन्यां, विद्याभृत्सुरसेनकः । मोहितोऽस्याः सुरूपेण, हत्वाऽकस्माद् ययौ रयात् ॥ ९३ ॥ तामिमां कन्यकां नीत्वा, प्रदेशेऽस्मिन्मुमोच सः । विलपन्तीमिमां यावत्, खेचरः स्थापयेद्बलात् ॥ ९४ ॥ तावत्कन्यामातुलेन, मयैवामिततेजसा । गच्छता व्योम्नि दृष्टाऽसौ, रुदन्त्युच्चैरिह स्थिता ॥९५॥ युग्मम् ॥ भागिनेयामिमां ज्ञात्वा, हकितः खेचरो मया । अरे कर्म्म किमारब्धं ?, जीवितं रोचते न ते ॥ ९६ ॥ इत्युक्ते स रुषा योद्धुमागतो मम सम्मुखः । दिव्यास्त्रैर्दारुणं युद्धमावयोरुभयोरभूत् ॥ ९७ ॥ तदा कन्याऽप्यसौ वीक्ष्य, प्रस्तावं चेत्यचिन्तयत् । किं भविष्यति ? नो जाने, तन्मृतिं साधयाम्यहम् ॥ ९८ ॥ ध्यात्वेत्यागत्य वृक्षेऽस्मिन्, मृत्यवे यावदुद्यता । असौ तावत्त्वया पाशाद्रक्षिता स्वसृजा मम ॥ ९९ ॥ हत्वाऽहं सुरसेनं तमधुनाऽहं समागतः । अस्माकमेष सम्बन्धः, कन्याया मातुलस्त्वहम् ॥ २०० ॥ अथो कुमारवृत्तान्तं, यावत्पृच्छेत्स खेचरः । किन्तु तावद्वने तत्र, महत्सैन्यं समागतम् ॥ १ ॥ सैन्यं पश्यन्ति ते यावत्तावच्चामिततेजसा । निजोपलक्षिता माताऽऽयाता विद्युल्लताऽभिधा ॥ २ ॥ सुरसेनयुतं युद्धं, सा ज्ञात्वाऽमिततेजसः । शशिवेगेन पुत्रेण, सैन्येन च सहागता ॥ ३ ॥ प्रतिपत्तिः कृता मातुः, पुत्रेणामिततेजसा । दृष्ट्वा चन्द्रोदयं तत्र, दध्यौ विद्युल्लता मुदा ॥ ४ ॥ अहो गुणाकरः कोऽसौ, किं वाऽयं कल्पपादपः । सुधारसो

निधिः किं वा, यस्य चेष्टा शुभेदृशी ॥ ५ ॥ नरः सम्भाव्यते कोऽसौ, मया दृष्टोऽस्त्ययं क्वचित् । एवं तस्याश्चिन्तयन्त्याः, स्मृतं द्रागिति चेतसि ॥ ६ ॥ नन्दीश्वरस्य यात्रार्थं, गच्छन्त्याऽयं पुरा मया । पुष्पभद्रपुरोद्याने, दृष्टश्चन्द्रोदयो रमन् ॥ ७ ॥ तत्स्वरूपं तया प्रोक्तं, सर्व्वेषां साऽथ कन्यका । दध्यौ स्फुरति भाग्यं मे, यद्दिष्टो मिलितो वरः ॥ ८ ॥ कन्याकमलमालायुक्, वरश्चन्द्रोदयो द्रुतम् । आदरेणामरपुरेऽथानीतोऽमिततेजसा ॥ ६ ॥ राजा भुवनचन्द्रोऽपि, हर्षितो वरदर्शनात् । विस्तराच्च ततश्चक्रे, तयोः पाणिग्रहोत्सवम् ॥ २१० ॥ गताः स्वस्थानममिततेजोमुख्याश्च सज्जनाः । भुञ्जन् भोगांस्तया सार्धं, कुमारस्तत्र संस्थितः ॥ ११ ॥ अथान्यदा सुखं सुप्तः, कुमारः स्वगृहे निशि । जजागार प्रगे यावत्तावत्पश्यति चेदृशम् ॥ १२ ॥ अरण्ये श्वापदाकीर्णे, विकटे क्वापि पर्व्वते । मुक्तं शिलातले केनचिदात्मानं ददर्श सः ॥ १३ ॥ तदा सोऽचिन्तयच्चित्ते, कथं जातं ममेदृशम् ? । क्व सा राज्यस्थितिः सौधं, स्वर्विमानसमं क्व च ? ॥ १४ ॥ क्व स दिव्यपल्यङ्कः, क्व चन्द्रोदयचारुता । क्व सा प्राणप्रिया प्रेमवती कमलमालिका ॥ १५ ॥ क्व सा चम्पकमालादिपुष्पसामग्रिका शुभा । स्वर्भोगसदृशं सर्व्वं, क्व गतं पूर्व्वकर्म्मतः ? ॥ १६ ॥ किमरण्यं गिरिः कोऽसौ, शिला कासौ च कर्कशा । सिंहादिभीषणाटव्यां, केनानीतस्त्वहं निशि ? ॥ १७ ॥ पुराऽहं स्ववने क्रीडन्, हृत्वाऽब्धौ केन पातितः ? । तस्मिंस्तीर्णे विवाहोऽभूत्कथं जातमिदं पुनः ? ॥ १८ ॥ एवं ध्यायन् क्षणं स्थित्वा, गाथार्थं च स्मरन् हृदि । धैर्यं धृत्वा स चोत्थायोत्ततार गिरिशृङ्गतः ॥ १६ ॥ अरण्ये भ्रमता तेन, कस्याशोकतरोस्तले । कायोत्सर्गस्थितो दृष्टो, जिनमुद्रां धरन् मुनिः ॥ २२० ॥ क्षमाधारं निर्व्विकारं, त्यक्ताहारं जितेन्द्रियम् । तं प्रेक्ष्य भावनायुक्तो, ववन्दे स विवेकवान् ॥ २१ ॥ मौनं विमुच्य दत्त्वा च, धर्मलाभाशिषं मुनिः । प्रारेभे

देशनां पुण्यवाहिनीं पापनाशिनीम् ॥ २२ ॥ दुर्लभं भवकोट्या हि, मानुष्यं चोत्तमं कुलम् । श्रद्धा च धर्मसामग्री, दुर्लभा भविनां भवे ॥ २३ ॥ अपि लभ्यते सुराज्यं, लभ्यन्ते पुरवराणि रम्याणि । न हि लभ्यते विशुद्धः, सर्वज्ञोक्तो महाधर्म्मः ॥ २४ ॥ दुष्प्रापं प्राप्य तत्सर्वं, चिन्तामणिसमं सदा । रक्षणीयं प्रयत्नेन, प्रमादाभिधतस्करात् ॥ २५ ॥ इष्टं यद्यच्च संसारे, रम्यं चाप्यस्थिरं हि तत् । इत्थं ज्ञात्वा बुधैर्धर्म्मः, सेव्यो बलिनरेन्द्रवत् ॥ २६ ॥

तथाहि—पश्चिमे श्रीविदेहेऽस्ति, विजयो गन्धिलावती । पुरी चन्द्रप्रभा तत्र, स्वर्गभूमिसमा सदा ॥ २७ ॥ अकलङ्कोऽभवत्तस्यामकलङ्को महानृपः । चन्द्रवद्यः सदा सौम्यो, यस्य वाणी सुधासमा ॥ २८ ॥ सुदर्शनाऽभिधा भार्या, तस्यादर्शसमोज्ज्वला । बलिनामा तयोः पुत्रो, बालत्वे सबलो बुधः ॥ २९ ॥ विंशतिं पूर्व्वलक्षाणि, युवराज्ये स संस्थितः । चत्वारिंशत्पूर्व्वलक्षाः, पैत्र्यं राज्यमपालयत् ॥ २३० ॥ तदा श्रीसुव्रताचार्यसमीपे श्रावकव्रतम् । स जग्राह दिवारात्रौ, चक्रे सुकृतमुत्तमम् ॥ ३१ ॥ प्रासादप्रतिमादीनोद्धारश्रीसङ्घभक्तिभिः । रथयात्रादिकैः सोऽभूज्जैनधर्म्मप्रभावकः ॥ ३२ ॥ श्राद्धधर्म्मक्रियायुक्तः, सोऽन्यदा पाक्षिकादिने । उपोषितः सर्व्वरात्रौ, कायोत्सर्गे स्थितः स्थिरः ॥ ३३ ॥ तृतीयप्रहरप्रान्ते, भावयन् शुभभावनाम् । अनित्यतास्वरूपञ्च, सोऽपश्यत् सर्व्ववस्तुषु ॥ ३४ ॥ विद्युल्लताचला लक्ष्मीरायुर्दर्भाग्रबिन्दुवत् । गजकर्णचलं राज्यं, सङ्गमाः स्वप्नसन्निभाः ॥ ३५ ॥ कस्य पुत्राः कलत्राणि, कस्य गेहं धनादिकम् । ममेत्यङ्गी वृथा कुर्यात्, संसारे कोऽपि कस्य न ॥ ३६ ॥ तथा—अहं ममेति संसारो, नाहं मम न निर्वृतिः । चतुर्भिरक्षरैर्बन्धः, पञ्चभिः परमं पदम् ॥ ३७ ॥ यतः—अनित्यानि शरीराणि, विभवो नैव शाश्वतः । नित्यं सन्निहितो मृत्युः, कर्त्तव्यो धर्मसङ्ग्रहः ॥ ३८ ॥ मुक्त्वा क्रोधं विरोधञ्च,

सर्वसन्तापकारणम् । यदा शमसुधायुक्तस्तदा प्राप्नोति निर्वृतिम् ॥ ३९ ॥ इत्थं निःस्पृहवृत्त्या सोऽनित्यतां चिन्तयन् हृदि । सम्प्राप्तः क्षपकश्रेणिं, ज्ञानं सम्प्राप केवलम् ॥ २४० ॥ गृहीत्वा देवतादत्तमुनिवेषं स केवली । सुवर्णाम्भोजसंस्थानश्चक्रे सद्धर्म्मदेशनाम् ॥ ४१ ॥ पृथिव्यां विहरन् सोऽथ, बहून् जीवान् व्यबोधयत् । लोकैस्तदाऽस्य भुवनभानुनाम कृतं स्फुटम् ॥ ४२ ॥ विजयेऽस्मिन् जयपुरनायकश्चन्द्रमौलिकः । अभूद्भूपः केवलिना, तस्याग्रे देशना कृता ॥ ४३ ॥ वैराग्यरससम्पूर्णा, स्वकथा कथिता तदा । श्रुत्वा स प्राप संवेगं, दीक्षां चापि गृहीतवान् ॥ ४४ ॥ स क्रमात् केवली जज्ञे, तौ द्वौ चाराध्य संयमम् । पूर्व्वकोटीं निजं चायुः, प्रपाल्याथ शिवङ्गतौ ॥ ४५ ॥ अस्मिन्नसारे संसारे, सारं किञ्चित् न विद्यते । एकः शान्त्यात्मको धर्म्मः, सारो यस्माद्भवेत् शिवम् ॥ ४६ ॥ धर्म्मात् सिध्यति विश्वेऽर्थः, कामः सिध्यति चार्थतः । अतोऽर्थकामौ मोक्षोऽपि, सर्वे सिध्यन्ति धर्म्मतः ॥ ४७ ॥ इत्थं विज्ञाय भो भद्र !, सर्वथा कार्यसाधने । सेवनीयः सुचित्तेन, धर्म्म एव निरन्तरम् ॥ ४८ ॥ धर्म्मः सम्यक्त्वमूलोऽसौ, जिनो देवो मुनिर्गुरुः । धर्म्मो दयेति सम्यक्त्वमुक्तं तत्त्वं त्रयात्मकम् ॥ ४९ ॥

इत्यादि देशनां श्रुत्वा, चन्द्रोदयकुमारराट् । शुद्धं सम्यक्त्वमूलं तं, श्राद्धधर्म्मं गृहीतवान् ॥ २५० ॥ जीवाजीवादितत्त्वानि, पृष्ट्वा स ज्ञातवान्पुनः । मिथ्यात्वस्य गतिं त्यक्त्वा, किञ्चिद्यावच्च पृच्छति ॥ ५१ ॥ अदृश्योऽभून्मुनिस्तावद्विस्मयात्तेन चिन्तितम् । मुनिर्महोपकारी मे, धर्म्मं प्रोक्त्वा ( च्य ) गतः क्व सः ? ॥ ५२ ॥ एतस्मिन्नसमये तत्राकस्मात्सैन्यं समागतम् । वेष्टयित्वा भटैः शीघ्रं, कुमारं प्रति भाषितम् ॥ ५३ ॥ रे त्वां समरविजयो, रोषेणात्र हनिष्यति । इति श्रुत्वा स गाथार्थं, स्मृत्वा धत्ते स्म धीरताम् ॥ ५४ ॥ सिंहनादं ततः कृत्वा, तत्सैन्यात् कस्यचिद्रथम् । गृहीत्वा तत्र चारुह्य, सङ्ग्रामे

सम्मुखोऽभवत् ॥ ५५ ॥ रथं सर्व्वायुधैः पूर्णं, गृहीतं कटकं हतम् । दृष्ट्वा भटा इति प्रोचुः, सामान्यो नैष मानवः ॥ ५६ ॥ राजा समरविजयो, भग्नं दृष्ट्वा निजं बलम् । स्वयं डुढौके युद्धाय, गतश्चन्द्रोदयान्तिके ॥ ५७ ॥ गर्वितोऽस्त्रप्रहारं स, यावन्मुञ्चति तावता । लघुलाघविकीं विद्यां, कृत्वा तेन धृतो द्रुतम् ॥ ५८ ॥ बद्धो जीवन्नसौ यावद्रथे संस्थापितो निजे । विनयात्समरस्तावत्, कुमारचरणेऽपतत् ॥ ५९ ॥ उत्पन्नदयया मुक्तस्तदा चन्द्रोदयेन सः । इतश्चागत्य कापि स्त्री, कुमारं प्रत्यदोऽवदत् ॥ २६० ॥ भो भद्र ! शृणु मे वाक्यं, पुरे श्रीकुशवर्द्धने । राज्ञः कमलचन्द्रस्यामरसेनाऽस्ति तत्प्रिया ॥ ६१ ॥ भुवनश्रीस्तु तत्पुत्री, जिनधर्म्मेण भाविता । सा त्वदीयगुणान् श्रुत्वा, प्रतिज्ञामग्रहीदिति ॥ ६२ ॥ अस्मिन्जन्मनि मे भर्त्ता, चन्द्रोदयकुमारराट् । सहोदरा नरा अन्ये, ममासौ निश्चयः सदा ॥ ६३ ॥ असौ शैलपुराधीशः, समराद्विजयो नृपः । तां कन्यामन्यदा तस्याः, पितुः पार्श्वादयाचत ॥ ६४ ॥ प्रतिज्ञामिति विज्ञाय, न ददाति पिता सुताम् । समरस्तत्पुरोद्याने, ससैन्योऽथ समागतः ॥ ६५ ॥ गुप्तवृत्त्या स्थितस्तत्र, कन्या क्रीडार्थमागता । पाप्यसौ विलपन्तीं तां, हृत्वा भूप इहागतः ॥ ६६ ॥ अत्रस्थं त्वां कुतो हेतोर्ज्ञात्वाऽयं हन्तुमुद्यतः । कन्याधात्री त्वहं स्नेहात्तत्पृष्ठि द्रुतमागता ॥ ६७ ॥ श्रुत्वा त्वन्नाम सैन्येऽत्र, मया त्वं चोपलक्षितः । अस्मात्समरविजया-त्तां कन्यां त्वं विमोचय ॥ ६८ ॥ कुरु पाणिग्रहं तस्याः, पूर्णा सन्धा यथा भवेत् । अस्या भाग्येन लब्धस्त्वं, प्रसङ्गाद्वाञ्छितो वरः ॥ ६९ ॥ हृष्टेन समरेणाथ, भुवनश्रीः कुमारिका । सुशृङ्गारितसर्व्वाङ्गा, दत्ता चन्द्रोदयाय सा ॥ २७० ॥ सङ्क्षेपात्परिणीताऽथ, वने चन्द्रोदयेन सा । नत्वा कुमारमापृच्छ्य, स्वस्थाने समरो गतः ॥ ७१ ॥ आरुह्याथ रथं रम्यं, कुमारः कन्यया सह । श्रीकुशवर्द्धनपुरे, गन्तुं मार्गे प्रवर्त्तितः ॥ ७२ ॥

क्रियत्यपि गते मार्गे, तेन क्वापि वने वरे । अपूर्वध्वनिमद्गानं, श्रुतमन्यत्र मार्गतः ॥ ७३ ॥ मत्वा कुतूहलं तत्र, रथं मुक्त्वा प्रियायुतम् । गतो नादानुमानेन, ददर्शाग्रे स ईदृशम् ॥ ७४ ॥ तत्रैकास्ति महावाटी, विविधद्रुमपूरिता । आवासश्चास्ति तन्मध्ये, सप्तभूमिमनोहरः ॥ ७५ ॥ तन्मध्ये कौतुकान्वेषी, प्रवेशं कुरुते स्म सः । तद्गीतश्रवणे लुब्धो, मृगवन्नादमोहितः ॥ ७६ ॥ यदाऽसौ सप्तमीं भूमिमारुरोह सुवेगतः । दृष्टाः कन्यास्तदा पञ्च, रूपसौभाग्यसुन्दराः ॥ ७७ ॥ ताः प्रेक्ष्य विस्मयपरो, यावत्पृच्छति किञ्चन । उत्थाय वनिताः सर्वाः, प्रतिपत्तिं व्यधुस्तदा ॥ ७८ ॥ तं सत्कृत्यासनाद्यैस्ता, लज्जाविनयतत्पराः । निजाङ्गानि च सङ्गोप्य, कुमारस्याग्रतः स्थिताः ॥ ७९ ॥ ततश्चन्द्रोदयोऽपृच्छत्, हे भद्राः ! किं वने स्थिताः ? । इदं युक्तं न नारीणां, यद्वने स्थीयते स्वयम् ॥ ८० ॥ का यूयं कस्य नन्दिन्यो ? युष्मद्वार्त्ता निगद्यताम् । विस्मयोऽस्त्येष मच्चित्ते, तेन पृच्छामि वेगतः ॥ ८१ ॥ पञ्चमध्येऽथ कन्यैका, जगाद शृणु सात्त्विक ! । सम्बन्धः सकलोऽस्माकं, तव योग्यस्य कथ्यते ॥ ८२ ॥

वैताढ्ये खेचरेन्द्रोऽस्ति, चक्रवर्त्तिसमः श्रिया । सिंहनादाभिधः प्रौढः, श्रीमुखी तस्य च प्रिया ॥ ८३ ॥ तस्याः कुक्षी-समुद्भूता, वयं पञ्चापि कन्यकाः । लक्ष्मी-सरस्वती-गौरी,-जयन्ती-मेनिकाभिधाः ॥ ८४ ॥ वयं पञ्चापि नन्दिन्यः, सम्प्राप्ता यौवनं यदा । तदाऽस्मज्जनकोऽपृच्छत्, कश्चिन्नैमित्तिकोत्तमम् ॥ ८५ ॥ अस्माकं पञ्चपुत्रीणां, भर्त्ता कस्को भविष्यति । भूचरः खेचरो वाऽपि, तं त्वं कथय मे स्फुटम् ॥ ८६ ॥ तदा नैमित्तिकेनोक्तमभिज्ञानयुतं वचः । एकश्चन्द्रोदयः पञ्च, भूचरः परिणेष्यति ॥ ८७ ॥ सार्धेषु षट्सु मासेषु, गतेष्वद्यदिनात्किल । सोऽस्मिन् वने कुतो राजन् !, स्वयमेव समेष्यति

॥ ८८ ॥ इति श्रुत्वाऽथ तातेन, प्रासादोऽत्र वनेऽप्ययम् । कारितश्च वयं पञ्च, मुक्ता वराप्तिहेतवे ॥ ८९ ॥ सखीभिः सह सत्क्रीडां, वयं कुर्म्मो दिवानिशम् । पूरयेत्सर्व्ववस्तूनि, पिता रक्षां करोति च ॥ २९० ॥ सम्पूर्णोऽवधिरद्यैव, जातोऽस्मद्भाग्यतः पुनः । आगतस्त्वं वरः प्रोक्त, आकारैरुपलक्षितः ॥ ९१ ॥ इति श्रुत्वा कुमारोऽपि, विस्मयं प्राप मानसे । गाथार्थञ्च स्मरन् दध्यौ, हर्षपूरप्रपूरितः ॥ ९२ ॥ अहो संसारवासेऽस्मिन्, विधेर्विलसितं महत् । दुर्घटं घटतेऽकस्मात्, सुघटं विघटं भवेत् ॥ ९३ ॥ यतः—अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां, मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् । वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया, लीलादुर्ल्ललिताद्भुतव्यसनिने दैवाय तस्मै नमः ॥ ९४ ॥ असाध्यं साधयेत् यो द्राक्, सुसाध्यं नैव साधयेत् । विपरीतो हि यद्भावोऽत्राहो विलासितं विधेः ॥ ९५ ॥ चिन्तयित्वेति यावत्स, मौनमाश्रित्य संस्थितः । तावत्ता वनिताः प्रोचुः, शृणु भाग्यनिधे नर ! ॥ ९६ ॥ सम्पूर्णे सार्धषण्मासावधौ जातस्तवागमः । अद्य लग्नदिनं चास्ति, कुरु पाणिग्रहं ततः ॥ ९७ ॥ पूर्व्वनिर्मितसामग्र्या, पञ्चानां पाणिपीडनम् । यावत्तेन कृतं तावन्न कन्यास्तत्र नो गृहम् ॥ ९८ ॥ एकाकिनं तदात्मानं, भूमिस्थं च ददर्श सः । चिन्तयामास किमिदं, चित्रमत्रेन्द्रजालवत् ? ॥ ९९ ॥ क्व गताः पञ्च कन्यास्ताः, सप्तभूमिगृहं क्व च । एतत्सर्व्वं क्षणेनैव, जातं मे स्वप्नसन्निभम् ॥ ३०० ॥ इति चिन्तापरो भूत्वा, स गतः स्वरथं प्रति । तावत्तत्र स्त्रिया हीनं, रथं पश्यति सर्वथा ॥ १ ॥ सविषादस्ततो दध्यौ, हा हा क्वैषाऽपि मे प्रिया । सविस्मयोऽथ बभ्राम, सोऽटव्यामवलोकयन् ॥ २ ॥ अग्रे ददर्श चोत्तुङ्गतोरणस्तम्भमण्डितम् । स्वर्णरत्नमयं रम्यं, प्रासादं प्रतिमान्वितम् ॥ ३ ॥ बिम्बं युगादिनाथस्याऽऽलम्बनं भववारिधौ । दृष्ट्वा तत्र प्रविष्टोऽसौ, वन्दनार्चनहेतवे ॥ ४ ॥ यावज्जिनस्य

पूजां स, कृत्वा तद्ध्यानसंस्थितः । तावत्तत्र समायातो, विद्याभृन्मेघवाहनः ॥ ५ ॥ तत्सार्थेऽस्ति सुतारत्नं, नामतो नरमोहिनी । पूर्व्वनैमित्तिकेनोक्तस्तस्याश्चन्द्रोदयो वरः ॥ ६ ॥ कुमारं प्रागदृष्टमिव, दृष्ट्वा सा दधती मुदम् । पित्रा सह जिनेन्द्रस्य, पूजां कर्तुं प्रवर्त्तिता ॥ ७ ॥ इतश्च सिंहनादोऽपि, स विद्याधरनायकः । संयुक्तः पञ्चपुत्रीभिरागात्तत्र जिनालये ॥ ८ ॥ चन्द्रोदयोऽपि चैत्यार्चां, कृत्वा सिंहं पप्रच्छ तम् । कुतस्त्वमागतः पञ्च, कन्यास्ते मिलिताः क च ॥ ९ ॥ स प्रोचे पञ्चकन्यानां, सिंहनादः पिताऽस्म्यहम् । हे चन्द्रोदय ! सम्बन्धं, शृणु त्वं कथयामि यम् ॥ ३१० ॥

वने प्राग् नृपः समरविजयो यस्त्वया जितः । कमलोत्पलनामानौ, ज्ञेयौ द्वौ तस्य नन्दनौ ॥ ११ ॥ कमलेन ततो वैराद्भुवनश्रीर्हृता रथात् । तव शून्यं रथं मुक्त्वा, वैताढ्ये स द्रुतं गतः ॥ १२ ॥ द्वितीयेनोत्पलेन त्वं, मुक्तः प्रासादतः क्षितौ । अदृष्टं च कृतं गेहं, मत्पुत्रीपञ्चकं हृतम् ॥ १३ ॥ सोऽपहृत्य सुतास्ता मे, यावद् याति निजस्थितिम् । तावत्सिंहासनं शीघ्रं, कम्पितं निश्चलं मम ॥१४॥ मया विद्या ततः पृष्टाऽऽसनं मे कम्पते कथम् ? । देव्या तत्कथितं ज्ञानानन्दिनीहरणं मम ॥१५॥ निपात्याथ स्फुरद्रोषादुत्पलं तं निजौजसा । गृहीत्वा च सुताः पञ्च, त्वत्समीपेऽहमागतः ॥ १६ ॥ इति श्रुत्वा कुमारोऽपि, जहर्ष निजमानसे । अथोवाच कुमारं तं, खेचरो मेघवाहनः ॥ १७ ॥ श्रूयतां हे कुमारेन्द्र !, पुरा नैमित्तिकेन मे । मत्पुत्र्या नरमोहिन्यास्त्वं वरो भापितो महान् ॥ १८ ॥ त्वामत्रस्थमहं ज्ञात्वा, कन्यायुक्तः समागतः । सत्यीकुरु वचो ह्येतत्, तत्कुमारेण मानितम् ॥ १९ ॥ तस्या अपि कृतं तत्र, पाणिग्रहणमुत्तमम् । सपुण्या यत्र गच्छन्ति, भवेयुस्तत्र सम्पदः ॥ ३२० ॥ कुमारं सप्रियं नत्वा, वैताढ्ये विमले पुरे । उत्सवात्सिंहनादेन, प्रवेशस्तस्य कारितः ॥ २१ ॥ पुत्रीविवाहजङ्गोऽथ, कृतस्तेन

सविस्तरः । अर्द्धराज्यश्च जामात्रे, दत्तं तत्करमोचने ॥ २२ ॥ दत्ताश्च सकला विद्या, विधिना तेन साधिताः । चन्द्रोदयः सिद्धविद्यो, भूचरः खेचरोऽभवत् ॥ २३ ॥ ज्ञात्वाऽथ पुत्रवृत्तान्तं, समराद्विजयो नृपः । आगत्य पादयोर्लग्नः, कुमारस्य महोन्नतेः ॥ २४ ॥ भुवनश्रीवधूं दत्त्वाऽपराधः क्षामितः स च । पुत्राभ्यां यत्कृतं वैरं, स विरोधश्च वारितः ॥ २५ ॥ तस्य पुण्यप्रभावेण, सेवां विद्याधरा व्यधुः । स्थित्वाऽत्र कति वर्षाणि, सुखं भोगान् बुभोज सः ॥ २६ ॥ एवं हि परदेशेषु, वर्षसप्तशतानि सः । कौतुकात् गमयामास, परिणीतं प्रियाऽष्टकम् ॥ २७ ॥ अन्यदा स जजागार, यामिन्याः प्रहरेऽन्तिमे । सस्मार निजराज्यश्च, तत्र यामीत्यचिन्तयत् ॥ २८ ॥ आनयित्वा[1]ऽथ कमलमालां सर्व्वप्रियायुतः । विद्याभृत्सैन्यसंयुक्तः, आगतः स पुरे निजे ॥ २९ ॥ पुष्पचूलो नृपस्तावत्, श्रुत्वा पुत्रागमं चिरात् । मीलनार्थं मह(हा)त्स्फूर्त्या, सम्मुखस्त्वरितं ययौ ॥ ३३० ॥ कृतानेकवधूद्वाहं, विद्याभृत्सैन्यसंयुतम् । लक्ष्मीयुक्तं विमानस्थं, पुत्रं दृष्ट्वा मुमोद सः ॥ ३१ ॥ हर्षाश्रूणि सृजन् भूप, आलिलिङ्ग निजाङ्गजम् । नानाविधवधूयुक्तः, पितुः पादौ ननाम सः ॥ ३२ ॥ सुन्दरीभिर्गीयमानः, स्तूयमानश्च बन्दिभिः । वाद्यनादैः समं पुत्रः, पुरे पित्रा प्रवेशितः ॥ ३३ ॥ निजावासे स आगत्य, प्रियाभिः सह संस्थितः । वालिताः खेचराः सर्व्वे, सार्थे येऽत्र समागताः ॥ ३४ ॥ युवराजपदं दत्तं, पित्राऽस्मै भाग्यशालिने । आरोपिता समस्ताऽथ, राज्यचिन्ताऽपि नन्दने ॥ ३५ ॥ अन्यदा तत्पुरोद्याने, मुनिवृन्दसुसेवितः । आगारकेवली भुवनचन्द्रश्चन्द्र इवोज्ज्वलः ॥ ३६ ॥ विज्ञायागमनं तस्य, पुष्पचूलो नरेश्वरः । वन्दनार्थं ययौ तत्र, पुत्रादिपरिवारयुक् ॥ ३७ ॥ तिस्रः प्रदक्षिणा दत्वा, स ववन्दे

१ आनाय्य इति स्यात्.

मुनीश्वरम् । प्रमादं दूरतो मुक्त्वोपविष्टो रचिताञ्जलिः ॥ ३८ ॥ तदा केवलिनाऽऽरेभे, देशना पापनाशनी । भो भव्याः ! श्रूयतां सम्यग्, विधाय स्थिरमानसम् ॥ ३९ ॥ मानुष्यमार्यदेशश्च, कुलमारोग्यता पुनः । आयुरित्यादिसामग्री, दुर्लभा धर्म्मसाधने ॥ ३४० ॥ यतः–भवकोटीष्वपि दुर्लभमिदमुपलभ्येह मानुषं जन्म । येन कृतं नात्महितं, निरर्थकं हारितं तेन ॥ ४१ ॥ मा चिन्तय परच्छिद्रान्, परविभवं माऽभिवाञ्छ मनसापि । मा ब्रूहि क्रूरवचनं, परस्य पीडाकरं कटुकम् ॥ ४२ ॥ अहो अत्रैव संसारे, सुखं किमपि नो भवेत् । केन केन प्रकारेण, सुखिनोऽपि हि दुःखिनः ॥ ४३ ॥ बालस्य तीव्रदुःखानि, दृष्ट्वा निजसुतस्य च । बलसारमहीपालो, निर्व्विण्णो भववासतः ॥ ४४ ॥ तदा सभासदः प्रोचुः, प्रभो ! को बलसारराट् । केवली स्माह भो भव्याः !, सम्बन्धः श्रूयतामिति ॥ ४५ ॥

तथाहि–पुरे लीलापुरे रम्ये, बलसारनृपोऽभवत् । लीलावती प्रिया तस्य, पतिप्रेमप्रमोदिनी ॥ ४६ ॥ अनपत्यत्वदोषेण, साऽत्यन्तं हृदि दुःखिनी । नित्यं वाञ्छति सन्तानं, न भवेत्किन्तु कर्म्मतः ॥ ४७ ॥ अन्यदा मध्यरात्रौ स, जजागार नृपोऽथ च । शुश्राव मधुरं गीतं, दिव्यध्वनिमनोहरम् ॥ ४८ ॥ मृदङ्गवंशसद्वीणातालदुन्दुभिसुस्वरान् । क्वापि श्रुत्वा नृपो दध्यौ, किमिदं दिव्यनाटकम् ? ॥ ४९ ॥ पल्यङ्काद्भूप उत्थाय, वने गानानुसारतः । ययौ श्रीशान्तिनाथस्य, प्रासादस्तत्र वर्त्तते ।' ३५० ॥ जिनाग्रे तत्र नृत्यन्तो, गायन्तश्चापि खेचराः । दृष्टास्तेनाथ तल्लीनो, नृत्यं पश्यन्नसौ स्थितः ॥५१॥ क्षणं ते नाटकं कृत्वा, गता विद्याधरास्ततः । आयान्तो मिलितास्तेषां, सम्मुखाः खेचराः परे ॥ ५२ ॥ तेषां परस्परं युद्धं, सञ्जातं पूर्व्ववैरतः । बलेन युध्यमानास्ते, गता दूरतरं कियत् ॥ ५३ ॥ तदा नृत्यकृतामेका, प्रणष्टा मुख्यखेचरी । हृता विद्या-

भृताऽन्येन, विलापं च चकार सा ॥ ५४ ॥ श्रुत्वा विलापं बलसारभूपः, प्रधावितो रक्षणकाय तस्याः । सा वालिता तं समरे निहत्य, परं प्रहारा अभवन्नृपाङ्गे ॥ ५५ ॥ इतश्च खेचरीभर्त्ता, रिपुं हत्वा समागतः । औषध्या व्रणरोहिण्या, तेन सज्जीकृतो नृपः ॥ ५६ ॥ राज्ञा पृष्टः स कस्त्वं भो !, जगादासौ शृणूत्तम ! । चन्द्रशेखरनामाहं, वैताढ्ये खेचराग्रणीः ॥ ५७ ॥ अस्मिन् चैत्येऽहमायातो, यात्रार्थं परिवारयुक् । कृत्वा पूजां सुनृत्यञ्च, यावता वलिता वयम् ॥ ५८ ॥ तावता मिलितो वैरी, पूर्वद्वेषेण सम्मुखः । सञ्जातो मम सङ्ग्रामो, हतो युध्ध्वा मयाऽपि सः ॥ ५९ ॥ भार्यैषा मम केनापि, वैरिणाऽपहृता तदा । रक्षिता तु त्वया भद्रोपकारश्च महान्कृतः ॥ ३६० ॥ अहं त्वदीयकर्त्तव्यात्, तुष्टो जातोऽस्मि मानसे । तदौषधीं गृहाणैकां, पुत्रादीप्सितदायिनीम् ॥ ६१ ॥ इत्युक्त्वा जटिकां दत्त्वा, नत्वा भूपं स खेचरः । गतः स्वस्थानके शीघ्रं, राजा स्वगृहमागतः ॥ ६२ ॥ तस्यौषधीप्रभावेण, लीलावत्यां सुतोऽजनि । सुखेन वर्षमेकं स, ववृधे यत्नलालितः ॥ ६३ ॥ ततः परं शरीरेऽस्य, ज्वरशूलशिरोऽक्षयः । कासश्च मूत्रकृच्छ्राद्या, अजायन्त महारुजः ॥ ६४ ॥ रोगैः प्रपीडितं पुत्रं, दृष्ट्वा भूपोऽप्यनेकशः । वैद्यानाकार्य तस्याङ्गे, सच्चिकित्सामकारयत् ॥ ६५ ॥ उपचारा घना वैद्यैः, कृता नाभूद्गुणः परम् । जलहीनो यथा मत्स्यो, न रतिं प्राप स क्षणम् ॥ ६६ ॥ तौ मातापितरौ दृष्ट्वा, रोगग्रस्तं स्वनन्दनम् । महार्त्तिसागरे बाढं, पतितौ मोहमोहितौ ॥६७ ॥ चिकित्सा च कृता वैद्यैरौषधीनां शतैरपि । नैव रोगक्षयो जातः, स मृत्युं प्राप कर्म्मतः ॥६८॥ महादुःखी प्रियायुक्तो, भूपोऽभूत्पुत्रमृत्युतः । पप्रच्छ ज्ञानिनं चैवमल्पायुर्मे सुतः कथम् ? ॥ ६९ ॥ ज्ञानी जगाद हे राजन् !, बालेनानेन प्राग्भवे । मिथ्यात्वेन तपोभावाद्गृहीतं तापसं व्रतम् ॥ ३७० ॥ कन्दमूलादिभोजी स, वह्न्याद्यारम्भकारकः ।

नीरेणागलितेनाभूत्, स्नानतर्प्पणतत्परः ॥ ७१ ॥ यतः–संवत्सरेण यत्पापं, कैवर्त्तकस्य जायते । एकाहेन तदाप्नोति,
अपूतजलसंग्रही ॥ ७२ ॥ यः कुर्यात्सर्व्वकार्याणि, वस्त्रपूतेन वारिणा । स मुनिः स महासाधुः, स योगी स महाव्रती ॥७३॥
तेनाज्ञानाज्जलचरादिकजीववधः कृतः । सोऽल्पायुस्ते सुतो जातो, दयातो दीर्घजीवितम् ॥ ७४ ॥ यतः–दीर्घमायुः परं
रूपमारोग्यं श्लाघनीयता । अहिंसायाः फलं सर्व्वं, किमन्यत्कामदैव सा ॥ ७५ ॥ दमो देवगुरूपास्तिर्दानमध्ययनं तपः ।
सर्व्वमप्येतदफलं, हिंसां चेन्न परित्यजेत् ॥ ७६ ॥ भूपः श्रुत्वेति दध्यौ धिग्, मिथ्यात्वं भवकारणम् । पुण्यबुद्ध्यापि यज्जीवा,
अर्जयन्त्येव पातकम् ॥ ७७ ॥ असौ पुत्रो मदीयोऽपि, नरत्वे प्राप्य सत्कुलम् । अल्पायुर्न स्थिरो जातो, मिथ्यात्वात्कृत-
हिंसया ॥ ७८ ॥ ध्यात्वेति भववैराग्यात्, त्यक्त्वा राज्यादिकं नृपः । प्रव्रज्य दुस्तपः तप्त्वा, प्राप्य ज्ञानं शिवं ययौ ।.७९।।

इत्थं श्रीबलसारस्याख्यानं श्रुत्वा सुभावतः । पुष्पचूलो नृपोऽपृच्छत्पुनः केवलिनं मुनिम् ॥ ३८० ॥ भगवन् ! ब्रूहि
मे पुत्र, एष चन्द्रोदयाभिधः । क्रीडां कर्तुं वने प्राप्तः, कस्मात्केन हतः पुरा ॥ ८१ ॥ केवल्यूचे नरेन्द्र ! त्वं, सावधानतया
शृणु । कथ्यते तव पुत्रस्य, सम्बन्धः प्राग्भवोद्भवः ॥ ८२ ॥

विदेहे पुष्कलावत्यां, विजये विपुलापुरी । वणिक्पुत्रावुभौ जातौ, भ्रातरौ स्नेहपूरितौ ॥ ८३ ॥ वृद्धस्य वनिता या सा,
पतिप्रेमानुवर्त्तिनी । महामोहवशाद्भर्तुर्विरहं सहते न हि ॥ ८४ ॥ अन्यदा केन कार्येण, वृद्धो ग्रामान्तरं गतः । हास्यतो
भ्रातृजायाया, इत्युक्तं लघुबन्धुना ॥ ८५ ॥ मदीयः सोदरो मार्गे, केनाचिद्वैरिणा हतः । तच्छ्रुत्वा तस्य भार्या सा, द्राग्
मृता विरहाकुला ॥ ८६ ॥ पश्चात्तापो लघोर्जातो, हा मया दुष्कृतं कृतम् । स्त्रीहत्या मे वृथा लग्नाऽऽत्मानं चेति निनिन्द

सः ॥ ८७ ॥ भ्रातृजायाङ्गसंस्कारं, कृत्वा शन्यमिवान्वहम् । स धरन् हृदि तद्दुःखं, तस्थौ भ्रात्रागमं स्मरन् ॥ ८८ ॥ कियद्भिर्दिवसैर्वृद्धो, भ्राता स्वस्थानमागतः । श्रुता सा स्वप्रियावार्त्ता, भ्रातृहास्यमपि श्रुतम् ॥८९॥ बन्धौ क्रोधस्तदोत्पन्नो, लघुना चामितोऽपि सः । न मुमोच क्रुधं चाभूद्, दुःखात्कोपाच्च तापसः ॥ ३९० ॥ कृत्वा बालतपो मृत्वा, स जातोऽसुर-देवता । लघुभ्रातापि संवेगाज्जैनदीक्षामुपाददे ॥ ९१ ॥ अन्यदा विहरन्पृथ्व्यां वृत्तवैताढ्यसन्निधौ । रात्र्येकप्रतिमायां स, संस्थितो मेरुवत् स्थिरः ॥ ९२ ॥ असुरेण तदा दृष्टः, कायोत्सर्गे मुनीश्वरः । तस्योपरि शिला मुक्ता, पूर्व्ववैरानुभावतः ॥ ९३ ॥ धर्म्मध्यानपरो मृत्वा, सोऽपीशाने सुरोऽभवत् । तत्र स्वर्गसुखं भुक्त्वा, च्युत्वा चाभूत् सुतस्तव ॥ ९४ ॥ असुरोऽथ भवं भ्रान्त्वा, भूयोऽप्यसुरतां गतः । कुमारं वीक्ष्य क्रीडन्तं, पुनर्वैरमसौ दधौ ॥ ९५ ॥ ततो हृत्वा भवत्पुत्रं, समुद्रोपरि सोऽगमत् । एकवारं पुनः सोऽस्योपसर्ग्गं प्रकरिष्यति ॥ ९६॥ तस्मिन्नवसरे तस्य, कुमारवचसा नृप ! । प्रतिबोधो ध्रुवं भावी, वैरं चापि शमिष्यति ॥ ९७ ॥ चन्द्रोदयो भवे पूर्व्वे, यच्चारित्रमपालयत् । ऋद्धिं स प्राप सर्व्वत्र, तस्यैव तपसो बलात् ॥ ९८ ॥ इति श्रुत्वा नरेन्द्रश्चान्येऽपि चन्द्रोदयादयः । श्राद्धधर्म्मं गृहीत्वा च, मुनिं नत्वा गृहाण्ययुः ॥ ९९ ॥ ज्ञात्वेत्थं पूर्व्वजन्माऽल्पतरहसनजं कर्म्म वैरं च बन्धौ, निन्दन्नात्मानमुच्चैर्व्रतसुकृतफलं चापि जानन् स्वचित्ते । धर्म्मे रक्तो विरक्तो दुरितकरणतश्चैष चन्द्रोदयाह्वः, क्रीडन्मित्रैः प्रियाभिर्विषयमनुभवन् राज्यलीलां चकार ॥ ४०० ॥

इति श्रीवीरदेशनायां धर्म्मकल्पद्रुमे चतुर्थभावनाशाखायां चन्द्रोदयाख्याने सप्तमः पल्लवः समाप्तः ॥ ७ ॥

## ॥ अथाष्टमः पल्लवः ॥

धर्म्मः शर्म्म परत्र चात्र हि नृणां धर्म्मोऽन्धकारे रविः, सर्व्वापत्प्रशमक्षमः सुमनसां धर्माभिधानो निधिः। धर्मो बन्धुरबान्धवः पृथुपथे धर्मः सुहृन्निश्चलः, संसारे विषमस्थले सुरतरुर्नास्त्येव धर्मात्परः ॥ १ ॥ केवलज्ञानिवचसा, पुष्पचूलो विशेषतः। चकार धर्म्मकार्याणि, न्यायाद्राज्यमपालयत् ॥ २ ॥ चिन्तातीतं ददद्दानं, स्तूयमानश्च याचकैः। चन्द्रोदयः पितुः सेवां, कुर्व्वन् धर्म्मपरोऽभवत् ॥ ३ ॥ सोऽन्यदा निजसौधस्थः, क्रीडां कर्त्तुं प्रवर्तितः। निजस्त्रीवृंदसंयुक्तो, दोगुंदिक इवाऽमरः ॥ ४ ॥ तदा वीक्ष्य कुमारं तं, कामं कामस्वरूपिणम्। तस्यैवापरमातैका, कामबाणैः प्रपीडिता ॥ ५ ॥ कामेन विह्वलीभूता, कृत्याकृत्येष्वपण्डिता। लज्जां मुक्त्वा कुमारे सा, जाता भोगाभिलाषिणी ॥ ६ ॥ स्वचेटीं चतुरामेकां, साऽऽकार्येदं वचोऽब्रवीत्। याहि रे मम कार्यार्थमत्रानय कुमारकम् ॥ ७ ॥ गत्वा चेटी कुमारं तं, प्रोचे शृंगारचेष्टया। त्वामाह्वयति कामार्त्ता, त्वद्रूपेणातिमोहिता ॥ ८ ॥ ज्ञात्वा तस्या अभिप्रायं, कुमारोऽपि व्यचिन्तयत्। अहो विरुद्धं यल्लोके, तत्कुर्युश्चपलाः स्त्रियः ॥ ९ ॥ वनिता विषयासक्ता, गुह्यं प्रकटयन्ति च। न लज्जां नहि दाक्षिण्यं, स्वाजन्यं गणयन्ति न ॥ १० ॥ विचिंत्यैवं कुमारेण, सा चेटी वारिता तदा। अरेरे किं कथयासि ?, न वाच्या वाग् ममेदृशी ॥ ११ ॥ परनारीं न पश्यामि, ममैषा जननी भवेत्। इति निर्भर्त्सिता दासी, गत्वा राज्ञीपुरोऽवदत् ॥ १२ ॥ तव चेतसि या वार्त्ता, तस्य स्वप्नेऽपि सा नहि। इति श्रुत्वापि कामार्त्ता, तद्रागान्न निवर्त्तिता ॥ १३ ॥ अन्येद्युः प्रेषिता दासी, तथा तेन न मानिता। राज्ञी तथापि नामुञ्चदाशां कामो हि दुर्जयः ॥ १४ ॥ यतः—दुर्ज्जयोऽयमनंगो हि, विषमा कामवेदना। कृत्याकृत्यं न

जानाति, भूतग्रस्त इव भ्रमेत् ॥ १५ ॥ अन्यच्च—विकलयति कलाकुशलं, हसति शुचिं पण्डितं विडम्बयति । अधरयति धीरपुरुषं, क्षणेन मकरध्वजो देवः ॥ १६ ॥ कियद्दिनान्तरे दासी, तया सम्प्रेषिता पुनः । यतः कुव्यसनी कोऽपि, निषिद्धोऽपि न तिष्ठति ॥ १७ ॥ तदा चन्द्रोदयो दध्यावहो मे विधिवक्रता । ममात्र तिष्ठतः कश्चित्, कलंको हि चटिष्यति ॥ १८ ॥ अतो देशान्तरं यामि, पुनः कति दिनान् किल । यथा तातो न जानाति, तथाऽहं निस्सराम्यथ ॥ १९ ॥ मिषेणानेन दृश्यंते, विनोदाः कति भूतले । विमृश्यैवं वालयित्वा, चेटीं सोऽथाचलन्निशि ॥ २० ॥ मार्ग्गमुल्लङ्घयामास, स गच्छन् वायुवेगतः । तस्याटव्यां द्विजश्चैकोः मिलितः कपटी हृदि ॥ २१ ॥ निर्गुणः सोऽतिनिःस्नेहो, वाचालेषु शिरोमणिः । प्रियवाक्यैः कुमारस्य, गृहीतं तेन मानसं ॥ २२ ॥ प्रीतिः पथिकयोर्जाता, द्वयोर्मिलितयोस्तयोः । परस्परं च कुर्व्वाणौ, वार्त्तां तौ पथि चेलतुः ॥ २३ ॥ महारण्येऽमिलद्धाटी, सा कुमारेण निर्जिता । क्षेमेणैव क्षमापुर्यां, वने विश्रमितौ च तौ ॥ २४ ॥ सिद्धकूटगिरेः शृङ्गे, तत्र विश्वेश्वराभिधः । एकोऽस्ति सिद्धपुरुषः, कुमारं प्रति सोऽब्रवीत् ॥ २५ ॥ अहो सत्त्ववतां मुख्य !, भाग्यसौभाग्यसुन्दर । तुष्टोऽहं तव पुण्येन, सिद्धविद्या ददामि ते ॥ २६ ॥ तिस्रः सन्ति सुविद्या मे, प्राप्यन्ते या हि पुण्यतः । आयुर्मदीयमल्पं च, तेन तुभ्यं ददामि ताः ॥ २७ ॥ विद्यादेवीभिरुक्तं मे, चन्द्रोदयनराय वै । त्वया वयं प्रदातव्यास्तेन तुभ्यं ददाम्यहम् ॥ २८ ॥ तिसृणां शृणु माहात्म्यमेका स्वर्णप्रदा सदा । द्वितीया जयदा युद्धे, वैरिवर्ग्गविनाशिनी ॥ २९ ॥ तृतीया तु त्रिकालज्ञा, विद्यात्रयमिदं स्फुटम् । गृहाण साधनाहोमजपादिविधिसंयुतम् ॥ ३० ॥ कृतं सिद्धेन सांनिध्यं, तस्य विद्याप्रसाधने । सिद्धास्तिस्रोऽपि ता विद्या, ददुर्देव्यो वरत्रयम् ॥ ३१ ॥ सभाग्या यत्र गच्छन्ति,

भवेयुस्तत्र सम्पदः । अपुण्या यत्र गच्छन्त्यापदस्तत्र पदे पदे ॥ ३२ ॥ गुरुं नत्वा कुमारोऽथ, जगाद विहिताञ्जलिः । त्वत्प्रसादाद्विभो ! विद्याः, सिद्धा मे स्वल्पकालतः ॥ ३३ ॥ स्वामिन् ! कृत्वा प्रसादं मे, किञ्चिद्विप्राय दीयताम् । सिद्धोऽवादीदयोग्योऽयं, सर्व्वथा दृश्यते द्विजः ॥ ३४ ॥ हृदि दुष्टो मुखे मिष्टस्तस्य विद्या न दीयते । ईदृशोऽयमतो विद्या, दत्ताऽस्याऽनर्थकारिणी ॥ ३५ ॥ इत्युक्तेऽपि ततस्तस्य, कुमारेण बलादपि । दापिता प्रवरा विद्या, ह्युत्तमा उपकारिणः ॥ ३६ ॥ गुरुप्रयुक्तविधिना, विद्या तेनापि साधिता । परं सिद्धाप्यसिद्धावत्, साऽभूदशुचिचित्ततः ॥ ३७ ॥ अथानन्दपुरेऽगच्छत्, कुमारो द्विजसंयुतः । चन्द्रसेनाह्ववेश्यायाः, मन्दिरे तत्र संस्थितः ॥ ३८ ॥ सर्व्वं विद्याप्रभावेन, कार्यं कुर्यात् स नित्यशः । समीहितं सेवकानां, याचकानां च पूरयेत् ॥ ३९ ॥ द्विजो निष्फलविद्यः सन्, तां विद्यां च गुरुं हसन् । निंदां कुर्व्वन् कुमारस्य, गतोऽन्यत्र पुरे क्वचित् ॥ ४० ॥ चन्द्रोदयः स्थितस्तत्र, रञ्जयन् सद्गुणैर्जनान् । पुरेऽस्मिन् मतितिलको, मन्त्रीशोऽभूत् महर्द्धिकः ॥ ४१ ॥ श्रीनिवासः सुतस्तस्य, नामतो गुणतोऽपि च । चन्द्रोदयस्य सन्मैत्री, तेन सार्द्धमभूत्तदा ॥ ४२ ॥ अन्यदा तावुभौ मित्रे, वने देवकुले गतौ । क्रीडां कृत्वोपविष्टौ च, तत्र वार्त्तापरायणौ ॥ ४३ ॥ एतस्मिन् समये पुर्य्यां, जातः कोलाहलो महान् । तत्कारणावलोकार्थं, कुमारोऽप्रेषयच्चरान्[1] ॥ ४४ ॥ ते गत्वा तत्र चागत्य, प्रोचुश्चन्द्रोदयं प्रति । अस्मिन्नेव पुरे राजा, सूरसिंहोऽस्ति विक्रमी ॥ ४५ ॥ तस्य बन्धुमती पुत्री, प्राणेभ्योऽप्यतिवल्लभा । रूपेण निर्जिता देवी, गुणैर्लक्ष्मीर्यया जिता ॥ ४६ ॥ अधुना सा गवाक्षस्था, ज्ञायते नहि केनचित् । हृताऽकस्मात् ततः पुर्यामस्ति कोलाहलो

१ कुमारः प्रेषय० इति स्यात्.

महान् ॥ ४७ ॥ इति श्रुत्वा कुमारेण, चिन्तितं निजचेतसि । अहो हरति कः कन्यां, पुरेऽस्मिन्मयि संस्थिते ? ॥ ४८ ॥ ऊचेऽथ मयि चात्रस्थे, याति यत्तन्न सुन्दरम् । किन्तु किं क्रियते ? येन, न जानात्यत्र कोऽपि माम् ॥ ४९ ॥ नोपलक्षति मां कोऽपीत्युक्त्वाऽगान्मित्रयुक् पुरे । राज्ञाऽथ सूरसिंहेन, सर्व्वत्रान्वेषिता सुता ॥ ५० ॥ शुद्धिः कुत्रापि नो जाता, तस्या वार्तापि नो श्रुता । ततो महार्तितो भूपः, पतितो दुःखसागरे ॥ ५१ ॥ भूपदुःखमिति ज्ञात्वा, गत्वा मन्त्रिसुतोऽब्रवीत् । स्वामिन्नत्रास्ति विद्यावान्, कोऽपि वैदेशिको नरः ॥ ५२ ॥ अतीव ज्ञानवान् सोऽस्ति, निर्द्रव्यो दृश्यते पुनः । बहुद्रव्यव्ययं कुर्य्यात्, परदुःखं हरेत्सदा ॥ ५३ ॥ सर्व्वेभ्यो वाञ्छितं दत्ते, लीलावान् गुणसागरः । दाता भोक्ताऽतिवेत्ताऽसौ, सिद्धपुरुषसन्निभः ॥ ५४ ॥ तेन सार्द्धं ममाप्यस्ति, महामैत्री नराधिप ! । पृच्छ्यते सोऽपि कन्यार्थे, तच्छ्रुत्वा हर्षितो नृपः ॥ ५५ ॥ प्रधानपुरुषा राज्ञा, तस्याह्वानाय प्रेषिताः । शृङ्गारिते गजे तैश्च, कुमारोऽसौ चटापितः ॥ ५६ ॥ वादित्राद्युत्सवैः सार्द्धमानीतश्च नृपान्तिके । अभ्युत्थानालिङ्गनादि, बहुमानं नृपो ददौ ॥ ५७ ॥ पृष्टः कुशलवार्त्तां च, कुमारोऽसौ महीभुजा । तत्पार्श्वे श्रीनिवासेन, पृष्टं चेति नृपाज्ञया ॥ ५८ ॥ हे मित्र ! नन्दिनी राज्ञो, नाम्ना बन्धुमती वरा । न ज्ञायते हृता केन, तत्स्वरूपं प्ररूपय ॥ ५९ ॥ कुमारेण तदाऽचिन्ति, व्यसने पतितं नरम् । स्वशक्त्या नोद्धरेद् यः किं, स नरः कथ्यते नरः ? ॥ ६० ॥ उत्तमा इति विज्ञाय, स्वप्राणैरपि सर्व्वथा । कुर्युः परोपकारं हि, महापुण्यमिदं भुवि ॥ ६१ ॥ उत्तमोऽवसरं प्राप्य, तृणवज्जीवितं धनम् । परित्यज्य परत्राणं, करोत्येव न संशयः ॥ ६२ ॥ विचिन्त्यैवं कुमारेण, त्रिकालज्ञा सुरी स्मृता । ज्ञात्वा कन्यास्वरूपं च, स प्रोवाच नृपं प्रति ॥ ६३ ॥ कष्टसाध्यमिदं कार्यं, दृश्यते हे नराधिप ! । भवता प्रार्थना चापि, क्रियते



निष्फला कथम् ? ॥ ६४ ॥ अतः कन्यां दशादिनमध्येऽहं नानयामि चेत् । तर्हि वह्निप्रवेशो मे, प्रतिज्ञेति कृता मया ॥ ६५ ॥ ज्ञात्वा स्वकार्यसिद्धिं च, तत्सत्त्वं वीक्ष्य हर्षितः । सन्मानपूर्व्वकं भूपः, कुमारं विससर्ज तम् ॥ ६६ ॥ सम्यक् कन्यास्वरूपं तद्, ज्ञातुं चन्द्रोदयेन च । देवताराधनं चक्रे, प्रत्यक्षा सा सुरी जगौ ॥ ६७ ॥ हे कुमारेन्द्र ! वैताढ्ये, पुरे गंधसमृद्धने । प्रौढो मणिकिरीटोऽस्ति, विद्याधरशिरोमणिः ॥ ६८ ॥ कृत्वा नन्दीश्वरे यात्रां, वलितः स इहागतः । बन्धुमतीं सुरूपां च, दृष्ट्वा हृत्वा गतो द्रुतम् ॥ ६९ ॥ गंगातटे स धवलकूटाख्ये पर्व्वतेऽधुना । गत्वा करोति सामग्रीं, परिणेतुं कनीमिमाम् ॥७०॥ चन्द्रोदय ! त्वमुत्तिष्ठ, तत्रावाभ्यां हि गम्यते । ततोऽसौ देवतायुक्तः, श्वेतकूटगिरौ गतः ॥ ७१ ॥ कुर्व्वन् विवाहसामग्रीं, खेचरस्तेन हक्कितः । अरे दुष्ट ! किमारब्धं, किमज्ञान ! न लज्जसि ? ॥ ७२ ॥ चौरीभूय हृता कन्या, त्वया पापात्मना ततः । दीयते तेऽधुना शिक्षा, देवखेचरसाक्षिका ॥ ७३ ॥ एवं प्रोक्ते द्वयोर्युद्धं, सञ्जातं विषमं तदा । द्वाभ्यां विद्याबलेनैव, तत्र सैन्य-द्वयं कृतम् ॥ ७४ ॥ विद्यया जयदायिन्या, जितस्तेन स खेचरः । मानं मुक्त्वा कुमारस्य, पादयोः पतितो मुदा ॥ ७५ ॥ दिनान् कति गौरवेण, संस्थाप्य दशमे दिने । तेनानन्दपुरे प्रैषि, सोऽनेकखेचरान्वितः ॥ ७६ ॥ बन्धुमत्या समं तत्रागतं ज्ञात्वा कुमारकम् । प्रवेशः कारितस्तस्य, नगर्यां भूभुजोत्सवात् ॥ ७७ ॥ राजोचे किं वर्णयामि, ज्ञानं वा ते पराक्रमम् ? । अज्ञानात् खेचराद्येन, वालिताऽसौ सुता मम ॥ ७८ ॥ राज्ञा तं सद्वरं ज्ञात्वा, सुता तस्य विवाहिता । समयं गमयामास, सुखेन स कुमारराट् ॥ ७९ ॥

इतश्च पुष्पभद्राख्ये, पुरे श्रीपुष्पचूलराट् । ज्ञात्वा क्वचिद्गतं पुत्रं, हृदि दुःखं महद्दधौ ॥ ८० ॥ सुतस्यान्वेषणे राज्ञा,



प्रेषिता निजपूरुषाः । भ्रेमुस्ते पृथिवीपीठे, देशग्रामपुरादिषु ॥ ८१ ॥ तत्र ज्ञातः स तैर्यस्मात्, तद्गुणैर्वासिता मही । भाग्यादिसद्गुणो मर्त्यः, प्रच्छन्नः किं हि तिष्ठति ? ॥ ८२ ॥ चरेभ्यस्तत्र विज्ञाय, पुत्रं राज्ञाऽथ प्रेषिताः । तस्याह्वानाय मन्त्रीशास्ते चानन्दपुरे गताः ॥ ८३ ॥ तदानन्दपुरेशेन, सूरसिंहेन भूभुजा । गंतुकामाय जामात्रे, स्वीयं राज्यार्द्धमर्पितम् ॥ ८४ ॥ गजा दशसहस्राश्च, लक्षसङ्ख्यास्तुरङ्गमाः । षट्सहस्रा रथा दत्ताः, पञ्चलक्षाणि पायकाः ॥ ८५ ॥ भाण्डागाराद्धवित्तं च, दत्त्वा भूपतिना ततः । सुतासंयुक्तया ( जा ) माता, प्रेषितोऽथ स्वके पुरे ॥ ८६ ॥ विद्याधरशतैः सेव्यमानो मार्गे पदे पदे । गीयमानश्च गन्धर्वैः, स्तूयमानो महाबुधैः ॥ ८७ ॥ इत्थं महर्द्धियुक्तोऽसौ, पुष्पभद्रपुरे गतः । पुष्पचूलनरेन्द्रेण, सुतस्यागमनं श्रुतम् ॥ ८८ ॥ सम्मुखी निजसेना च, प्रेषिता बहुमानतः । महामहोत्सवात्तस्य, प्रवेशः कारितः पुरे ॥ ८९ ॥ राजोचे वत्स ! मन्येऽहं, तव देशान्तरे पुनः । यज्जातं गमनं नूनं, तदे ( दी ) दृग्वृद्धिहेतवे ॥ ९० ॥ पुत्रपुण्योदयं वीक्ष्य, भूपतिस्तेन संयुतः । प्रकुर्व्वन् धर्म्मकर्माणि, गमयामास वासरान् ॥ ९१ ॥ श्रीमद्विमलबोधाख्यो, ज्ञानी तत्रागतोऽन्यदा । तद्वन्दनाय भूपालो, जगाम सपरिच्छदः ॥ ९२ ॥ तिस्रः प्रदक्षिणा दत्त्वा, तं प्रणम्य मुनीश्वरम् । उपविश्य च सद्धर्मदेशनामशृणोदिति ॥ ९३ ॥ भो भव्या ! भवपाथोधेः, पारं पुण्यैरवाप्यते । तत् पुण्यं दुर्लभं लोके, सुखस्यैकनिबन्धनम् ॥ ९४ ॥ धर्मपराणां पुंसां जीवितमरणे उभे अपि श्रेष्ठे । इह जीवतां विवेकः सद्गतिगमनं मृतानां तु ॥ ९५ ॥ लांगलसहस्रभिन्ने, नास्ति धान्यं यथोषरे क्षेत्रे । तद्वज्जन्तूनामिह, पुण्येन विना कुतः सौख्यम् ? ॥ ९६ ॥ पुण्यप्रभावतो विघ्न-

१ बहु यशः इति प्र०

श्रेणिर्विघटते नृणाम् । शाकिनीवृन्दमध्येऽपि, विजयी धृष्टको यथा ॥ ९७ ॥ तथाहि—भरतेऽवन्तिदेशेऽस्ति, धारानाम्नी वरा पुरी । यां निरीक्ष्यालका गर्व्वं, सर्वं त्यजति तत्क्षणात् ॥ ९८ ॥ तत्रास्ति सधनो राजपुत्रः सूरो बलोद्धतः । धीरो धीमान् गुणाढ्यश्च, दाता भोक्ता भयोज्झितः ॥ ९९ ॥ तत्प्रिया चतुरा तन्वी, गूढमन्त्रा मदोध्धुरा । कटुवाक्यैर्निजं नाथं, सा दूमयति कोपना ॥ १०० ॥ सूरोऽथ चिन्तयामास, किं भार्यया तथा मम ? । त्यजेद्दुष्टमतिं भार्यां, विद्यां विघ्नप्रदां पुमान् ॥१॥ इति मत्वा द्वितीयायै, प्रियायै प्रयतोऽन्वहम् । विलोकयति स ग्रामं, नगरं नगरं प्रति ॥ २ ॥ अवन्त्यामस्ति वृद्धैका, यौवनस्थसुतान्विता । प्रार्थिता तत्सुता तेन, भव्यं वदति सा परम् ॥ ३ ॥ मद्युक्ता सुन्दरी पुत्री, तव गेहं समेष्यति । प्रतिपन्नं च सूरेण, कामार्त्तः किं करोति न ? ॥ ४ ॥ यतः—दिवा पश्यति नो घूकः, काको नक्तं न पश्यति । अपूर्व्वः कोऽपि कामान्धो, दिवानक्तं न पश्यति ॥ ५ ॥ सपत्नीभावतः पूर्व्वा, कलहायति दुःस्वरम् । अश्रान्तं कलहं ज्ञात्वा, पृथक् गेहेषु मोचिता ॥ ६ ॥ चतुरा सुन्दरीगेहे, गत्वा गालीर्ददाति सा । अन्योऽन्यं ते मदोन्मत्ते, मत्सरं हृदि बिभ्रतुः ॥ ७ ॥ दन्तादंति पदापादि, मुष्टामुष्टि भुजाभुजि । युध्येते मत्सराक्रान्ते, मुण्डामुण्डि नखानखि ॥ ८ ॥ सौभाग्यं कलहो लोके, बिभर्त्त्येको हि मत्सरः । यं सर्व्वा वनिता नित्यं, धारयन्ति निजे हृदि ॥ ९ ॥ यतः—चन्द्रे शीतं रवौ तेजो, जले नीचाऽनुयायिता । पुष्पे गन्धः तिले तैलं, सपत्न्योः कलहस्तथा ॥ ११० ॥ भर्तुर्भयान्न तिष्ठन्ति, कलहंत्यधिकाऽधिकम् । पाटके विस्तृता वार्त्ता, भार्याद्वयमनर्थकृत् ॥ ११ ॥ यतः—न वक्ति नो गृहाद्याति, नाप्नोत्यम्बुच्छटामपि । अक्षालितपदः शेते, भार्याद्वयवशो नरः ॥ १२ ॥ दशगव्यूतपर्य्यंते, हिंडोलाराभिधे पुरे । सुन्दरीं तां निजां भार्यां, श्वश्र्वा सह मुमोच सः ॥ १३ ॥ निश्चिन्तश्च-

तुरागेहे, भोगासक्तः स तस्थिवान् । तामन्यदा रहः प्राह, याम्यहं सुन्दरीगृहे ॥ १४ ॥ तयोक्तमार्यपुत्र ! त्वं, स्वैरं गत्वा स्ववेश्मनि । भोगभङ्गया च दानेन, प्रीतिरीत्या च प्रीणय ॥ १५ ॥ चतुरा चिन्तयामास, कुशलो यास्यति प्रियः । तत्र स्थास्यति मे नूनं, गतो भर्त्ता भवेत्तदा ॥ १६ ॥ मुदा मोदकपाथेयं, दत्त्वा दुश्चूर्णमिश्रितम् । सा प्रैषयद्यतः पापाः, स्त्रियः कूटकरण्डिकाः ॥ १७ ॥ यतः—अनृतं साहसं माया, मूर्खत्वमतिलोभता । अशौचं निर्दयत्वं च, स्त्रीणां दोषाः स्वभावजाः ॥ १८ ॥ चिञ्चिणी मध्यमार्गेऽस्ति, नदी प्रक्षाल्य तत्र सः । हस्तपादमुखादीनि, पाथेयं भोक्तुमुद्यतः ॥ १९ ॥ दुष्टचूर्ण-प्रभावेण, श्वानो भूत्वा निवर्त्तितः । बध्ध्वा च तं दृढैर्बन्धैस्तताड चतुरा चिरम् ॥ १२० ॥ श्वा करालो बभूवैष, मुक्तश्च कृपया तया । शतव्रणसमाकीर्णः, पङ्कैः परिवेष्टितः ॥ २१ ॥ शनैः शनैः पङ्गुर्भूत्वा, मासान्ते पुनरब्रवीत् । याम्यहं सुन्दरी-गेहे, पाथेयं प्रगुणीकुरु ॥ २२ ॥ तदा करम्भकं दुष्टं, दत्त्वाऽथ प्रेषितः तया । तन्नद्यां भोजनार्थं च, निविष्टोऽथागमज्जटी ॥ २३ ॥ स प्रार्थयत्यहोरात्रद्वयमाहारवर्जितः । देहि भोज्यं तेन दत्तं, भुक्त्वा स रासभोऽजनि ॥ २४ ॥ पूर्ववच्चतुरागेहं, चचाल भरटः खरः । प्रियाकर्त्तव्यवीक्षार्थं, सूरोऽपि पृष्ठतो गतः ॥ २५ ॥ सा खरबन्धनैर्बध्ध्वा, कशाघातैरपीडयत् । रारटीति भयाक्रान्तो, भग्नोऽस्मि घातजर्जरः ॥ २६ ॥ रे यासि सुन्दरीगेहं, यातयातेत्यभर्त्सयत् । म्रियमाणं तदा दृष्ट्वा, मुक्तो दृष्टश्च योगिराट् ॥ २७ ॥ जटाभारभराक्रान्तो, डक्काडमरमंडितः । भस्मभूषाकरालाक्षः, कौपीनकार्त्तिकान्वितः ॥ २८ ॥ लज्जिता चतुरा भीता, पतिता तस्य पादयोः । जटी वदति भद्रेऽयमाभानकस्त्वया कृतः ॥ २९ ॥ करंबं खादयेद्यो हि, विडम्बं सहते हि सः । दत्त्वा द्रव्यं तया भक्त्या, क्षमयित्वा विसर्जितः ॥ १३० ॥ सा चित्ते चिन्तया-

मास, चरितं ज्ञातवान् वेतिः । उपायैर्मारयाम्येनं, भिन्नस्नेहे कुतः सुखम् ? ॥ ३१ ॥ ततः स्नात्वाऽरण्ये गत्वा, कृत्वा गोमयमण्डलम् । श्वेतवस्त्राङ्किता धूपनैवेद्याद्यमढौकयत् ॥ ३२ ॥ सद्गुग्गलगुटीरक्तकणवीरैर्घृतान्वितैः । चकारैकाग्रचित्ता सा, होमं हुंकारभीषणा ॥ ३३ ॥ पर्य्यन्ताहुतिपर्य्यन्ते, प्रत्यक्षस्तक्षकोऽवदत् । भद्रे ! किमर्थमाराद्धस्तुष्टोऽहं ते वरं वृणु ॥ ३४ ॥ सोचे भक्षय भर्त्तारं, परपत्नीरतं मम । तक्षकः कथयत्येवं, षण्मासां(स्यं)ते मरिष्यति ॥ ३५ ॥ सरीसृपं विसृज्यैषा, स्वस्थाने चतुरा स्थिता । सर्व्वं विलोकयामास, सूरः कुड्यान्तरे स्थितः ॥ ३६ ॥ सोऽचिन्तयदहो स्त्रीणां, दुश्चरित्रं वचोऽतिगम् । यया विडम्बितः सूरः, श्वा खरो भरटोऽजनि ॥३७॥ यतः—स्रष्टा यन्न सृजेत् सृष्टौ, हरो ध्याने न दृष्टवान् । नोदरे वैष्णवे चास्ति, तत् कुर्व्वन्ति स्त्रियोऽदयाः ॥ ३८ ॥ इति ध्यायन् भयभ्रान्तो, हिंडोलारपुरे गतः । सशङ्कः सुन्दरीयुक्तो, भुंक्ते भोगान् दिवानिशम् ॥ ३९ ॥ विविधैः प्रीणनोपायैर्लास्यहास्यकलादिभिः । सुन्दरी प्रीणयत्येनं, सूरो हर्षं दधौ नहि ॥ १४० ॥ श्वश्वा रहः स्वजामाता, पृष्टो दुःखस्य कारणम् । सोऽवदत् श्वश्रू किं मातर्दुःखं मे महितो(लो)दितम् ॥ ४१ ॥ किं वृथा कथ्यते दुःखमसमर्थस्य देहिनः । दुर्बले मातृभुग्नौ वद(?)श्रुमोचः परस्परम् ॥ ४२ ॥ सा प्रोचे मेऽस्ति सामर्थ्यं, कारणं तत् प्रकाशय । व्याधेर्विज्ञानहीनस्य, प्रतीकाराक्रिया नहि ॥ ४३ ॥ तेनोक्तं मरणं भावि, षण्मासैर्मम तक्षकात् । पत्न्या वशीकृतः सोऽथ, करोत्येवं छलादपि ॥ ४४ ॥ मा भैषीः साऽऽह भद्रं ते, करिष्येऽहं सुतान्विता । स्वैरं भुङ्क्ष्व सुखं तिष्ठ, दुःशङ्कां हृदि मा कृथाः ॥ ४५ ॥ श्लथीचकार शल्यं न, पूर्वपत्न्या कदर्थितः । तथापि सह सुन्दर्यां, मृत्युभीरुः स तिष्ठति ॥ ४६ ॥ मात्रा पुत्र्याऽन्यदा गेहद्वारभित्त्योर्द्वयोरपि । लिखितौ बर्हिणौ रम्यौ, प्रत्यक्षाविव जङ्गमौ ॥ ४७ ॥ निरन्तरं

शुचीभूय, वेदिकामुपविश्य च । बर्हिणौ पूजयेते ते, ध्यानहोमपरायणे ॥४८॥ आगते दिवसे तस्मिन्, प्रत्यक्षं यमरूपिणि । मृत्युभीरुः प्रियां प्रोचे, मध्याह्ने मरणं ध्रुवम् ॥ ४९ ॥ साऽवदत् प्राणनाथ ! त्वं, धीरो भूत्वा विलोकय । शक्तिसामर्थ्यमस्माकं, चित्रकृद्विघ्नवारकम् ॥ १५० ॥ गृहं गोमययोगेन, कृत्वा रम्यं विशेषतः । स्थापयित्वासनं मध्ये, स्थापितः प्राणवल्लभः ॥ ५१ ॥ वाससी शुचिनी धृत्वा, करे कृत्वाऽक्षतानथ । उभे वेद्यां गते तावत्कृष्णसर्पं ददर्शतुः ( दद्दशतुः ) ॥ ५२ ॥ ताभ्यां तौ बर्हिणौ शीघ्रं, छण्टितौ मन्त्रिताक्षतैः । स ताभ्यां सहसा सर्पोऽर्द्धोर्द्धं कृत्वा धृतो मुखे ॥ ५३ ॥ शब्दं शिखण्डिनौ कृत्वा, रभसा नभसा गतौ । सूरः सविस्मयं दध्यावहो मन्त्रविजृम्भितम् ॥ ५४ ॥ स्नात्वा महोत्सवं कृत्वा, भुंक्ते भोगान् प्रियायुतः । ददौ दानं महर्षिभ्यः, पुनर्जन्म त्वमन्यत ॥ ५५ ॥ हिंडोलादागतान् लोकान्, चतुरा पृच्छति स्म सा । सूरः किं कुरुते लोका ?, दत्ते दानं वदन्ति ते ॥ ५६ ॥ मार्जारी सा सिता भूत्वा, गता मत्सरचेष्टिता । सुन्दरीभवने शब्दं, करोति कुटिलाशया ॥ ५७ ॥ माता पुत्री च तां दृष्ट्वा, भूत्वा कृष्णविडालिके । सम्मुखीभूय तत्सार्द्धं, युध्येते ते भृशं भृशम् ॥ ५८ ॥ उत्प्लुत्योत्प्लुत्य भूमौ ताः, पतन्ति मूर्च्छिता मिथः । क्रन्दन्ति क्रूरशब्देन, नखदन्तक्षताकुलाः ॥ ५९ ॥ चतुरामन्त्रचातुर्यात्, ते द्वे विधुरतां गते । निर्जित्य द्वे गता श्वेता, नर्त्तयित्वा तदङ्गणे ॥ १६० ॥ सूरः सर्वं विलोक्याशु, भयाक्रान्तोऽथ चोक्तवान् । किं युवां युध्यथोऽत्रैवं, मार्जारी का च पाण्डुरा ? ॥ ६१ ॥ तयैकया युवां द्वे किं, प्रघाताज्जर्जरीकृते ? क्व गता श्वेतवर्णा किं, युष्माकं वैरकारणम् ? ॥ ६२ ॥ सुन्दर्युवाच पत्नी ते, चतुरा सिद्धशाकिनी । अहं त्वाधुनिका जाता, साऽम्बा नरपलाशिनी ॥ ६३ ॥ सपत्नीवैरतः साऽत्रागता मन्त्रबलेन माम् । मारयितुं मातृयुक्तां, भर्त्तुरीर्ष्या हि दुस्सहा

॥ ६४ ॥ तत् श्रुत्वा शङ्कितः सूरश्चिन्तयामासिवानिति । शाकिनीनां समूहेऽहं, पतितः कूटकोटरे ॥ ६५ ॥ मासप्रान्ते पुनः प्राप्ता, मार्जारी चतुरा सिता । पूर्वरीत्या चिरं युध्ध्वा, कृष्णे म्लानत्वमागते ॥ ६६ ॥ गता सिता स्थिते कृष्णे, पृष्टा सूरेण कारणम् । सुन्दरी भाषते देवाऽस्मन्मन्त्रः स्तोकशक्तिदः ॥ ६७ ॥ अस्त्येकं कारणं प्रौढं, त्वदधीनं दयानिधे ! । यदि त्वमावयोः सक्तः, प्रपद्यस्व मयोदितम् ॥ ६८ ॥ प्रीत्या सूरेण ब्रूहीति, सोक्ता पुनरभाषत । श्वेता युध्यति तत्काले, त्वं ब्रूयाः प्रकटाक्षरम् ॥ ६९ ॥ लाहि कृष्णे ! सितामेतां, खाद खाद चणादपि । तवोक्त्याऽऽवां बलीभूय, मारयिष्याव एकिकाम् ॥ १७० ॥ तृतीयवारमायाता, श्वेता कृष्णे परस्परम् । युद्ध्यन्ते यावता भग्ने, कृष्णे सूरोऽब्रवीत्ततः ॥ ७१ ॥ लाहि लाहि चणात् खाद, कृष्णे ! श्वेतां तु मारय । इत्युक्ते म्रियमाणे द्वे, सितां जगृहतुर्गले ॥ ७२ ॥ मृतप्रायां सितां दृष्ट्वा, सूरश्चित्ते त्वचिन्तयत् । मत्पुण्ययोगतः श्वेता, मरिष्यति वचोवशात् ॥ ७३ ॥ मद्वाण्या चेन्मरिष्येते, कृष्णे अपि कदाचन । विलोकयेऽहमाश्चर्यं, विपरीतं वदामि तत् ॥ ७४ ॥ सूरः सुव्यक्तमाचष्ट, श्वेते ! मारय कृष्णके । वाक्छलात् श्वेतया कृष्णे, मृतरूपे कृते चणात् ॥ ७५ ॥ तिस्रोऽपि यावता जाता, मृता युद्धान्मिथो रयात् । सूरः प्रहर्षितो बाढं, गतो व्याधिर्निरौषधः ॥ ७६ ॥ अकृत्वोर्ध्वक्रियां सूरो, गतो भ्रातृगृहे भयात् । भ्राता न विद्यते गेहे, गतो ग्रामान्तरं स च ॥ ७७॥ भ्रातृजायां प्रणम्यैष, स्थितः सद्भक्तिकीलितः । देवरं दयिताहीनं, शुश्रूषति दिवानिशम् ॥ ७८ ॥ तच्छिरस्यन्यदा तैलं, क्षिपति स्वैरचेष्टिता । भ्रातृजाया तदायातो, हालिको रश्मिसंयुतः ॥ ७९ ॥ सोऽवदन्मात ! भिंढाख्यो, मृतो वामवृषोऽधुना । वापवेला प्रयात्येषा, बलीवर्दो विलोक्यते ॥ १८० ॥ सहसा

साऽक्षिपच्चूर्णं, मस्तके देवरस्य च । ककुद्मान् तत्क्षणाज्जज्ञे, यियासुरिव यः खि(ख)लम् ॥ ८१ ॥ तं गृहीत्वा गतः सीरी, सीरे तं वाहयेच्चिरम् । एकदा त्रुटिता नस्ता, जातः सूरः स्वरूपभाक् ॥ ८२ ॥ भयाच्छीघ्रं पलायिष्ट, पृष्ठौ धावति हालिकः । स गच्छन्मिलितो ज्येष्ठबान्धवस्यैकमार्गतः ॥ ८३ ॥ भ्रात्राऽथ भाषितः सूरः, क यासि व्रणजर्जरः ? । एहि बन्धो ! समालिङ्ग्य, सुखं तिष्ठ ममौकसि ॥ ८४ ॥ सोऽवदत्तव भार्या हि, शाकिनी याहि याहि भोः । तयाऽहं वृषभं कृत्वा, कामं कदर्थितोऽधुना ॥ ८५ ॥ भ्रातस्तद्याहि नाहं ते, गेहमेष्यामि निश्चितम् । वने यास्यामि सन्त्यत्र, राक्षस्यो वनिताः किल ॥ ८६ ॥ ब्रुवन्नेवं व्रजत्येष, महारण्ये पपात सः । पुष्टान् तृणभराक्रान्तान् षड् नरान् दृष्टवानथ ॥ ८७ ॥ निर्म्मानुषे वने पश्यन्, स तान् पप्रच्छ सादरम् । मणिमाणिक्यसौवर्णभूषणाः किं तृणावहाः ? ॥ ८८ ॥ ते वदन्त्यस्ति नार्य्येका, वृद्धा वार्द्धक्यबाधिता । भारकान् षट् तथा नीरं, नित्यमस्माभिरानयेत् ॥ ८९ ॥ यदृच्छया ददात्यन्नं, वसनं भूषणं परम् । जीर्णमञ्चकसुप्तापि, कल्पवल्लीव जङ्गमा ॥ १९० ॥ सूरः पुनरुवाचैषा, तृणाम्भोभिः करोति किम् ? । ते वदन्ति किमस्माकं, चर्चयाऽध्वग ! तेऽथवा ? ॥ ९१ ॥ सोऽचिन्तयदृशा तावत्, पश्यामि किल कौतुकम् । तैः सार्द्धमगमत्सूरो, धृत्वा शिरसि पूलकम् ॥ ९२ ॥ पृष्टस्तैरभिधानं किं ? धृष्टो नामेति सोऽवदत् । सप्तमः सोदरोऽस्माकमित्युक्त्वा ते गृहे गताः ॥ ९३ ॥ भारकान्न्यस्य गम्यन्ते (शीर्षाग्रे), जलैर्भृत्वा च कुण्डकम् । धृष्टेन सह सम्प्राप्ता, वृद्धापार्श्वे प्रहर्षिताः ॥ ९४ ॥ वृद्धया भाषिता वत्साः !, सप्तमः कोऽत्र दुर्ब्बलः ? । ते वदन्ति वने दृष्टः, प्रापितो मातुरन्तिके ॥ ९५ ॥ जरती सादरं धृष्टं, पृष्ठे न्यस्य करद्वयम् । ऊचे

१ ऽजासुरिव जले खिलम्. प्र०

वत्स ! वरं दृष्टो, दुर्बलो दैवतोऽधुना ॥ १९६ ॥ यदृच्छया चिरं पुत्र !, भुंक्ष्व तिष्ठ गृहे मम । सोऽवदम्मम्ब ? तिष्ठामि, जन्मदुःखी तवान्तिके ॥ १९७ ॥ स्नात्वेच्छाभोजनं भुक्त्वा, तिष्ठन्सोप व्यचिन्तयत् । क याति तृणपानीयं, कथमायान्ति सम्पदः ? ॥ १९८ ॥ रात्रौ विलोकयाम्यद्य, कारणं चित्रकृन्नृणाम् । पल्यङ्के हंसतूल्यां स, सुप्तो जागर्त्ति कैतवात् ॥ १९९ ॥ अर्द्धरात्रे व्यतिक्रान्ते, वृद्धा प्राह स्फुटाक्षरम् । सुप्तो जागर्ति कोऽत्राऽत्रेत्युक्ते कोऽपि न जल्पति ॥ २०० ॥ तज्जीर्णमश्वकं मुक्त्वा, सा गताङ्गणके क्षणात् । भूमौ निपत्य जाताऽथ, वडवा दुष्टमन्त्रतः ॥ १ ॥ सर्वांस्तृणान् ( सर्वं तृणं ) भक्षयित्वा, जलं पीत्वाऽखिलं क्षणात् । जाता रूपवती नारी, सर्व्वाभरणभूषिता ॥ २ ॥ निर्गता याति सा शीघ्रं, सूरस्तत्पृष्ठगोऽभवत् । विवेश विवरं योगियोगिनीशतसङ्कुलम् ॥ ३ ॥ योगिन्यः सम्मुखी-भूय, मातृवत् सांगतां गताः[1] । आलिङ्ग्य ताः पतन्ति स्म, जरत्याः पादपद्मयोः ॥ ४ ॥ उपवेश्यासने रम्ये, पर्युपास्या-धिकाऽधिकम् । वदन्ति मातृके ! चैताः, किं नानीता ( तो ) बलिस्त्वया ? ॥ ५ ॥ डोलत्करी बभाषे ताः, स्वस्था भवथ वत्सिकाः । आनयाम्यहं हत्वैतान्, पुरुषान् भवतीकृते ॥ ६ ॥ तावदेकः समायातः, सप्तमो दुर्बलः पुमान् । चतुर्दशीं प्रतीक्षध्वं, पुष्टिं श्रयति सोऽपि च ॥ ७ ॥ मद्यमांसाद्यमासाद्य, निवृत्ता सा विसर्जिता । धृष्टो व्यलोकयत्सर्व्वं, स्तम्भस्यान्त-रितो विभीः ॥ ८ ॥ जरत्या रूपमाधाय, सुप्ता सीकोत्तरी पुनः । शाकिन्या हि जनो जग्धो, विश्वास्य विश्वगोचरे ॥ ९ ॥ सचिन्तो धृष्टको दध्यौ, शाकिन्याः सङ्कटे पुनः । पतितो यामि यत्राहं, शाकिन्यास्तत्र सम्भवः ॥ २१० ॥ ध्यायतीत्युद्गते

[1] मातृष्वसांगतां गताः प्र०

सूर्ये, गताः सर्व्वे तृणार्थिनः । धृष्टेन रात्रिवृत्तान्तो, मूलतः कथितोऽखिलः ॥ ११ ॥ ते प्रोचुर्न कदा मातुः, कुचिह्नं किञ्चिदीक्षितम् । स प्रोचे याम्यहं यूयं, तिष्ठंतु सुखलालसाः ॥ १२ ॥ ते विमृश्य वदन्ति स्म, रात्रिमेकां विलम्बय । दर्शयास्माकं वृत्तं तज्जरत्या विश्वघातकम् ॥ १३ ॥ आगता भारकान् लात्वा, विधाय निखिलं च ते । समालोच्य ततः सर्व्वे, सुप्ताः कपटनिद्रया ॥ १४ ॥ पूर्व्ववत् प्रकटं वृत्तं, वृद्धायाश्च विलोकितम् । तेऽन्योऽन्यं विमृशंति स्म, किं कर्त्तव्यमतः परम् ॥ १५ ॥ धृष्टोऽथ कथयत्येवं, मार्यैषा निद्रयान्विता । द्वाभ्यां पादौ करौ द्वाभ्यां, धृतौ चैकेन मस्तकम् ॥ १६ ॥ द्वाभ्यां तु लकुटैर्बाढं, कुट्टिता खण्डशः कृता । व्यापाद्य जरतीं सर्व्वे, चलिताः पूर्व्वदिक्पथम् ॥ १७ ॥ यान्त्यरण्ये नदीशिप्रातटे रम्यं महापुरम् । पश्यन्ति प्रौढिमप्राप्तं, त्रैलोक्यतिलकोपमम् ॥ १८ ॥ आम्रजंबीरनारङ्गपुन्नागकुटजद्रुमाः । तमालतालहिंतालकुलारामा मनोहराः ॥ १९ ॥ वापीकूपतटाकानि, मठः सत्रगृहाणि च । स्वर्गतुल्याः प्रदेशाश्च, दृश्यन्ते यत्र पत्तने ॥ २२० ॥ शालः शोभति सौवर्णः, कपिशीर्षकरम्बितः । विस्फुरद्गोपुरद्वारध्वजतोरणबन्धुरः ॥ २१ ॥ त्रिपणं विततं वस्तु, सकलं यत्र दृश्यते । विष्णूदरे यथा दृष्टं, मार्कण्डेन महर्षिणा ॥ २२ ॥ सौधश्रेणिर्विमानानां, पङ्क्तीवात्र विभाति च । यज्जिनालयमूर्द्धस्थैर्हेमकुम्भैः सुशोभितम् ॥ २३ ॥ दृष्ट्वाऽथ सर्व्वतः शून्यं, राजमार्ग्गे गता नराः । विलोक्याश्वपदानि द्राग्, राज्ञः सदनमन्वगुः ॥ २४ ॥ ततस्तत्र गतास्तेऽग्रे, वेश्म पश्यन्ति बन्धुरम् । सहस्रशिखरं शुभ्रं, कैलासाचलसोदरम् ॥ २५ ॥ प्रविष्टाः पुरतो द्वारं, प्रवालदलमण्डितम् । सशङ्कपादपातास्ते, नीलभूमौ जलभ्रमात् ॥ २६ ॥ दृष्टा पुरो निविष्टा च, वृद्धिका छिन्ननासिका । स्थूलदेहप्रभापूरपूरिताऽशेषदिग्मुखा ॥ २७ ॥ नता दत्ते

साऽऽशिषं भोः !, सुभार्यासङ्गमोऽस्तु वः । रम्याभिः सप्तकन्याभिरर्थ(र्थि)दानेन ते वृताः ॥ २८ ॥ धृष्टोऽप्यग्रेश्व(स)रीभूय,
पप्रच्छ जरतीं रयात् । मातः ! शून्यपुरस्थाः का, इमाः कन्याः सुरीसमाः ? ॥ २९ ॥ सा प्रोचे वत्स ! सप्तापि, विद्याधरसुता
इमाः । आसां वरकृते पृष्टो, मया नैमित्तिकोऽन्यदा ॥ २३० ॥ अत्रस्थानां हि सप्तानां, वराप्तिस्तेन भाषिता । इहानीता मया
तस्माद्, यूयमप्यागता वराः ॥ ३१ ॥ उद्वाह्येमाः सुखं भोगा, भुज्यन्तां पुण्यसञ्चिताः । सौधापवरका रम्या, सौरभ्यद्रव्य-
वासिताः ॥ ३२ ॥ हंसतूलीपरिच्छिन्नाः, पल्यङ्का हृदयंगमाः । चित्रशाला इमा वत्सा !, वातायनमनोहराः ॥ ३३ ॥ अमी
सप्त तुरङ्गाश्च, मनोवेगानुगामिनः । मुक्त्वा पूर्व्वदिशं यूयं, विचरध्वं यदृच्छया ॥ ३४ ॥ कृतोद्वाहाः समं ताभिस्तेऽनङ्गसुख-
लालसाः । रमन्ते रङ्गशालासु, दोगुन्दुकसुरा इव ॥ ३५ ॥ कदा चक्रुर्जलक्रीडां, पुष्पावचयमुत्तमम् । बद्धदोलाश्च खेलन्ति,
चम्पकद्रुमशाखिषु ॥ ३६ ॥ पूर्व्वा निवारिता रन्तुं, कारणं किमहो महत् ? । मिथस्ते विमृशन्त्येवं, रक्ष्यमाणे स्पृहा भवेत्
॥ ३७ ॥ एकदा तुरगारूढा, गताः पूर्व्वदिशं प्रगे । आयोजनं नृशीर्षैश्च, व्याप्तां भूमिं व्यलोकयन् ॥ ३८ ॥ परस्परं प्रज-
ल्पन्ति, किमेतदद्भुतं क्षितौ । न दृष्टं न श्रुतं क्वापि ?, कस्याग्रे कथ्यतेऽथवा ? ॥ ३९ ॥ अथाश्वखुरघातेन, हता तुंब्य-
हसद्भयात् । अरे तुरङ्गमा रामाः, पूर्व्वमस्माभिराद्दताः ॥ २४० ॥ धृष्टोऽथ धैर्यमालम्ब्य, पृष्टवान् वरदे स्फुटे (वद रे स्फुटम्)
के तेऽश्वा वनिताः काश्च, कथं भूः शीर्षसङ्कुला ? ॥ ४१ ॥ तुंबी ब्रूते नकटयेषा, सिद्धशीकोतरी यया । विप्रतार्य हयैः स्त्रीभि-
रसमदाद्या नरा हताः ॥ ४२ ॥ मांसाशन्या पुरीलोको, भक्षितः सकलस्तया । ततो योजनमात्रेयं, शिरोभिर्मण्डिता मही
॥ ४३ ॥ तद्यात यात रे शीघ्रं, यावत्सा न विलोकयेत् । प्रेरयन्तोऽश्ववर्ग्गं ते, भयात्तस्याः पलायिताः ॥ ४४ ॥ मध्याह्न-

समये यावन्नायातास्ते निजे गृहे । नार्य्यः सम्भूय ताः प्रोचुर्मातर्नायान्ति ते नराः ॥ ४५ ॥ नकटी चङ्गमादाय, सौधशृङ्गोपरि स्थिता । व्रजतो वायुवेगेन, हयान् वीक्ष्येत्युवाच सा ॥ ४६ ॥ तुरगान् वालयध्वं भोश्चङ्गं चाताडयत् दृढम् । चङ्गशब्देन तेनाथ, वालितास्ते तुरङ्गमाः ॥ ४७ ॥ झंपां प्रदातुकामास्तु, कीलिता न पतन्ति ते । आः किं भविष्यत्यस्माकं, जल्पन्तीति मिथो भयात् ॥ ४८ ॥ आगताः सौधमध्यं ते, नकट्या भणिता रुषा । मां विमुच्य क्व यातारः, पापा विश्वस्तघातकाः ! ॥ ४९ ॥ सा कर्त्तिकां करे कृत्वा, यमजिह्वाकरालिताम् । धृष्टं दुष्टा कचैर्धृत्वा, पातयामास भूतले ॥ २५० ॥ हृदये न्यस्य पादौ सा, भाषते स्म खराक्षरम् । त्वं चलितोऽश्वमारुह्य, त्वां हन्मि प्रथमं ततः ॥ ५१ ॥ दैवतं त्वं स्मराभीष्टं, न भविष्यस्यतः परम् । तथेति भाषितो निर्भीः, सहास्यं वदति स्म सः ॥ ५२ ॥ एकं पृच्छामि निर्नासे !, कौतुकं हृदये मम । कोऽयं वीराग्रणीर्धीरो, यश्छेत्ता तव नासिकां ॥ ५३ ॥ शान्तकोपाऽथ निर्नासा, हर्षबाष्पप्रपूरिता । धृष्टं विमुच्य सा प्राह, वत्स ! स्वच्छमनाः शृणु ॥ ५४ ॥ मनोरमपुरं नाम, स्वर्गतुल्यं महीतले । राजा मणिरथो राज्ञी, मणिमाला बभूव च ॥ ५५ ॥ तनयाः सप्त सञ्जाता, शौर्यधैर्यगुणान्विताः । राजपत्न्युदरे प्रान्तेऽष्टमो गर्भः सुदुर्वहः ॥ ५६ ॥ जाताऽहं पुत्रिका पञ्चधात्रीभिः परिपालिता । पित्रा दत्त्वा कलाचार्ये, कृता शास्त्राब्धिपारगा ॥ ५७ ॥ यौवनावसरे जाता, मन्त्रे मे महती स्पृहा । वशाकर्षणसन्तापस्तम्भविद्वेषमोहने ॥ ५८ ॥ राक्षसी शाकिनी विद्येच्छारूपं मारणं बलम् । सूर्यचन्द्रमसां मन्त्रं पातालविवरे गतिः ॥ ५९ ॥ आकाशगामिनी विद्या, बलिर्मन्त्रप्रसाधनम् । मृतसञ्जीविनी विद्या, मयैवं शिक्षिताः कलाः ॥२६०॥ त्रिभिर्विशेषकम्–

इतश्च गिरिवैताढ्ये, इन्द्रो राजाऽस्ति येन च । रम्भादिरचनायोगादिन्द्रराज्यस्थितिः कृता ॥ ६१ ॥ विद्ययाऽऽकाशगामिन्या, वैताढ्येऽहं गताऽन्यदा । रम्भातिलोत्तमामुख्यैरारब्धं तत्र नर्त्तनम् ॥ ६२ ॥ एकदा नागता रम्भा, तद्रूपा चाहमागता । नृत्येन रञ्जितः शक्रः, प्रोचे रम्भे ! वरं वृणु ॥ ६३ ॥ मया स्वरूपधारिण्या, याचितं त्वं धवो भव । प्रतिपन्नमिदं देवराजेन विधियोगतः ॥ ६४ ॥ प्रत्यहं यामि वैताढ्ये, रमामीन्द्रेण संयुता । मम प्रीतिकरः पुष्पबटुकोऽप्यन्यदाऽवदत् ॥ ६५ ॥ सत्प्रिये ! नय मां सार्थे, पश्यामि तव नाटकम् । वारितोऽपि मया बाढं, प्रार्थयति पुनः पुनः ॥ ६६ ॥ मुकुटान्तर्मया क्षिप्तः, कीररूपं विधाय सः । वैताढ्येऽहं गता चेन्द्रपुरतो नर्त्तिता भृशम् ॥ ६७ ॥ लयमध्ये मया हस्तः, क्षिप्तः शिरसि भारतः । भग्नतालां बिडौजा मां, ब्रूते भग्नं च नाटकम् ॥ ६८ ॥ इति शापो ददे कोपाच्छिन्नासा भव याहि रे । त्वं क्षितौ चात्र नागम्यं, फलं भुङ्क्ष्व प्रमादजम् ॥ ६९ ॥ मयाऽथ चरणौ नत्वा, विज्ञप्तः स प्रसीद मे । देवेन्द्र ! मम शापस्यानुग्रहो भविता कदा ? ॥ २७० ॥ सोऽवादीन्नरमांसं त्वां, खादन्तीं कोऽपि साहसी । पृच्छेत्ते नासिका केन, छिन्ना शापद्वयस्तदा ॥ ७१ ॥ तद्दिनान्नगरीलोको, भक्षितः सकलो मया । रामांतुरङ्गमैरेतैर्विप्रतार्य निशेपतः ॥ ७२ ॥ योजनायाममात्रोऽयं, तुम्बीनां च महोत्करः । कृतो मया न केनेदं, पृष्टं वत्स ! त्वया विना ॥ ७३ ॥ पृच्छया तव नासा मे, नवाऽऽयाता नरोत्तम ! । अथेन्द्रशापमुक्तिश्च, बभूव त्वं चिरञ्जय ॥ ७४ ॥ वत्सेदं नगरं रम्यं, भार्या एताः सुरूपिकाः । तुरङ्गमा वरं सौधं, राज्यं कुरुत मत्पदे ॥ ७५ ॥ लोकपूर्णं पुरं कृत्वा, विद्यया सा निदे पदे । धृष्टं संस्थाप्य वैताढ्ये, गता तस्थौ च पूर्ववत् ॥ ७६ ॥

मनोरमपुरे धृष्टः, साम्राज्यं कुरुते बली । षट् तानि पूर्वमित्राणि, मण्डलीकपदेऽभवन् ॥ ७७ ॥ साम्राज्यं कुर्व्वतस्तस्यो-द्यानपालोऽन्यदाऽवदत् । अनेकशिष्यसंयुक्ताः सूरीशा आगता वने ॥ ७८ ॥ राजाऽथ सर्व्वसामग्र्या, चलितो वन्दितुं गुरून् । सूत्रिताभिगमः सूरिं, वन्दित्वोपाविशत्पुरः ॥ ७९ ॥ सूरिर्गम्भीरया वाचा, बभाषे धर्ममार्हतम् । धर्मिष्ठाः पुरुषा ज्ञेयाः, शेषाः कापुरुषा नराः ॥२८०॥ लब्ध्वा यो मानुषं जन्म, न धर्मं कुरुतेऽधमः । स रोहणगिरिं प्राप्तश्चिन्तारत्नं समुज्झति ॥ ८१ ॥ देशनान्तेऽथ तैः पृष्टमभूम प्राग्भवे वयम् । कीदृशा ? येन शाकिन्याः, संकटे पतिता विभो ! ॥ ८२ ॥

सूरिणा भाषितं वत्साः !, श्रूयतां यदि कौतुकम् । प्रतिष्ठानपुरे पूर्व्वमासीद्विप्रो हरिश्रमः ॥ ८३ ॥ मन्त्रयन्त्रप्रयोगैः स, शाकिनीनां कदर्थकः । मण्डलं मण्डते यत्र, गायनास्तत्र षण्नराः ॥ ८४ ॥ एकदा मुनिनैकेन, धर्म्ममार्गेण बोधिताः । चिरं धर्म्मरता अन्ते, कृतसंलेखना मृताः ॥ ८५ ॥ विप्रो मृत्वाऽभवत् सूरः, षडेते मण्डलाधिपाः । पतिताः शाकिनीगृहे ॥ ८६ ॥ पश्चाद् यद्विहितो धर्म्मस्तस्मात्त्वं सूरभूपतिः । पूर्व्वाचीर्णं हि यत्कर्म्म, तद्भोज्यं बलवान् विधिः ॥ ८७ ॥ श्रुत्वा पूर्व्वभवं स्वकीयमनघं प्राप्ताश्च जातिस्मृतिं, पुत्रान्न्यस्य निजे पदे सुचरणं सम्प्राप्य नाकं गताः । तद्भो भव्यजना ! मनागपि कदा पुण्ये प्रमादो नहि, कार्यो येन सदा भवन्ति सुलभाः स्वर्गापवर्गश्रियः ॥ ८८ ॥

इति पुण्योपदेशे धृष्टकनरकथा ॥

अहो उत्तमसत्त्वानां, धर्म्म एव महाधनम् । सञ्चयन्ति सदा दक्षास्तमेव निश्चलं भुवि ॥ ८९ ॥ जननी जनको भ्राता, पुत्रो मित्रं कलत्रमितरो वा । दूरीभवन्ति निधने, जीवस्य शुभाशुभं शरणम् ॥ २९० ॥ यत्परलोकविरुद्धं, यल्लज्जा-

करमिहैव जनमध्ये । अन्त्यावस्थायामपि, तदकरणीयं न करणीयम् ॥ ९१ ॥ इत्थं निशम्य पुण्योपदेशनां लघुकर्म्मकाः । प्रबुद्धास्तत्र चारित्रं, गृह्णन्ति स जितस्मराः ॥ ९२ ॥ के के सुश्राद्धधर्म्मं च, द्वादशव्रतबन्धुरम् । सम्यक्त्वं केऽपि शीलं च, जगृहुर्गृहमेधिनः ॥ ९३ ॥ पुष्पचूलो नृपः प्राप, वैराग्यं गुरुवाक्यतः । संसारानित्यतां ध्यायन्, शीघ्रं स्वगृहमागतः ॥ ९४ ॥ सुतश्चन्द्रोदयो राज्ये, स्थापितो मंहदाग्रहात्[1] । राज्यचिंता प्रदत्ता च, समर्थानां सुमन्त्रिणाम् ॥ ९५ ॥ राजा गत्वा गुरोः पार्श्वे, राज्ञ्या कामाख्यया युतः । व्रतं चादाय सद्ध्यानतपोज्ञानपरोऽभवत् ॥ ९६ ॥ दीक्षां प्रपाल्य कर्म्माणि, ज्वालयित्वा तपोऽग्निना । संप्राप्तकेवलज्ञानो, जगाम परमं पदम् ॥ ९७ ॥ ततश्चन्द्रोदयो राजा, चन्द्रोदयसमुज्ज्वलः । न्यायेन पालयामास, राज्यं प्राज्यं सुरेशवत् ॥ ९८ ॥ अथान्यदा गवाक्षस्थः, स्वपुरं स व्यलोकयत् । कः सुखी कोऽत्र दुःखी वा, चिन्तयन्निति चेतसि ॥ ९९ ॥ इति चिन्तापरो यावन्निरीक्षति[2] निजप्रजाः । दृष्टिमार्गेऽपतत्तावत्, पूर्वं परिचितो द्विजः ॥ ३०० ॥ भूतार्त्तग्रथिलीभूतो, धूलिधूसरदेहभृत् । चित्तभ्रमेण चोन्मत्तः, स्थितः सोऽस्ति चतुष्पथे ॥ १ ॥ कौतुकात् मिलिताः पौराः, पाषाणैर्घ्नन्ति केऽपि तम् । केचिद्धसन्ति निन्दन्ति, स एवं विह्वलीकृतः ॥ २ ॥ इत्थं तं दुरवस्थायां, पतितं वीक्ष्य भूपतिः । दध्यौ विद्याप्रकोपेनाभवन्मे मित्रमीदृशम् ॥ ३ ॥ बलात्कारेण प्रागस्य, मया विद्या प्रदापिता । कुपात्रे पतिता सा हि, विधिना नैव साधिता ॥ ४ ॥ पुनर्निन्दा कृताऽनेन, विद्यास्य कुपिता ततः । तेनासौ ग्रथिलो जातः, कर्म लोप्तुं न शक्यते ॥ ५ ॥ स्वपार्श्वे द्विजमाकार्याकार्याऽथो मन्त्रवादिनः ।

१ महाग्रहात् इति स्यात्, २ परस्मैपदं चिन्त्यम्.

स सञ्जीकारितो राज्ञा, ह्युत्तमा उपकारिणः ॥ ६ ॥ यतः— वचनं प्रसादसदनं, सदयं चित्तं सुधामुचो वाचः । करणं परोपकरणं, येषां तेषां न ते निन्द्याः ॥ ७ ॥ बन्धुमत्यादिराज्ञीभिरनेकाभिः समन्वितः । बुभोज विविधान् भोगान्, राजा पुण्यप्रभावतः ॥८॥ कियत्यपि गते काले, श्रीनिवासः सुतोऽभवत् । क्रमेण वर्द्धितः सोऽपि, कलासु कुशलोऽजनि ॥९॥ राज्यः सप्त सहस्राणि, तस्य भूपस्य जज्ञिरे । द्विगुणाश्चेटिका जाताः, पुत्राश्चान्येऽपि भूरिशः ॥३१०॥ महाप्रभुत्वमाप्यासौ, न्यायेनापालयत्प्रजाः । न कोऽपि दूम्यते तत्र, कोऽपि नैव च दण्ड्यते ॥ ११ ॥ फलन्ति च सदा वृक्षा, न दौस्थ्यं न च विग्रहः । अकाले नैव मृत्युश्च, न द्रोहो नैव वञ्चनम् ॥१२॥ न चेतयो न मारिश्च, न वैरं व्याधयोऽपि न । न दुःखं न भयं लोके, तस्मिन् राज्ञि सुधर्मिणि ॥ १३ ॥ न कूटं भाषते कोऽपि, हिंसां कोऽपि करोति न । व्यसनानि च सप्तापि, तत्यजुर्यत्र मानवाः ॥ १४ ॥ दुष्कर्मभीरवो यत्र, जना आचारसुन्दराः । अनाचारविमुक्ता हि, यथा राजा तथा प्रजाः ॥ १५ ॥ यस्य पादयुगं भक्त्या, सेवंते नरखेचराः । गायन्ति स्म गुणग्रामं, किन्नरीकिन्नरादयः ॥ १६ ॥ दीनेभ्यो याचकेभ्यश्च, यो ददौ दानमीप्सितम् । पात्रेभ्यो दत्तवान् भक्त्या, धर्म्मकर्म्माणि चाकरोत् ॥ १७ ॥ अर्धचक्रीव सर्व्वर्द्धिः, कोशदेशपुरादिषु । त्रिखण्डाधिपतित्वं स, पालयामास पुण्यतः ॥ १८ ॥ कियत्काले गते सोऽथ, रात्रौ जागरितोऽन्यदा । दध्यौ याति वृथा जन्मारण्यजा मालती यथा ॥ १९ ॥ न गृहीतं फलं किञ्चिन्न कृतं सुकृतं ततः । जातोऽयं नृभवः कूपच्छायावन्निष्फलो मम ॥ ३२० ॥ इत्यादिभावनां कृत्वा, स्मृत्वा च परमेष्ठिनः । कृत्वा प्रभातकृत्यानि, सभायां संस्थितो नृपः ॥ २१ ॥ सभामुख्यजनाः सर्व्वे, तदा तत्र समागताः । भूपं प्रणम्य सद्भक्त्या, यथास्थानमुपाविशन् ॥ २२ ॥ नृपः सभ्यान्प्रति प्रोचे, भो भोः किं वित्थ वा नहि ।

संसार एष कीदृत्तः, किं स्थिरो वा किमस्थिरः ? ॥ २३ ॥ तेऽपि प्रोचुर्न जानीमः, स्वामिंस्त्वं वेत्सि तद्वद । ततो नृपः पुनः प्राह, भो भोः शृणुत सज्जनाः ! ॥ २४ ॥ अस्थिराणि शरीराणि, विभवोऽप्यस्थिरः पुनः । जीवितं निश्चलं नैव, संसारो ह्ययमस्थिरः ॥ २५ ॥ संसारनाटके जीवा, उत्तमाधममध्यमाः । नटवत् कर्म्मसंयोगान्नानारूपैर्भवन्त्यहो ॥ २६ ॥ कषायैर्विषयैर्योगैः, प्रमादैरङ्गिभिः सदा । रौद्रार्त्ताभ्यामज्ञत्वैश्चात्र कर्म्म प्रबध्यते ॥ २७ ॥ क्षितितलशयनं वा प्रासभैक्षाशनं वा, सहजपरिभवो वा नीचदुर्भाषितं वा । महति फलविशेषे नित्यमभ्युद्यतानां, न तु मनसि शरीरे खेदमुत्पादयन्ति ॥ २८ ॥ सौधोत्सङ्गे श्मशाने स्तुतिशपनविधौ कर्दमे कुङ्कुमे वा, पल्यङ्के कण्टकाग्रे दृषदि शशिमणौ चर्म्मचीनांशुके वा । शीर्णाङ्गे दिव्यनार्यामसमशमवशाद् यस्य चित्तं विकल्पै-र्नालीढं सोऽयमेकः कलयति कुशलः साम्यलीलाविलासम् ॥ २९ ॥ स्वगुणं परदोषञ्च, वक्तुं जल्पयितुं परम् । अर्थिनश्च निराकर्तुं, सतां जिह्वा जडायते ॥ ३३० ॥ आचारहीनं न पुनन्ति वेदा, यद्यप्यधीताः सह षड्भिरङ्गैः । एकाक्षरज्ञो हि विधानयुक्तः, परं पदं याति विधूतपापः ॥ ३१ ॥ हयाः कस्य गजाः कस्य, कस्य देशोऽथवा पुरम् । बहीरूपमिदं सर्व्वमात्मीयो धर्म्म एव हि ॥ ३२ ॥ इत्थं विचार्य विबुधैः, पुण्यमेवात्मनो हितम् । कर्त्तव्यं हि परं शेषं, ज्ञेयं संसारबन्धनम् ॥ ३३ ॥ इत्युदित्वा जगौ राजा, मूलामात्यं प्रति स्फुटम् । अहो संसारवासान्मे, साम्प्रतं विरतं मनः ॥ ३४ ॥ तेन त्वं पृच्छ्यसे पूर्व्वं, श्रीनिवासः श्रियो गृहम् । मत्पदे स्थाप्यते पुत्रो, राज्यभारधरः क्षमः ॥ ३५ ॥ तस्मिन्नेव क्षणे तत्र, वनपालो व्यजिज्ञपत् । स्वामिन् ! भुवनचन्द्राह्वोऽत्रागतः केवली गुरुः ॥ ३६ ॥ इत्थं श्रुत्वा सहर्षोऽभूद्भूपतिर्भूरिदानतः । तं सन्तोष्य ततश्चित्ते, चिन्तयामास भावतः ॥ ३७ ॥ अहो दुग्धे सिताक्षोदो, घेवरे घृतमोचनम् । इष्टं वैद्योपदिष्टञ्च, क्षुधिते

भक्ष्यमागतम् ॥ ३८ ॥ अग्रे मे विरतं चित्तं, जातो गुर्वागमः पुनः । प्रस्तावे वाञ्छितो वृत्तः, पुष्पितः फलितः पुनः ॥ ३९ ॥ एवं विचार्य भूपोऽसौ, गुरुवन्दनहेतवे । परिवारयुतोऽचालीत्, सम्प्राप्तः सूरिसन्निधौ ॥३४०॥ तिस्रः प्रदक्षिणा दत्त्वा, प्रणम्य विधिना गुरुम् । उपविश्य यथास्थानं, शुश्रावेति स देशनाम् ॥ ४१ ॥ सुमाणुसत्तं सुकुलं सुरूवं, सोहग्गमारुग्गमतुच्छमाऊ। रिद्धिं समिद्धिं च पहुत्तकित्ती, पुण्णप्पसाएण लहन्ति सत्ता ॥ ४२ ॥ सुस्वादं शुभगन्धिमोदकदधिक्षीरेक्षुशाल्योदनं, द्राक्षापर्पटिकासिताघृतयुतास्वर्गःसमानादिकम् । भुक्तं सत्सहसैव यत्र मलतां सम्पद्यते सर्वत–स्तं कायं सकलाशुचिं शुचिमहो मोहान्धिता मन्वते ॥ ४३ ॥ दहति मदनवह्निर्मानसं तावदेव, भ्रमयति तनुभाजां कुग्रहस्तावदेव । छलयति गुरुतृष्णाराक्षसी तावदेव, स्फुरति हृदि जिनोक्तो वाक्यमन्त्रो न यावत् ॥ ४४ ॥ श्रीर्जलतरङ्गतरला, सन्ध्यारागस्वरूपमपि रूपम् । ध्वजपटचपलञ्च बलं, तडिल्लतातुल्यमेवायुः ॥ ४५ ॥ इत्थं विज्ञाय विदुषा, कर्त्तव्यः सफलो भवः । प्रमादं दूरतो मुक्त्वा, कार्यो धर्म्मेषु चोद्यमः ॥ ४६ ॥ सप्तक्षेत्र्यां यथाशक्ति, व्ययं कुर्व्वन्ति चोत्तमाः । सप्तव्यसनेषु रता, दृश्यन्ते चाधमा नराः ॥ ४७ ॥ देशनान्ते नरेन्द्रोऽसौ, पप्रच्छ रचिताञ्जलिः । कामाक्षा साऽभवद्राज्ञी, मयि कामवशा कथम् ? ॥ ४८ ॥ सूरिरूचे भ्रातृजाया, याऽभूत्पूर्व्वभवे तव । सरागा त्वयि सा जाता, परं न प्राप वाञ्छितम् ॥ ४९ ॥ मृता च स्मितवाक्येन, पत्यौ चात्यन्तरागिणी । रौद्रार्तध्यानयोगेन, प्रथमे नरके गता ॥ ३५० ॥ आयुः सम्पूर्य सा तत्र, भवं भ्रान्त्वाऽभवत् द्विजी । बालत्वे विधवा जाता, ततः साऽभूत्तपस्विनी ॥ ५१ ॥ कृत्वा तपश्चिरं मृत्वा, कामाक्षाऽभून्नृपप्रिया । प्राग्भवस्नेहयोगेन, सा जाता त्वयि रागिणी ॥ ५२ ॥ विषयार्थं तयोक्तानि, वचनानि बहून्यपि । भवेऽस्मिन्मुक्तिगामी त्वं, तेन शीलं न खण्डितम् ॥५३॥

एवं पूर्वभवं श्रुत्वा, प्राप्य जातिस्मृतिं पुनः । सूरिं नत्वा नृपश्चन्द्रोदयः स्वगृहमागतः ॥ ५४ ॥ अन्यदा भावयन् भावं, चित्ते राजा व्यचिन्तयत् । विमानमानमुत्तुङ्गं, कारयामि जिनालयम् ॥ ५५ ॥ यैर्नरैर्निजवित्तस्य, मानेन जिनमन्दिरम् । कारितं चोध्धृतस्तेन, निजात्मा भवसागरात् ॥ ५६ ॥ आकारिता घना राज्ञा, शिल्पिनः कुशलास्ततः । वास्तुविद्यासु विख्याता, विश्वकर्म्मोपमा गुणैः ॥ ५७ ॥ मुहूर्त्तेऽथ शुभे शुद्धभूपीठे च सुदैवते । उन्नतं चोत्तमं पीठं, स्थापितं स्थिरलग्नके ॥ ५८ ॥ क्रोशार्द्धपृथुलः क्रोश-दीर्घः क्रोशसमुन्नतः । चतुर्द्वारो हेममयः, प्रासादस्तत्र निर्मितः ॥ ५९ ॥ तस्यैव परितो देवकुलिकाश्च द्विसप्ततिः । कारिता मूलभवनसदृशाः श्रेणिसंस्थिताः ॥ ३६० ॥ प्रासादोऽयं भुवि ख्यातस्त्रैलोक्यविजयाभिधः। प्रतिष्ठा तस्य बिम्बानामपि सङ्घेन निर्मिता ॥ ६१ ॥ सुवर्णरत्नरूप्याद्यैः, प्रतिमास्तत्र कारिताः । प्रतिमा चादिनाथस्य, मूलस्थाने निवेशिता ॥ ६२ ॥ भूतभाविवर्तमानजिनानां तत्र मूर्त्तयः । स्थापिताश्च विदेहानां, वर्त्तमानार्हतामपि ॥ ६३ ॥ शाश्वतानां जिनानाञ्च, चतस्रः प्रतिमास्तथा । प्रतिमा यक्षयक्षिण्योः, स्थापिता अपरा अपि ॥ ६४ ॥ सत्साधार्म्मिकवात्सल्यं, कृत्वा वस्त्रादिकार्प्पणम् । कृतं राज्ञाऽथ सर्व्वेषामित्यभूदुत्सवो महान् ॥ ६५ ॥ कृतं हि जन्मसाफल्यं, चन्द्रोदयमहीभुजा । स्वनाम लिखितं शुभ्रं, निश्चलं चन्द्रमण्डले ॥ ६६ ॥ इत्यादिधर्म्मकर्म्माणि, कुर्व्वन् श्रीजिनशासनम् । दीपयामास भूपालः, कृपालुः सर्वजन्तुषु ॥ ६७ ॥ अन्यदा सन्निधौ तस्य, प्रासादस्य नरेश्वरः । पौषधं धर्मशालायां, जग्राह स्थिरमानसः ॥ ६८ ॥ तदैवं भावयामास, भावनां भवनाशनीम् । धनयौवनराज्यानि, न स्थिराणि शरीरिणाम् ॥ ६९ ॥ जरामृत्युमहादुःखैः, पीडितानां हि देहिनाम् । चातुर्गतिकसंसारे, शरणं नास्ति कुत्रचित् ॥ ३७० ॥ न याति कतमां योनिं, कतमां वा न मुञ्चति ।

नटवन्नृत्यति प्राणी, विषमे भवनाटके ॥ ७१ ॥ एकोऽहं नास्ति मे कश्चिन्नाहमन्यस्य कस्यचित् । एक उत्पद्यते जन्तुरेक एव निपद्यते ॥ ७२ ॥ एको मे शाश्वतो ह्यात्मा, ज्ञानदर्शनसंयुतः । शेषा भावा हि मे बाह्याः, सर्व्वे संयोगलक्षणाः ॥ ७३ ॥ भावना द्वादशाप्येवं, तस्य भावयतः सतः । अवधिज्ञानमुत्पेदे, जगद्भावप्रकाशकम् ॥ ७४ ॥ विशेषात् ज्ञातवान् भूपः, संसारासारतां तदा । पौषधं पारयामास, प्रभाते विधिना सुधीः ॥ ७५ ॥ राज्ये संस्थापयामास, श्रीनिवाससुतं नृपः । गुरोर्भवनचन्द्रस्य, पार्श्वे संयममग्रहीत् ॥ ७६ ॥ गुर्व्वादेशात् श्रुतज्ञोऽसावेकाकिप्रतिमां धरन् । विहरन् भूतलेऽन्येद्युरेकस्मिन्नगरे ययौ ॥ ७७ ॥ उष्णकाले च मध्याह्ने, सहन्नातापनां भृशम् । तत्र प्रेतवने साधुः, कायोत्सर्गे स्थितः स्थिरम् ॥ ७८ ॥ असुरेण पूर्व्ववैरादुपसर्ग्गाः कृता इति । दन्ताभ्यां गजरूपेण, हतश्चोत्पाटितस्ततः ॥ ७९ ॥ पक्षिणा वज्रतुण्डेन, चञ्च्वा च घातितो मुनिः । यक्षराक्षससर्प्पाणां, रौद्ररूपैश्च भापितः ॥ ३८० ॥ एवं स क्षुभ्यमाणोऽपि, ध्यानान्न क्षुभितो मुनिः । दृष्ट्वा तस्य क्षमां देवः, स्वयं तत्याज मत्सरम् ॥ ८१ ॥ उपदेशान्मुनेर्देवः, प्रतिबोधमवाप सः । सम्प्राप शुद्धसम्यक्त्वं, भवे कस्मिन् गतः शिवम् ॥ ८२ ॥ चन्द्रोदयोऽपि राजर्षिः, कृत्वा ध्यानं सुभावतः । अवाप केवलज्ञानं, ययौ च निर्वृतिं क्रमात् ॥ ८३ ॥ यथौषधं भावनाभिर्भावितं गुणकृद्भवेत् । भावयुक्तस्तथा धर्मः, प्राणिनां फलदो मतः ॥ ८४ ॥ यतः—दानशीलतपःसम्पद्, भावेन भजते फलम् । स्वादः प्रादुर्भवेद्भोज्ये, किं नाम लवणं विना ? ॥ ८५ ॥ सम्प्राप केवलज्ञानं, भरतो भावनाबलात् । मृगोऽपि च ययौ स्वर्ग्गं, बलदेवर्षिसंयुतः ॥ ८६ ॥ एवं चतुर्थशाखायां, भावोपरि कथा मया । चन्द्रोदयनरेशस्य, प्रोक्ता वैराग्यकारिणी ॥ ३८७ ॥

# जाहेर खबर.

श्री जैनधर्मप्रसारक सभा तरफथी प्रसिद्ध थयेला संस्कृत ग्रंथोमांथी हाल मळता ग्रंथोनी विगत.

१ श्री परिशिष्ट पर्व ( स्थविरावळी चरित्र ) .... १–०–०
२ श्री विजयचंद केवळी चरित्र ( मागधी गाथाबंध ) ०-१२-०
३ श्रीवासुपूज्य चरित्र. श्रीवर्धमानसूरि कृत. पद्यबंध. २–८–०
४ श्री प्रमेयरत्नकोष ग्रंथ मूळ. .... .... ०–४–०
५ श्री पउमचरियम् मागधी गाथाबंध (प्राचीन) २–८–०
६ श्रीउपदेशप्रासाद भा.३ जो स्थंभ १३ थी १८ मूळ ३–०–०
७ " भा. ४ थो " १८ थी २४ " ४–०–०
८ श्रीउपदेशसप्ततिका (नव्या) मोटी टीकायुक्त. २–८–०
९ श्री बृहत् क्षेत्रसमास मोटी टीका सहित. .... ३–४–०
१० श्री कर्पूर प्रकर मोटी टीका सहित. ... ३–४–०
११ श्री हैम लघुप्रक्रिया व्याकरण (आवृत्ति २ जी) १–८–०
१२ श्री योगशास्त्र आखो ग्रंथ. प्रकाश. १२ ( श्री हेमचंद्राचार्य कृत ) .... .... ३–०–०

उपरांत श्री आगमोदय समिति, शेठ देवचंद लालभाइ पुस्तकोद्धार फंड, श्री जैन आत्मानंद सभा विगेरेनी तरफथी छपायेला ग्रंथो पण आ सभामांथी मळी शकशे. पोष्टेज जुदुं समजवुं.

श्री जैनधर्म प्रसारक सभा—भावनगर.

इत्यागमगच्छे श्रीपूज्यपरमगुरुश्रीश्रीश्रीमुनिसिंहसूरितत्पट्टे श्रीशीलरत्नसूरितत्पट्टांबुजदिनकरश्रीश्रीआणंदप्रभसूरितत्पट्टविभूषणनिर्जितसमस्तदूषणश्रीमुनिरत्नसूरिः तत्पट्टालङ्कारश्रीश्रीश्रीआणन्दरत्नसूरीश्वरविजयवान्राज्ये श्रीमत्श्रीमहोपाध्यायश्रीमुनिसागरतत्शिष्यपण्डितश्रीउदयधर्मगणिविरचिते पं०–श्रीधर्मदेवगणिशोधिते इत्यागमोक्ते महाकाव्ये श्रीवीरदेशनायां धर्म्मकल्पद्रुमे चतुर्थभावनाशाखायां चन्द्रोदयनृपाख्याने अष्टमः पल्लवः चतुर्थवैराग्यशाखा च समाप्ता ॥ ८ ॥

इत्यागमिकोदयधर्मगणिरचितो धर्मकल्पद्रुमः समाप्तः ॥

